ति भावः। 'नेत्याह' इत्यस्य तात्पर्यमाह—भिन्नेति। सामान्यवत्त्वे सति श्रोत्रग्राह्यः शब्दः; अनेवंविधो द्रव्यादिर्न शब्द इत्यर्थः। गुणाश्रयत्वेन तस्य द्रव्यत्वमित्याशयेनाह—अपित्विति। ननु 'शब्दानुशासनम्' इत्यत्र शब्दपदेन लक्षणया द्रव्यमेव विवक्षितमत आह—यदि चेति। लक्षणायां मानाभावात्, अग्रे शब्दानुशासनविरोधाच्चेति भावः। ननु श्रोत्रग्राह्यत्वाभावादेव क्रियादीनां शब्दत्वनिरासात् किमुत्तरभाष्येण? अत आह—अनेनैवेति। ननु द्रव्यस्य वाच्यत्वाद्वाच्यवाचकयोरभेदशङ्का कथंचिद्युक्ता; गुणक्रिययोरवाच्यत्वात्कथं तच्छङ्का? अत आह—शब्दार्थे चेति। 'व्यक्तिः पदार्थः' इति पक्षे जातेरप्यवाच्यत्वादेषामिति बहुवचनोपपत्तिः। पूर्ववदिति; भिन्नेन्द्रियग्राह्यत्वान्न गुणादिरपि शब्द इत्यर्थः। इङ्गितादीनामपुनरुक्तमर्थमाह—अत्रेति। ननु शुक्लादिपदानां गुणविशिष्टद्रव्यपरत्वात् पौनरुक्त्यम्; गुणानामित्ययुक्तं चात आह—द्रव्यस्येति। गुणमात्रवाचकानां मतुपा द्रव्यपरत्वं वाच्यम्; तन्न विवक्षितमित्यर्थः। भिन्नेष्वित्यादिना 'नित्यमेकमनेकानुगतं सामान्यम्' इति लक्षणमुक्तमित्याह—भिन्नेष्विति। सामान्यभूतमिति अनेकवृत्तित्वमुक्तम्। यद्वा भिन्नेष्वित्याश्रयबहुत्वोक्त्यानेकव्यक्तिवृत्तित्वमुक्तम्। इवार्थभूतशब्दस्यानन्वयं परिहरति–सत्ताख्यमिति। पदार्थमुक्त्वा वाक्यार्थमाह–सामान्यमिवेति। भूतशब्दस्येवार्थत्वमाह—भूतशब्द इति। द्रव्यादिषु निरस्तेषु श्रोत्रग्राह्यस्यैव शब्दत्वनिश्चयात् प्रश्नायोगमाशङ्क्याह—द्रव्यादिष्विति; वर्णानां वा शब्दत्वं तद्व्यङ्ग्यस्फोटस्य वेति संदिहानः पृच्छतीत्यर्थः। ननु वैयाकरणानां स्फोटः शब्दः; 'येन' इत्यादिभाष्येण स नोक्त इत्याशङ्क्य 'संप्रत्ययः' इत्यनेनोक्त इत्याह—वैयाकरणा इति। नन्वर्थप्रत्यायकानां वर्णानामुच्चार्यमाणानामनेकत्वाद्येनेत्येकवचनानुपपत्तिः; अत आह—वैयाकरणा इति—इति केचित्; तच्चिन्त्यम्, वनादिवत् समुदायेऽप्येकवचनोपपत्तेः। परेषां पदवाक्ययोरपि वर्णात्मकत्वात् वर्णव्यतिरिक्तस्येत्युभयव्यवच्छेदः। पदवाक्ये पदस्फोटवाक्यस्फोटपरे। तत्सिद्धये वर्णानां वाचकत्वं निराह—वर्णानामिति। वर्णानां वाचकत्वे एकैकस्य वाचकत्वं समुदायस्य वा; नाद्य इत्याह—द्वितीयेत्यादिना प्रत्येकमित्यन्तेन। द्वितीये उत्पन्नानां समुदायोऽभिव्यक्तानां वा; आद्ये क्रमेण युगपद्वा; नाद्यः, आशुविनाशिनां क्रमिकाणां समुदायासंभवादित्यभिप्रेत्य द्वितीयं निराह—उत्पत्तिपक्ष इति। अभिव्यक्तिरपि क्रमिकत्वान्न समुदाय इत्याह—अभिव्यक्तीति। ननु क्रमेणोत्पन्नानामभिव्यक्तानां वा क्रमेणानुभूतानां युगपत्स्मृतानां वाचकत्वं संभविष्यतीत्यत आह—एकेति। सर इति; न च क्रमभेदादर्थभेदः, वाचकवर्णतौल्ये पदक्रमभेदेऽपि वाक्यार्थैक्यवत् वर्णक्रमभेदेऽपि पदार्थैक्यप्रसङ्गादिति भावः। ननु स्फोटस्य नित्यत्वात् सर्वदा पदार्थप्रत्यायकत्वं स्यादत आह—नादेति; वर्णेत्यर्थः। ननु भवन्मतेऽपि 'सरः' 'रसः' इत्यादावर्थभेदाभावस्य प्रसङ्गः, व्यञ्जकैक्येन व्यङ्ग्यैक्यात्; न च क्रमभेदाद्व्यञ्जकभेदः, वाचकत्वेऽपि तुल्यत्वादत आह—विस्तरेणेति। अयं भावः—'एकं पदम्' इति प्रतीतिः स्फोटे मानम्। न चैकार्थप्रतीतिजननोपाधिरियं प्रतीतिर्वर्णेष्वपि संभवतीति वाच्यम्, विकल्पासहत्वात्। स एकार्थः किमविशिष्टः? उत विशिष्टः? आद्ये 'राजपुरुषः' इत्यादौ विशिष्टार्थप्रतिपादके 'एकं पदम्' इति धीर्न स्यात्; द्वितीये 'घटः' इत्यादौ तथा धीर्न स्यात्, वाक्येऽपि पदबुद्धिप्रसङ्गाच्च। नच अविशिष्टानेकार्थसंसर्गविशिष्टैकार्थप्रतीतिजनकत्वमेव वाक्यत्वप्रयोजकं, तद्भिन्नैकार्थप्रतिपादकत्वं पदत्व-

प्रयोजकमिति न वाक्ये पदबुद्धिरिति वाच्यम्, राजपुरुषादेरपि वाक्यत्वप्रसङ्गात्। न चेष्टापत्तिः, समस्तपदे सर्वेषामबाधितपदव्यवहारात्। वाक्यैकवाक्यस्यैकवाक्यत्वं च न स्यात्, तत्र संसृष्टार्थानां संसर्गान्तरबोधकत्वेनाविशिष्टानेकार्थत्युक्तोपाधेरभावात्, अखण्डार्थवाक्ये उक्तोपाधेरभावाच्च। एवमेकस्मृतिविषयवर्णानां पदत्वं वाक्येऽतिप्रसक्तम्। एकार्थप्रतिपादकत्वे सतीति विशेषणे विशेष्यवैयर्थ्यम्, विशेषणस्योक्तदोषग्रस्तत्वाच्च। तस्मात् 'एकं पदम्, एकं वाक्यम्' इत्यबाधितप्रतीत्या स्फोटद्वयसिद्धिरिति।

नवीनास्तु—अनेकेषां वर्णानां वाचकत्वकल्पनामपेक्ष्यैकस्फोटस्य वाचकत्वकल्पने लाघवात् स्फोटं कल्पयन्ति। तथाहि—अनित्यवर्णपक्षे संसृष्टेष्वनेकेषु वर्णेषु व्यासज्यवृत्ति वाचकत्वं न संभवति, निराश्रयधर्मायोगात्। नित्यवर्णपक्षे तदभिव्यञ्जकध्वनीनां स्फोटाभिव्यञ्जकत्वकल्पनमेव लघु, क्रमविशेषयुक्तध्वनिविशेषव्यङ्ग्यानेकवर्णानां वाचकत्वकल्पनापेक्षया तद्व्यङ्ग्यैकस्फोटस्य वाचकत्वकल्पनस्य लघुत्वात्; परेषां समवायसामान्याभावकल्पनवत्। एकाक्षरस्थलेऽपि अनेकाक्षरस्थल इव स्फोटसिद्धः। एक एव तत्तद्ध्वनिविशेषव्यङ्ग्यः सन्नर्थविशेषप्रतीतिजनकः पदस्फोटः। पदार्थस्मरणसहकृतो वाक्यार्थप्रतीतिजनको वाक्यस्फोट इत्युच्यते। यथैकमेव चैतन्यं तत्तद्विषयप्रकाशकं तत्तज्ज्ञानमित्युच्य इत्यपि वदन्ति। न चैतादृशशब्दस्यानुशासनात् प्रतिज्ञाविरोध इति वाच्यम्, व्यञ्जकानुशासनद्वारा व्यङ्ग्यस्यैवानुशासनात्; यथा लिपिप्रतिपादनमक्षरप्रतिपादनोपाय इति तत्प्रतिपादनेनाक्षरस्यैव प्रतिपादनं तद्वत्; यथा लिपिष्वेवाक्षरबुद्धिरविवेकिनां तथा व्यञ्जकेष्वेव पदादिबुद्धिरिति। ननूच्चारितत्वं ताल्वोष्ठपुटव्यापारजन्यत्वम्; तच्च नित्यस्फोटस्य न संभवत्यत आह—<u>प्रकाशितेनेति</u>; अभिव्यञ्जकैरित्यर्थः। [1]न चैकेनैवाभिव्यक्तावितरवैयर्थ्यम्, निरवयवस्यैकदेशाभिव्यक्त्यसंभवेऽपीतरेषां स्फुटतराभिव्यक्त्यर्थत्वात् अनेकरेखात्मकलिपेरक्षराभिव्यञ्जकत्ववत् अनेकध्वनिव्यङ्ग्यत्वोपपत्तेश्च।

अपसिद्धान्तं परिहरति—<u>अन्यत्रेति</u>; "तपरस्तत्कालस्य" इत्यादावित्यर्थः। <u>न दोष इति</u>; प्रकृतिप्रत्ययादिविभागेन व्यञ्जकानुशासनस्यैव व्यङ्ग्यानुशासनरूपत्वाद्व्यञ्जक एवात्रशब्दशब्देन विवक्षित इत्युक्तमिति भावः। भाष्ये "प्रतीतपदार्थकः" इत्यनन्तरं शब्दशब्द इति शेषः। तदुपपादयति भाष्ये—<u>लोक इति</u>। ननु 'शब्दं कुर्वन्' इत्यस्य 'शब्दकार्ययम्' इत्यनेन संबन्धेऽपि 'शब्दं कुरु, माकार्षीः' इति विधिप्रतिषेधाभ्यां न संबन्धः, तयोः शब्दमकुर्वत्येव पुरुषे प्रवर्तनादिति शङ्कते—<u>विधीति</u>। <u>अस्य</u>; 'ध्वनिं कुर्वन्' इत्यस्य। <u>उच्यत इति</u>; इष्टशब्दं कुर्वन्विरामनिवृत्तये 'शब्दं कुरु' इत्युच्यते; अनिष्टशब्दं कुर्वन्विरामार्थं 'मा कर्षीः' इत्युच्यत इति विधिभिः संबन्धो युक्त इत्यर्थः।

**<u>भा.</u>—कानि पुनः शब्दानुशासनस्य प्रयोजनानि?। रक्षोहागमलघ्वसंदेहाः प्रयोजनम्। रक्षार्थं वेदानामध्येयं व्याकरणम्; लोपागमवर्णविकारज्ञो हि सम्यग्वेदान्परिपालयिष्यतीति। ऊहः खल्वपि—न सर्वैर्लिङ्गैर्न सर्वाभिर्विभक्तिभिर्वेदे मन्त्रा निगदिताः। ते**

---

[1] न चैकेनाभिव्यञ्जकेनैव G.

**चावश्यं यज्ञगतेन पुरुषेण यथायथं विपरिणमयितव्याः। तान्नावैयाकरणः शक्नोति यथायथं विपरिणमयितुम्। तस्मादध्येयं व्याकरणम्। आगमः खल्वपि—"ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च" इति। प्रधानं च षट्स्वङ्गेषु व्याकरणम्। प्रधाने कृतो यत्नः फलवान्भवति। लघ्वर्थं चाध्येयं व्याकरणम्। ब्राह्मणेनावश्यं शब्दा ज्ञेया इति। न चान्तरेण व्याकरणं लघुनोपायेन शब्दाः शक्या ज्ञातुम्। असंदेहार्थं चाध्येयं व्याकरणम्। याज्ञिकाः पठन्ति—"स्थूलपृषतीमाग्निवारुणीमनड्वाहीमालभेत" इति। तस्यां संदेहः-स्थूला चासौ पृषती च स्थूलपृषती; स्थूलानि पृषन्ति यस्याः सेयं स्थूलपृषतीति। तां नावैयाकरणः स्वरतोऽध्यवस्यति—यदि पूर्वपदप्रकृतिस्वरत्वं ततो बहुव्रीहिः, अथ समासान्तोदात्तत्वं ततस्तत्पुरुष इति।**

प्र.—कानि पुनरिति; किं संध्योपासनादिवद्व्याकरणाध्ययनं नित्यं कर्माथ काम्यमिति प्रश्नः। पारम्पर्येण पुरुषार्थसाधनतामस्याह—रक्षेति। लोके लोपाद्यदृष्टं वेदे दृष्ट्वा भ्राम्येदवैयाकरणः; वैयाकरणस्तु न भ्राम्यति, वेदार्थं चाध्यवस्यति। तत्र लोपागमयोरुदाहरणं "देवा अदुह्र" इति। दुहेर्लङो झस्यादादेशे कृते "लोपस्त आत्मनेपदेषु" (पा. ७-१-४१) इति तलोपः; "बहुलं छन्दसि" (पा. ७-१-८) इति रुटि सति रूपमेतत्। वर्णविकारो यथा—"उद्ग्राभं च निग्राभं च" इति। "हृग्रहोर्भश्छन्दसि" "हस्येति वक्तव्यम्" (वा. ३-१-८४) इति हस्य भकारः। "उदि ग्रहः" (पा. ३-३-३५) इत्यत्र "उद्ग्राभनिग्राभौ च च्छन्दसि स्रुगुद्यमननिपातनयोः" इति वचनादुन्निपूर्वाद्ग्रहेर्घञ्। ऊहः खल्वपीति; इह यस्मिन्यागे इतिकर्तव्यतोपदिष्टा यागान्तरेणोपजीव्यते सा प्रकृतिः। येनोपजीव्यते सा विकृतिः। "प्रकृतिवद्विकृतिः कर्तव्या" इति मीमांसकैर्व्यवस्थापिते न्याये प्रकृतिप्रत्ययादीनामूहं वैयाकरणः सम्यग्विजानाति। तत्राग्नेर्मन्त्रोऽस्ति—"अग्नये त्वा जुष्टं निर्वपामि" इति। तत्र "सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः" इति सौर्ये चरौ मन्त्र ऊह्यते—'सूर्याय त्वा जुष्टं निर्वपामि' इति। विस्तरेण तु भर्तृहरिणा प्रदर्शित ऊहः। आगम इति; आगमः प्रयोजकः प्रवर्तकः। नित्यकर्मतां व्याकरणाध्ययनस्य दर्शयति। प्रयोजनशब्देन च फलं प्रयो-

जकश्चोच्यते । निष्कारण इति । दृष्टं कारणमनपेक्ष्येत्यर्थः । प्रधानं चेति ; पदपदार्थावगमस्य व्याकरणनिमित्तत्वात्तन्मूलत्वाद्वाक्यवाक्यार्थावसायस्येति भावः । लघ्वर्थमिति ; लाघवेन शब्दज्ञानमस्य प्रयोजनम् । ब्राह्मणेनेति ; अध्यापनं ब्राह्मणस्य वृत्तिः ; न चाशब्दज्ञं तमुपशिक्ष्यन्ति शिष्या इति । असंदेहार्थमिति ; संदेहस्य प्रागभावोऽत्र द्रष्टव्यः, न तु प्रध्वंसाभावः ; न हि वैयाकरणस्य संशय उत्पद्य विनश्यति, इतरस्यैव तदुत्पादात् । स्वरत इति ; पूर्वपदप्रकृतिस्वराद्बहुव्रीह्यर्थावसाय इत्यर्थः ।

उ.—ननु 'शब्दानुशासनम्' इत्यनेन प्रयोजनस्योक्तत्वात् प्रयोजनविषयप्रश्नानुपपत्तिरत आह—किमिति । नित्यत्वे अकरणे प्रत्यवायपरिहाराय प्रवृत्त्युपपत्तेः किमपि प्रयोजनं न वक्तव्यम् ; काम्यत्वे तु वक्तव्यम् । यद्यपि दृष्टद्वारा अङ्गत्वादेव काम्यत्वं सिद्धं, तथापि तदेव प्रश्नपूर्वकं व्यवस्थाप्यत इति भावः । उक्तार्थे भाष्यमेवं योज्यम्— पुनः शब्दश्चिदर्थे ; काक्वा निषेधकोटिलाभः ; तथा चास्य कानिचित् प्रयोजनानि सन्ति न वेति । असत्त्वे नित्यत्वम् ; सत्त्वे काम्यत्वम् । प्रयोजनपदस्य प्रयोजकपरतया अस्य किंचित् प्रयोजकं मूलप्रमाणमस्ति, न वेत्यपि प्रश्नो विवक्षितः । अस्मिन् प्रश्ने प्रदीपोऽप्येवं योज्यः—व्याकरणस्याध्ययनं यस्मान्मूलप्रमाणात् तत्किं नित्यवेदरूपम् ; अथ काम्यं कर्म ; कामनयेच्छामात्रेण तस्य करणं न तु मूलप्रमाणं किंचिदस्तीति । व्याकरणस्याध्ययनमिति न्यासपाठे कर्मणि ल्युट् । अधीयमानं नित्यं वेदरूपमेव विवक्षितम् ; सन्ध्योपासनादेरिव वेदमूलत्वमस्ति, उत नास्तीति पर्यवसितार्थः । काम्यपक्षः सिद्धान्त इत्याह—पारंपर्येणेति । वेदरक्षादिद्वारेत्यर्थः । द्वितीयप्रश्नोत्तराभिप्रायवर्णने तु पुरुषार्थो धर्मः, तत्साधनतां तत्प्रमाणतां पारंपर्येण वेदव्यवधानेनेति योज्यम् ; "साधुभिर्भाषितव्यम्" इति विध्यपेक्षितसाधुत्वस्य व्याकरणप्रमाणकत्वात् धर्मे स्मृतिवद्व्याकरणस्यापि वेदमूलकतया प्रामाण्यं युक्तमिति भावः । भाष्ये प्रयोजनमिति प्रयोजकफलपराणां पञ्चानामपि प्रयोजनशब्दानां नानालिङ्गानां "नपुंसकमनपुंसकेन" (पा. १-२-६९.)—इत्येकशेषैकवद्भावविधानान्निर्देशः । ननु शिष्याचार्यसंबन्ध एव महान्वेदरक्षाहेतुः, किं व्याकरणेन ? अत आह—लोक इति । न चोपदेशमात्रेण भ्रमनिवृत्तिः, उपदेष्टुर्भ्रमप्रमादसंभवात् ; अत एव भाष्ये "सम्यक्" इत्युक्तम् । न च वैदिकपदवाक्यक्रमाव्यापकत्वं दोषाय, तस्य व्याकरणालक्ष्यत्वात् ; स्वलक्ष्यसाधुत्वाव्यापकत्वाभावात् । पदार्थज्ञानद्वारा वेदार्थज्ञानहेतुत्वेनापि वेदरक्षार्थतामाह—वेदार्थं चेति । अदादेशे ; "आत्मनेपदेष्वनतः" (पा. ७-१-५.) इत्यनेन । लोप इति ; "क्त्वापिच्छन्दसि" (पा. ७-१-३८.) इत्यतः छन्दसीत्यनुवर्तते । बहुलमिति ; "शीङो रुट्" (पा. ७-१-६.) इत्यतो रुडनुवर्तते । लोपरुडागमयोरेकमुदाहरणम् । ननु निपूर्वत्वाद्ग्रहेर्वञोऽभावात् कथं 'निग्राभम्' इति ? अत आह—ऊदि ग्रह इति । ननु प्रकृतावूहाभावादूहो न प्रयोजनमत आह—इहेति । "सौर्यं चरुं निर्वपेत्" इत्यादावनुपदिष्टेतिकर्तव्यताके इतिकर्तव्यताकाङ्क्षायामेकदेवत्यत्वादिसादृश्यादार्शपौर्णमासिकाग्नेयविध्यन्तः प्रवर्तत इति मीमांसायां नवमे प्रपञ्चितम् [1] ।

[1] प्रतिपादितम् G.

यस्मिन् ; आग्नेयादौ । इतिकर्तव्यता ; अङ्गकलापः । यागान्तरेण ; सौर्यादिना । प्रकृतीति ; भाष्ये लिङ्गविभक्तिग्रहणं प्रकृत्याद्युपलक्षणमिति भावः । उदाहरणमाह—तत्रेति ; प्रकृतौ, दार्शपौर्णमासिकाग्नेय इति यावत् । ऊह्यत इति—मन्त्राधिकरणन्यायेन मन्त्राणां दृष्टार्थत्वादपूर्वीयदेवतादिप्रकाशकपदयुक्तमन्त्रस्य तत्प्रकाशने प्रकृतौ विनियोगाद्विकृतावपि तत्प्रकाशकपदयुक्तस्यैव देवतादिप्रकाशनसामर्थ्यादूह आवश्यकः । न चाग्निपदस्यैव गौण्या सूर्यप्रकाशकत्वसंभवे किं सूर्यपदेनेति वाच्यम्, अनुपपत्तिप्रतिसंधानं विना अग्निपदाज्झटिति सूर्यप्रतीतेरसंभवाच्चन्द्रादिप्रतीतेरपिप्रसङ्गाच्चातिप्रसक्तत्वाददृष्टार्थत्वापत्त्याग्निपदस्वरूपस्याविवक्षितत्वाद्देवताप्रकाशकपदत्वस्यैव विवक्षितत्वाद्वाचकपदोहो युक्त इति भावः । सूर्यायेत्यत्र प्रकृत्यूहो दृष्टः । विभक्तेरपि क्वचिदूहसंभवः—“आशासाना मेधपतिभ्यो मेधम्” इत्यत्र ; “मेधपतये मेधम्” इत्येकवचनान्तमन्त्रस्य “आग्नेयः कृष्णग्रीवः सारस्वती मेषी बभ्रुः सौम्यः” इत्यादिपशुगणेषु देवताभेदाद्देवतापरमेधपतिशब्दस्य ‘आशासाना मेधपतिभ्यः’ इत्यूहो विभक्तिमात्रस्य । लिङ्गस्यापि “जूरसि धृता मनसा” इत्यत्र ‘धृतः’ इत्युदाहार्यमित्यभिप्रेत्याह—विस्तरेणेति । सामसंस्थोहयोरप्रयोजकत्वाद्भाष्ये मन्त्रा इत्युक्तम् । भाष्ये—यथायथम् ; विकृतिगततत्तत्सूर्यादिप्रतिपादनार्थम् । भाष्ये विपरिणमयितव्याः ; ऊहितव्याः । ऊह्यमानानामपि पदानां वेदे सत्त्वेन तत एवापोद्धृत्य प्रयोगसंभवात् किं व्याकरणेनेत्यत्रोक्तं भाष्ये—तान्नावैयाकरण इति । ‘मेधपतिभ्यः’ इत्यादेर्वेदे प्रयोगस्य दुर्ज्ञानत्वात्तदनुसंधानविलम्बाच्च व्याकरणादेवोहः सुलभ [1] इति भावः ।

ननु ‘आगमः खल्वपि’ इत्यस्य साकाङ्क्षत्वात् ‘प्रयोजनम्’ इत्यनुषञ्जनीयम् ; ततश्चानन्वयः ; आगमस्य व्याकरणाध्ययनफलत्वाभावादत आह—आगमः प्रयोजक इति ; व्याकरणाध्ययनप्रवर्तक इत्यर्थः । तेन मूलाभावशङ्कानिरासः । प्रयोजकपरस्य प्रयोजनपदस्य फलपरस्य च प्रयोजनशब्दस्यैकशेषेण प्रयोजनमिति निर्देशोपपत्तिरुक्ता । ननु कार्यते अनुष्ठाप्यत इति व्युत्पत्त्या कारणं प्रयोजनमुच्यते ; तथाच निष्कारणशब्देन निष्प्रयोजनतोक्तेः प्रयोजनाभिधानमागमविरुद्धमत आह—नित्येति । “एकस्य तूभयत्वे संयोगपृथक्त्वम्” (मी. ४-३-५) इति न्यायेन नित्यकाम्योभयरूपत्वात्तथोक्तिरविरुद्धेति भावः । ननु भाष्यस्थमेकं प्रयोजनपदं प्रयोजकं फलं च कथमभिदध्यादित्याशङ्क्य एकशेषेणोपपत्तिमभिप्रेत्याह—प्रयोजनशब्देनेति । ननु नित्यत्वात् पापक्षयरूपं फलमस्त्येवेति निष्कारणत्वमत आह—दृष्टमिति । कारणं प्रयोजनम् । नन्वागमो वेदः, स चानादिर्नादिमद्व्याकरणाध्ययनविधायकः, नित्यानित्यसंयोगविरोधात् ; व्याकरणस्याङ्गत्वमपि दुर्निरूपम्, तादर्थ्यावयवत्वयोरभावात् ; तथाच ‘षडङ्गः’ इति श्रुतिलिङ्गादिसाहित्यमुक्तम् । न च वेदशब्देनैव तत्प्राप्तेः ‘षडङ्गः’ इति व्यर्थम्, श्रुत्यादिस्वरूपफलज्ञानपूर्वकाध्ययनलाभार्थत्वादित्याशङ्क्याह भाष्ये—प्रधानं चेति । अयं भावः—व्याकरणपरंपराया अनादित्वान्न नित्यवेदसंयोगविरोधः । “ब्राह्मणेन” इति वाक्यस्य स्मृतित्वेऽपि तन्मूलवेदमूलत्वम् ; “तस्मादियं व्याकृता वागुद्यते” इति प्रत्यक्षश्रुतिरपि मूलम् । न च ‘इयं वाक्’ इति व्याकृतवाग्वेद एवोच्यत इति वाच्यम् ; तथा सति ‘वागुद्यत’ इत्येव चरितार्थत्वात् व्याकृतेति व्यर्थं स्यात् । तस्मात् व्याकृता व्याकरणसंस्कृता वागुद्यत इति लौकिकवाग्विषयतयैव विशेषणमर्थवत् ।

---

[1] लभ्यते G.

"मुखं व्याकरणं प्रोक्तम्" इत्यादिनाङ्गत्वं सिद्धम् । पदार्थज्ञानद्वारा वाक्यार्थज्ञानहेतुत्वात् तादर्थ्यं स्पष्टम् । मतद्वयेऽप्यध्ययनविधेर्ज्ञानफलकत्वेन तदाक्षिप्तमीमांसाध्ययनेनैव श्रुतिलिङ्गादिस्वरूपज्ञानसिद्धौ तद्विधिवैयर्थ्यात् । अत एव—

"अधिगन्तव्य इत्येतदध्येय इति चोच्यते ।
तेन श्रुत्यादिमान्वेदो वेदितव्यो विधेरतः ॥
ध्यायतेरेव वा रूपं ध्येय इत्येतदाश्रितम् ।
श्रुत्याद्यर्पितसर्वार्थः स ध्यातव्यः सदा द्विजैः॥" (तन्त्रवार्तिकम्, Page 208.)

इति वार्तिकं निरस्तम्, स्वाध्यायाध्ययनविधिनैवान्यथासिद्धत्वात् 'षडङ्गः' इति विशेषणवैयर्थ्यस्यानुद्धारात् । प्रातिशाख्यादेरङ्गत्वप्रसिद्ध्यभावात् षट्त्वनियमाभावाच्च न तद्विधिशङ्का। न च निष्कारणशब्देन निष्प्रयोजनत्वाभिधानात् 'ज्ञाने धर्मः, शास्त्रपूर्वकप्रयोगेऽभ्युदयः' इति प्रयोजनाभिधानं व्याहतमिति वाच्यम्, तेन नित्यत्वप्रतिपादनस्योक्तत्वादिति । प्राधान्यमुपपादयति—पदपदार्थेति । वाक्यार्थज्ञानस्य प्रधानत्वात्तदुपयुक्तसकलपदार्थज्ञानस्य व्याकरणाधीनत्वान्निरुक्ताद्यपेक्षयापि प्राधान्यम् । यद्यपि विहितषडङ्गाध्ययने प्राधान्यमनुपयुक्तं, तथापि बह्वायाससाध्यव्याकरणे प्रवृत्तिसिद्ध्यर्थं प्राधान्योक्तिरिति ज्ञेयम् ।

भाष्ये—फलवानित्यत्र फलशब्देन वाक्यार्थ एव विवक्षितः । अवश्यमित्यनेन विवक्षितमाह—अध्यापनमिति । अशब्दज्ञमिति ; यद्यपि गुरूपदिष्टवेदस्याध्यापनं संभवति, तथाप्यशब्दज्ञस्य भ्रमप्रमादादिनापभ्रंशसंभवान्निष्कम्पं शिष्याणां तादृशगुरूपगमने प्रवृत्तिर्न स्यात् । सर्वशास्त्राध्ययनमपि वा अध्यापनशब्देन विवक्षितमिति भावः ।

लघ्वर्थमित्यत्र भावप्रधानलघुशब्दस्य तात्पर्यमाह—लाघवेनेति । प्रतिपदपाठापेक्षया व्याकरणस्य लघूपायत्वं ज्ञेयम् । नञोऽभाववृत्तेः संदेहशब्देन नञ्समासः । अत एव पुंलिङ्गत्वम्, नञ्समासस्योत्तरपदार्थप्रधानत्वात् । तथा चासंदेहः संदेहाभावो विवक्षित इत्यभिप्रेत्य कोऽसावभाव इत्यपेक्षायामाह—संदेहस्येति । अत्र ; असंदेहशब्दे । ननु असंदोहार्थमिति बहुव्रीहेर्व्याकरणविशेषणं चतुर्थीतत्पुरुषो वा ; उभयथापि प्रागभावस्यासाध्यतया प्रयोजनत्वासंभवात् ध्वंस एव विवक्षणीयः ; अत आह—न त्विति । तत्र हेतुः—न हीति । इतरस्य ; अवैयाकरणस्य । तदुत्पादात् ; संशयोत्पादात् । ननु वैयाकरणस्यापि क्वचिल्लक्षणास्मृतिदशायां जायमानः संदेहस्तदनुसंधानेन नश्यति, अवैयाकरणस्य जायमानः संदेहो व्याकरणेन नश्यतीति संदेहध्वंसोऽपि प्रयोजनमिति चेत् ; अत्राहुः—अध्ययनफलमध्ययनानन्तरं जातं वक्तव्यम् । पूर्वसंशयनिवृत्तिर्विरोधिगुणादिनापि संभवतीति नाध्ययनफलम् । विस्मरणजन्यसंशयनाशोऽपि स्मरणफलं नाध्यापनस्य । तस्मात् साधूक्तं प्रागभाव इति । न च तस्यासाध्यत्वं, क्षेमसाधारणसाध्यत्वात्तस्यापि । अत एव व्याख्यानत एव स्थूलपृषत्यादावपि संदेहनिवृत्तिसंभवाद्व्याकरणानर्थक्यमिति निरस्तम् ; व्याकरणनिरपेक्षव्याख्यानमात्रात् संदेहानिरासात्, व्याख्यानेऽपि व्याकरणस्यैव मूलत्वात्, व्याख्यातॄणां क्वाचित्कत्वेन सर्वदा तत्संनिधानासंभवेन प्रतिपदं प्रतिपुरुषं जायमानसंशयानां लक्षणं विना निरासासंभवात्। अन्यथा कल्पसूत्रादिभिर्मीमांसाया अप्यन्यथासिद्धिः केन वारणीया? तन्मूलतया तत्सार्थक्यं व्याकरणेऽपि तुल्यम्। ननु व्याकरणस्य नार्थनिश्चयकत्वम्, "गमेर्डोः" (उ. २२४) इति गमनकर्तरि व्युत्पादितस्य जातिविशेष एव प्रयोगदर्शनात् ; अन्यथा 'गामालभेत' इत्यत्र

गमनकर्तृमात्रग्रहणप्रसङ्गादिति चेत्; अत्राहुः—शब्दानामनुशासनं व्याकरणम्; नार्थानाम्। तथाच व्युत्पत्त्यर्थमुपादीयमानोऽर्थः प्रमाणान्तरविरोधाभावे देवताविग्रहादिवद् ग्रहीष्यते; सति तु मानान्तरविरोधे व्युत्पत्त्यर्थमेव तदिति न कश्चिद्विरोध इति। न च मीमांसानिवर्त्यसंदेहानां व्याकरणेनानिवर्तनादप्रयोजकत्वम्, स्वरनिमित्तकसंदेहनिवृत्तेर्व्याकरणमात्रसाध्यत्वात्। अत एव अहीनपदस्य नञ्समासखप्रत्ययान्तत्वसंदेहे मध्योदात्तत्वेन खान्तत्वमहीनाधिकरणेऽङ्गीकृतमिति। निर्णयमाह—पूर्वपदेति। अर्थविशेषपरबहुव्रीहिनिबन्धनपूर्वपदप्रकृतिस्वरस्य तेन विनाभावादर्थनिर्णायकत्वं युक्तम्। अत एव स्वरस्यार्थविशेषप्रत्यायकत्वं न लोकव्यवहारसिद्धमिति निरस्तम्, अभियुक्ततरपाणिनिवचनादेव स्वरविशेषनियामकत्वज्ञानात्। यद्यपि तत्पुरुषेऽपि पूर्वपदप्रकृतिस्वरत्वमस्ति, तथाऽपि तुल्यार्थादिपदव्यतिरिक्तपूर्वपदप्रकृतिस्वरस्य तन्नियमोऽस्तीति भावः।

भा.—इमानि च भूयः शब्दानुशासनस्य प्रयोजनानि—तेऽसुराः। दुष्टः शब्दः। यदधीतम्। यस्तु प्रयुङ्क्ते। अविद्वांसः विभक्तिं कुर्वन्ति। यो वा इमाम्। चत्वारि। उत त्वः। सक्तुमिव। सारस्वतीम्। दशम्यां पुत्रस्य। सुदेवो असि वरुण इति। तेऽसुराः—"तेऽसुरा हेलयो हेलय इति कुर्वन्तः पराबभूवुः। तस्माद् ब्राह्मणेन न म्लेच्छितवै नापभाषितवै। म्लेच्छो ह वा एष यदपशब्दः"। म्लेच्छा मा भूमेत्यध्येयं व्याकरणम्। तेऽसुराः। दुष्टः शब्दः—

"दुष्टः शब्दः स्वरतो वर्णतो वा
मिथ्या प्रयुक्तो न तमर्थमाह।
स वाग्वज्रो यजमानं हिनस्ति
यथेन्द्रशत्रुः स्वरतोऽपराधात्॥" इति

दुष्टाञ्शब्दान्मा प्रयुक्ष्महीत्यध्येयं व्याकरणम्। दुष्टः शब्दः। यदधीतम्—

"यदधीतमविज्ञातं निगदेनैव शब्द्यते।
अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित्॥"

तस्मादनर्थकं माधिगीष्महीत्यध्येयं व्याकरणम्। यदधीतम्। यस्तु प्रयुङ्क्ते—

"यस्तु प्रयुङ्क्ते कुशलो विशेषे
शब्दान्यथावद् व्यवहारकाले।
सोऽनन्तमाप्नोति जयं परत्र
वाग्योगविद् दुष्यति चापशब्दैः॥"

कः ? वाग्योगविदेव । कुत एतत् । ? यो हि शब्दान् जानात्यपशब्दा-नप्यसौ जानाति । यथैव हि शब्दज्ञाने धर्म एवमपशब्दज्ञानेऽप्यधर्मः । अथवा भूयानधर्मः प्राप्नोति । भूयांसोऽपशब्दा अल्पीयांसः शब्दाः । एकैकस्य हि शब्दस्य बहवोऽपभ्रंशाः । तद्यथा गौरित्यस्य शब्दस्य गावी गोणी गोता गोपोतलिकेत्येवमादयो बहवोऽपभ्रंशाः । अथ योऽवाग्योगविद् अज्ञानं तस्य शरणम् । विषम उपन्यासः । नात्यन्त-याज्ञानं शरणं भवितुमर्हति ; यो ह्यजानन् वै ब्राह्मणं हन्यात्सुरां वा पिबेत्सोऽपि मन्ये पतितः स्यात् । एवं तर्हि—सोऽनन्तमाप्नोति जयं परत्र वाग्योगविद् दुष्यति चापशब्दैः । कः ? अवाग्योगविदेव । अथ यो वाग्योगविद् विज्ञानं तस्य शरणम् । क्व पुनरिदं पठितम् । ? भ्राजा नाम श्लोकाः । किं च भोः श्लोका अपि प्रमाणम् ? । किं चातः ? । यदि श्लोका अपि प्रमाणम् , अयमपि श्लोकः प्रमाणं भवितुमर्हति—

"यदुदुम्बरवर्णानां घटीनां मण्डलं महत् ।
पीतं न गमयेत्स्वर्गं किं तत् क्रतुगतं नयेत् ॥" इति ।

प्रमत्तगीत एष तत्र भवतः । यस्त्वप्रमत्तगीतस्तत्प्रमाणम् । यस्तु प्रयुङ्क्ते ।

प्र.—मुख्यानि प्रयोजनानि प्रदर्श्यानुषाङ्गिकाणि प्रदर्शयति—इमानि चेति । भूय इति ; पुनरित्यर्थः । आनुषङ्गिकत्वाच्चैषां वर्गद्वयो-पादानम । तेऽसुरा इति । निन्दार्थवादेन न म्लेच्छितवा इति म्लेच्छनं निषिध्यते । तत्र केचिदाहुः "हैहेप्रयोगे हैहयोः" (पा. ८-२-८९) इति प्लुते प्रकृतिभावे च कर्तव्ये तदकरणं म्लेच्छनमिति । पदद्विर्वचने कार्ये वाक्यद्वि-र्वचनं लत्वं च म्लेच्छनमित्यपरे । न म्लेच्छितवा इत्यस्य पर्यायो नाप-भाषितवा इति । "कृत्यार्थे" (पा. ३-४-१४) इति तवैप्रत्ययः । म्लेच्छ इति कर्मणि घञ् । दुष्टः शब्दइति । स्वरेण ; स्वरतः । आद्यादित्वात्तसिः । मिथ्या प्रयुक्त इति ; यदर्थप्रतिपादनाय प्रयुक्तस्ततोऽर्थान्तरं स्वरवर्णदोषात्प्रतिपाद-यन्नभिमतमर्थं नाहेत्यर्थः । वागेव वज्रो हिंसकत्वात् । यथेन्द्रशत्रुशब्दः स्वरदोषाद्यजमानं हिंसितवानित्यर्थ । इन्द्रस्याभिचारो वृत्रेणारब्धः । तत्र 'इन्द्रशत्रुर्वर्धस्व' इति मन्त्र ऊहितः । तत्रेन्द्रस्य शमयिता शातयिता

भवेति क्रियाशब्दोऽत्र शत्रुशब्द आश्रितो न तु रूढिशब्दः; तदाश्रयणे हि बहुव्रीहितत्पुरुषयोरर्थभेदः । तत्रेन्द्रामित्रत्वे सिद्धे सतीन्द्रस्य शत्रुर्भवेत्यत्रार्थे प्रतिपाद्येऽन्तोदात्ते प्रयोक्तव्ये आद्युदात्त ऋत्विजा प्रयुक्त इत्यर्थान्तराभिधानादिन्द्र एव वृत्रस्य शातयिता संपन्नः । इन्द्रशत्रुत्वस्य च विधेयत्वात्संबोधनविभक्तेरनुवाद्यविषयत्वादिहाभावः । यथा 'राजा भव युध्यस्व' इति । ऊह्यमानस्य चामन्त्रत्वात् "यज्ञकर्मणि" (पा. १-२-३४) इति जपादिपर्युदासेन मन्त्राणामेकश्रुतिर्विधीयमानेह न भवति । अविज्ञातमिति; अविदितस्वरादिसंस्कारत्वादर्थापरिज्ञानाद्वा । निगदेनेति; पाठमात्रेण । न तज्ज्वलतीति; निष्फलं भवति । अनर्थकम्; निष्प्रयोजनम् । यस्तु प्रयुङ्क्ते इति । अनेनाभ्युदयहेतुत्वं व्याकरणाध्ययनस्य दर्शयति । विशेष इति; स एव शब्दः क्वचिदर्थे केनचिन्निमित्तेन प्रयुक्तः साधुरन्यथा असाधुः । यथाश्वेऽस्वशब्दो धनाभावनिमित्तकः साधुर्जातिनिमित्तकोऽसाधुः । गवि च गोणीशब्दः साधर्म्यात् प्रयुक्तः साधुर्जातिप्रयुक्तस्त्वसाधुः । क इति; वाग्योगविदः श्रुतत्वाद्दोषदर्शनाच्च प्रश्नः । प्रष्टैव परमतमाशङ्क्याह—वाग्योगविदेवेति । एवमपशब्दज्ञानेऽपीति; यथा श्लैष्मिकद्रव्यसेवया श्लैष्मिको व्याधिर्भवति तद्विपरीतसेवया त्वारोग्यं, तथात्रापि यथोक्तं न्याय्यमिति भावः । भूयांसोऽल्पीयांस इति; परमतापेक्षया प्रकर्षे प्रत्ययः । यदि मन्यसे बहवः शब्दा अल्पेऽपशब्दा अङ्गभूयस्त्वाच्च फलभूयस्त्वमिति, तन्न; यस्माद् भूयांसोऽपशब्दा अल्पीयांसः शब्दाः । अज्ञानमिति; यथा च तिरश्चां ब्रह्महत्यादिफलाभावः । नात्यन्तायेति; पुरुषाणां विधिनिषेधयोरधिकारात्तत्परिज्ञाने प्रयत्नस्य न्याय्यत्वात् । प्रकरणात्सामर्थ्यं बलीय इत्याह—अवाग्योगविदिति । वाग्योगविदुभयज्ञोऽपि शब्दान्प्रयुङ्क्ते नापशब्दानिति ज्ञानपूर्वकप्रयोगादभ्युदयभाग्भवति । श्लोकस्याप्रसिद्धत्वात्पृच्छति—क्व पुनरिति; प्रातिपदिकार्थप्रश्न एवात्र तात्पर्यम्; किं तदस्ति यत्रेदं पठितमित्यर्थः । अत एव श्लोका इति प्रथमान्तेनोत्तरम्; अन्यथा श्लोकेष्विति वक्तव्यं स्यात् । आप्तोक्तत्वापरिज्ञानादाह—किंच भो इति । यद्रुदुम्बरेति; अयं श्लोकः सौत्रामणियागे सुरापानस्य दुष्टत्वमुद्भावयति । प्रमत्तगीत इति; प्रमादेन विप्रतिपन्नत्वेन

गीत इत्यर्थः । कात्यायनोपनिबद्धभ्राजाख्यश्लोकमध्यपठितस्य त्वस्य श्लोकस्य श्रुतिरनुग्राहिकास्ति—"एकः शब्दः [1]सम्यग् ज्ञातः सुष्ठु प्रयुक्तः स्वर्गे लोके कामधुग्भवति" इति ।

उ.—ननु सर्वप्रयोजनानामेकराशीकरणमेव युक्तम्; न राशिद्वयकरणम्; द्वितीयराशेर्बहुतरत्वात् बह्वनुग्रहन्यायेन तस्यैव प्राथम्यमुचितमिति चाशङ्क्याह—मुख्यानीति । वेदाङ्गत्वोपपादकत्वान्मुख्यानि; प्रधानानि । आनुषङ्गिकाणि; अप्रधानानि । वाजिनयोगवदन्यप्रयुक्तव्याकरणोपजीवीनीति यावत् । प्राधान्यात्तेषामेव पूर्वाभिधानं युक्तमिति भावः ।

ननु भूयःशब्दस्यैकवचनान्तस्य प्रयोजनानीत्यनेनान्वयो न संभवतीत्यत आह—पुनरिति; अव्ययं भूयःपदमिति भावः । पौर्वापर्यनियामकमेव राशिद्वयकरणेऽपि निमित्तमित्याह—आनुषङ्गिकत्वादिति । नन्वपशब्दभाषणस्य पराभवहेतुत्वात् 'पराभूता मा भूमेत्यध्येयं व्याकरणम्' इति वक्तव्यमत आह—निन्दार्थवादेनेति । "यो बर्हिषि ददाति पुरास्य संवत्सराद्गृहे रुदन्ति तस्माद्बर्हिषि न देयम्" [2] इत्यत्रेव निन्दार्थवादमात्रमेतत्; न फलपरम् । क्रत्वर्थनिषेधेषु निषेधातिक्रमे क्रतुवैगुण्यस्य पुरुषार्थनिषेधातिक्रमे च सर्वत्र निवृत्तिसिद्धये पापस्य कल्पनीयत्वात् । पराभवस्यापि पापहेतुकत्वेन तदावश्यकत्वात् अपशब्दाप्रयोगस्य पापाभाव एव फलम् । तथाच म्लेच्छाः पापिनो मा भूमेत्यध्येयं व्याकरणम्, अपशब्दवर्जनस्य व्याकरणाधीनत्वादिति भाष्यार्थः । केचित्तु—"म्लेच्छो ह वा एष यदपशब्दः" इत्येतत्फलप्रतिपादनपरम्,[3] अन्यथा आनर्थक्यापत्तेः । न च म्लेच्छशब्दार्थकथनपरं तत्, "नापभाषितवै" इत्यनेनैव तत्कथनात् । तथाच वस्तुतो म्लेच्छाः पापिन इति पापसाधने अपशब्दे म्लेच्छशब्दः, कारणे कार्यवदुपचारप्रवृत्तेः । तथाचापशब्दः प्रयुक्तो म्लेच्छः पापसाधनमिति श्रुत्यर्थः । तथाच म्लेच्छाः पापिनो मा भूमेत्यम्लेच्छस्वरूपप्रयोजनाभिधानं युक्तमिति भावमाहुः । म्लेच्छवन्म्लेच्छाः; तद्वदपशब्दभाषणपरा मा भूमेति भाष्यार्थ इति नवीनाः । कृत्यार्थे तवैप्रत्ययविधानादर्हत्वस्यापि कृत्यार्थत्वात्तन्निषेधेऽपि रागप्राप्तम्लेच्छनकर्तव्यतानिषेधो न प्राप्यत इत्याशङ्क्यार्थवादेनेत्युक्तम् । निन्दार्थवादस्य कर्तव्यतानिषेधं विनानुपपत्तेर्विधावेव तवैप्रत्यय इति निश्चीयत इति भावः । हेलय इत्यत्रापशब्दत्वमुपपादयति—तत्रेति । हैहयोरिति पुनर्ग्रहणमनन्त्ययोरपि प्लुतसिद्ध्यर्थमिति तत्र स्थितत्वादिति भावः । प्रकृतीति—"प्लुतप्रगृह्या अचि" [4] इत्यनेन । मतान्तरमाह—पदेति । "सर्वस्य" [5] इत्यत्र पदग्रहणस्योक्तत्वादिति भावः । नन्वनेन वैदिकशब्दभ्रंशनं निषिध्यते? म्लेच्छभाषा वा? अत आह—न म्लेच्छितवा इत्यस्येति । पर्याय इत्यनेन "नापभाषितवै" इत्येतत् भाष्यकारेण प्रक्षिप्तं, न वेदवाक्यमिति कैश्चिदुक्तं निरस्तम्; प्रक्षेपस्यामानकत्वात् । अपभाषणस्य व्याकरणाननुगतशब्दमात्रे प्रसिद्धत्वान्न वैदिकापभ्रंशविषयत्वम् । हेलय इत्यस्याह्वानतया अवेदत्वात् म्लेच्छभाषायामभावाच्च न तद्विषयत्वम् । "म्लेच्छभाषां न शिक्षयेत्" इति वचनान्तरेणैव तन्निषेध-

---

[1] 'सुज्ञातः सुप्रयुक्तः' इत्यत्रभट्टाभिमतः पाठः ।

[2] तै. सं. १-५-१-२.

[3] G reads इत्येतत्फलम् only and omits प्रतिपादनपरम् ।

[4] पा. ६-१-१२५.

[5] पा. ८-१-१.

सिद्धेनैतस्यैतत्परत्वम् । द्वयमपि तवैप्रत्ययान्तमित्याह—कृत्यार्थे इति । ननु वेदबाह्यः पुरुषो म्लेच्छः; स कथमपशब्दोऽत आह—कर्मणीति । "म्लेच्छ अव्यक्तायां वाचि" इत्यस्मात्कर्मणि घञ् । म्लेच्छ्यते अव्यक्तं व्याकरणानुगमरहितमुच्चार्यत इति म्लेच्छोऽपशब्दः । असर्वनामत्वात् स्वरत इति तस्ययोगमाशङ्क्याह—आद्यादित्वादिति । आद्यादेराकृतिगणत्वादिति भावः । एवं वर्णत इत्यपि तसिः । तच्छब्दापेक्षितयच्छब्दार्थमाह—यदिति । द्वन्द्वे 'वाग्वज्रः' इत्ययुक्तम्, द्विवचननपुंसकत्वयोरन्यतरस्य प्रसङ्गात्; बहुव्रीहौ दुष्टशब्दपरामर्शिना स इत्यनेन सामानाधिकरण्यानुपपत्तिः; विरुद्धार्थत्वान्न कर्मधारयः; संबन्धानिरूपणाच्च न षष्ठीसमासः; अत आह—वागेवेति । कर्मधारयसमासः, व्यस्तरूपकं वा; उभयथाऽपि हिंसकत्वगुणयोगाद्वज्रशब्दो वाचि युक्त इत्याह—हिंसकत्वादिति । इन्द्रशत्रुशब्दस्यार्थपरत्वेन शब्दपरत्वासंभवादुदाहरणत्वायोगमाशङ्क्याह—यथेति । उपक्रमानुरोधादिन्द्रशत्रुशब्दो लक्षणया स्वपर इति भावः । स्वरदोषेण यजमानहिंसां दर्शयति—इन्द्रस्येति । वृत्रेण हेतुना त्वष्ट्रा आरब्ध इत्यर्थः । "त्वष्टा हतपुत्रो वीन्द्रम्"[1] इत्यादिपरकृतिदर्शनात् । न च तत्र यजमानस्य त्वष्टुर्न हिंसा, किंतु पुत्रस्यैवेति वाच्यम्, पुत्रहिंसायाः पितुरपि दुःखहेतुतया यजमानहिंसारूपत्वात् । शाखान्तरे वृत्रकर्तृक एवायं यागः । तत्राभिचारकर्मणि मन्त्रे इन्द्रशत्रुशब्द ऊहित इत्यर्थः । शत्रुशब्दो यौगिको विवक्षित इत्याह—तत्रेति । शातयिता; मारकः । रूढ्यनाश्रयणे हेतुमाह—तदाश्रयणे हीति । अर्थाभेद इति; शत्रुशब्दस्यामित्रे रूढतया अमित्रत्वस्येन्द्रवृत्रयोः परस्परं स्वभावसिद्धत्वेनानाशास्यत्वात्तत्पुरुषाश्रयणे इन्द्रमारकत्वस्याप्राप्तेः बहुव्रीहावपि वृत्रमारकत्वालाभेन यजमानहिंसानुपपत्तेः प्रयोजनभेदो नास्तीत्यर्थः । क्रियाशब्दाश्रयणे स्वरभेदेनार्थभेदमुपपादयति—तत्रेति । सिद्धे; स्वत एवेत्यादिः । शत्रुर्भव; शातयिता भव; मारको भवेति यावत् । अन्तोदात्ते; "समासस्य"[2] इति विहिते। आद्युदात्त इति; "बहुव्रीहौ प्रकृत्या पूर्वपदम्"[3] इति इन्द्रशब्दस्य प्रकृतिस्वर आद्युदात्तः । अर्थान्तरम्; 'इन्द्रस्य मारकः' इत्यपेक्षितार्थं हित्वा 'इन्द्रो मारको यस्य' इत्यर्थान्तरम् । ननु 'इन्द्रशत्रो वर्धस्व' इत्यामन्त्रणविभक्तिः कस्मान्न भवत्यत आह—इन्द्रशत्रुत्वस्येति । विधेयत्वात्; अज्ञातज्ञाप्यत्वात्; आशास्यत्वादिति यावत् । अनुवाद्येति; सिद्धस्य हि कार्यान्तरविधानाय संबोधनमिति भावः । विधेये तदभावे दृष्टान्तः—यथेति । नन्वत्र "यज्ञकर्मणि"(पा. १-२-३४.) इत्येकश्रुतिः कस्मान्न भवत्यत आह—ऊह्यमानस्येति। भेदलक्षणे ऊह्यमानस्य मन्त्रत्वं न वेति संदेहे मन्त्रैकवाक्यत्वेन मन्त्रमध्यनिवेशान्मन्त्रकार्यकरत्वाच्च मन्त्रत्वमिति प्राप्तेऽभिहितम्—"अनाम्नातेष्वमन्त्रत्वम्" (मी. २-१-३४.) इति; न मन्त्रैकवाक्यत्वं मन्त्रत्वप्रयोजकं, किंत्वभियुक्तप्रसिद्धिः । सा च स्वाध्यायकाले पठितेष्वेव, नोहप्रवरनामधेयेष्विति तेषाममन्त्रत्वमिति । अत एव "मन्त्रो हीनः"[4] इति शिक्षाकारपाठेऽपि प्रसिद्धमन्त्रपरिग्रहेऽप्यूह्यमानस्यामन्त्रत्वात् "यथेन्द्रशत्रुः" इत्युदाहरणमयुक्तमिति "मन्त्रो हीनः" इति शिक्षाकारवचने मन्त्रपदोद्धारेण "दुष्टः शब्दः" इति प्रक्षिप्तमित्ययुक्तम्, भगवद्वचनस्यैव तादृशपाठान्तरसाधकत्वात् । ननु शब्दमज्ञात्वा तदुच्चारणरूपाध्ययनासंभवात् 'अधीतमविज्ञातम्' इति

---

1 तै. सं. २-५-२-१.

2 पा. ६-१-२२३.

3 पा. ६-२-१.

4 पा. शि. ५२.

विरुद्धमतआह—अविदितेति । यद्वा नन्वनेन व्याकरणस्योपयोगो न प्रतीयते; अत आह—अविदितेति । विशेषेण ज्ञातं विज्ञातम्; विशेषश्च सुबादिसंस्कार एवेति भावः । नन्वनुष्ठानाधीनं प्रयोजनम्; तत्र न सुबादिज्ञानोपयोगः; अत आह—अर्थापरिज्ञानाद्वेति । प्रकृतिप्रत्ययविभागज्ञानाद्वैदिकपदार्थज्ञानम्; ततो वाक्यार्थज्ञानादनुष्ठानेन फलमिति व्याकरणस्योपयोगोऽनेनोक्तः । एतेन कल्पसूत्रमीमांसानामेव पदार्थज्ञानोपयोगो न व्याकरणस्येति निरस्तम् । पदार्थज्ञानस्य व्याकरणाधीनत्वात्; व्याख्यानस्यापि तन्मूलकत्वात्; अन्यथा कल्पसूत्रादिना मीमांसाया अप्यन्यथासिद्ध्यापत्तेरिति भावः । निगदशब्दस्य "प्रोक्षणीरासादय" इत्यादिपरसंबोधनरूपमन्त्रपरत्वशङ्कां वारयति—पाठमात्रेणेति । शब्द्यते; अभ्यस्यते । प्रसिद्धज्वलनस्य प्रसक्तप्रतिषेधं परिहरति—निष्फलमिति । अर्थशब्दस्याभिधेयपरत्वबाधमाशङ्क्य प्रयोजनपरत्वमाह—निष्प्रयोजनमिति । पूर्वत्र नित्यत्ववेदाङ्गत्वे उपपादिते; "यस्तु" इत्यनेन काम्यत्वमुच्यत इत्याह—अनेनेति ।

वाचो योगः प्रकृतिप्रत्ययसंबन्धः, तं वेत्तीति वाग्योगवित् वैयाकरणः; य एवंवित् व्यवहारकाले विशेषे शब्दान् व्याकरणानुगतान् प्रयुङ्क्ते स परत्रानन्तं जयं प्राप्नोतीति श्लोकार्थः । व्याकरणानुगतस्याप्यर्थविशेष एव साधुत्वं न सर्वत्र; तद्विवेकलाभाय कुलविशेषणमित्यभिप्रेत्य तद्दर्शयति—स एवेति । शब्दः; व्याकरणानुगतः । धनाभावेति; न विद्यते स्वं धनं यस्येति विवक्षया प्रयुक्त इत्यर्थः । जातीति; अश्वत्वजातिनिमित्तक इत्यर्थः । गोणीसाधर्म्यादिति; स्वाम्युपकारकत्वगुणयोगात् प्रयुक्त इत्यर्थः । जातीति; गोत्वेत्यादिः ।

नन्वेतत् मन्त्रब्राह्मणगतसम्यक्शब्दप्रयोगप्रयोजनकथनपरं न व्याकरणप्रयोजनपरम्; यथा-समाम्नातान्यथाकरणाच्च "दुष्यति चापशब्दैः" इत्युक्तम् । वाग्योगविच्च निगमनिरुक्तादिना विदितपदपदार्थसंबन्धः पुमानुच्यते; यद्वा ब्राह्मणवाक्येषूद्दिश्यमानविधीयमानादिरूपेणावधृतवचनव्यक्तिविशेषो मन्त्रेषु च प्रकाशनार्हार्थविन्मीमांसक एव वाग्योगविदिति चेत्; अत्राहुः—वाग्योगविच्छब्दस्य वैयाकरणे प्रसिद्धप्रयोगस्य कथंचिन्मीमांसकादिपरत्वायोगात् । मन्त्रब्राह्मणगतसम्यक्शब्दप्रयोगस्य तत्फलस्य तदन्यथाकरणे दोषस्य चाध्ययनविधित एव सिद्धतयैतस्य तदनुवादत्वकल्पनस्यामानकत्वात्; "शब्दान्" इत्यस्य विना प्रकरणादिना वैदिकशब्दपरत्वेन संकोचायोगात्; "व्यवहारकाले" इत्यस्यापि वैदिकव्यवहारकाल इत्युक्तौ संकोच एव । तत्र "यथावत्" इति च व्यर्थम्; ममार्थसाधुत्वलाभार्थं तत् । तस्माद्वैयाकरणस्य साधुशब्दप्रयोगात् फलप्रदर्शनार्थमेवैतदिति । साधुत्वं च अभिधागौणीलक्षणानामन्यतमवृत्त्यार्थप्रत्यायनाङ्गत्वम् । गाव्यादीनां शक्तिभ्रमोद्बोधकत्वेन वस्तुतः शक्त्यभावात्तन्मूलगौणीलक्षणयोरप्यभावान्नातिव्याप्तिः । अर्थप्रत्यायनाङ्गत्वे सत्यनपभ्रष्टशब्दत्वं वा साधुत्वम् । व्याकरणसहकृतश्रोत्रेन्द्रियग्राह्यत्वं साधुत्वमिति प्रत्यक्षमेव तत्र प्रमाणम् । अधिकमत्र वार्तिकन्यायसुधयोरनुसंधेयम् ।

प्रश्नाभिप्रायमाह—वागिति । श्रुतत्वात्; शब्देनावगतत्वात् । दोषेति; योगविद्ग्रहणे शास्त्रमधर्महेतुः स्यात् । तथा चानेनाभ्युदयहेतुत्वं न प्रतिपाद्यत इति प्रश्नाभिप्रायोऽनेनोक्तः । प्रश्नाभिप्रायविवरणपर एव "वाग्योगविदेव" इति ग्रन्थो न सिद्धान्तिन इत्याह—प्रैष्टवेति; परमतम्; सिद्धान्तिनोऽनभिमतमप्यभिमतमिति मत्वेत्यर्थः । यद्वा परस्तटस्थः, सिद्धान्तिसंनि-

धानात्। सामर्थ्यं बलवदित्यभिप्रेत्य शङ्कते—भाष्ये कुत एतदिति । सामर्थ्यमप्यस्मत्पक्षेऽस्ति; संनिधानमधिकमित्यभिप्रेत्याह—भाष्ये यो हीति । ततः किम्? तत्राह—भाष्ये यथेति । नन्वध्येयतया विहितस्य व्याकरणस्याधर्मफलकत्वं न संभवतीत्यत आह—यथेति । अपशब्दज्ञानस्याधर्मसाधनत्वे प्रमाणाभावमाशङ्क्याह—यथेति; इति केचित् । तच्चिन्त्यम्; "दुष्यति चापशब्दैः" इत्यस्यैव प्रमाणत्वात् । यद्यद्विरुद्धं तत्तद्विरुद्धफलकमिति व्याप्तेर्विरुद्धज्ञानद्वयसाधनस्य विरुद्धफलद्वयं युक्तमित्यर्थः ।

नन्वातिशायनिकप्रत्ययोऽनुपपन्नः, भाष्ये तद्विधौ "समानगुणग्रहणं कर्तव्यं शुक्लात् कृष्णे मा भूत्" इति वक्ष्यमाणत्वात् बहुत्वाल्पत्वयोः समानगुणत्वाभावादत आह—भूयांस इति; इति केचित्; तच्चिन्त्यम्, बहुत्वापेक्षया भूयांसोऽल्पत्वापेक्षयाल्पीयांस इति च प्रयोगात्; प्रदीपे तत्समाधानस्यानुक्तेः, परमतापेक्षयेत्यस्य प्रयोजनानुक्तेश्च । तस्मात् 'बहवोऽपशब्दाः, अल्पे शब्दाः' इत्येव वक्तव्यम्; प्रकर्षप्रत्ययो व्यर्थः; अत आह—परमतापेक्षयेति । तदुपपादयति—यदीति । अङ्गभूयस्त्वात्; विषयभूयस्त्वात् । फलभूयस्त्वम्; धर्मभूयस्त्वम् । अज्ञानस्याधर्महेतुत्वाभावं दृष्टान्तेनाह—तथाचेति । व्याघ्रादीनां ब्रह्महत्यादिना पापं नास्तीत्यर्थः । भाष्ये—अत्यन्ताय; अत्यन्तपापराहित्याय । अजानतां निषिद्धाचरणेन प्रत्यवाये तिरश्चामपि स्यात्, अतः पुरुषाणामिति; मनुष्याणामित्यर्थः । मनुष्याधिकारिकत्वं विधिनिषेधयोः षष्ठे स्थापितम्; तिरश्चां विधिनिषेधयोरभावान्न पापादिप्रसङ्ग इति भावः । ननु विदुषोऽधिकारादविदुषः प्रत्यवायो न स्यादत आह—तदिति । तत्परिज्ञाने; विधिनिषेधपरिज्ञाने । मनुष्यस्याज्ञानकृतनिषिद्धेनापि पापस्मरणात् तन्निवृत्तये यत्नेन भाव्यमित्यर्थः । भाष्ये क इति प्रश्नस्योत्तरम्—एवं तर्हीति । ननु संनिहितवाग्योगवित्त्यागे को हेतुरत आह—प्रकरणादिति; संनिधानादित्यर्थः । निषिद्धज्ञानमात्रान्न पापम्, 'कलञ्जभक्षणादिकं पापसाधनम्' इति ज्ञानस्य पापाहेतुत्वात्; प्रत्युत निवृत्तिप्रयोजकतया पापानुत्पाद एवोपयोगात्; एवमपशब्दज्ञानमात्रान्न पापं, किंतु तत्प्रयोगात् । तथाच वैयाकरणस्य तत्प्रयोगासंभवात् सामर्थ्यादवैयाकरण एव ग्राह्य इत्याशयेनाह—वाग्योगविन्विति । इदं चवधेयम्—वाग्योगविदोऽप्यपशब्दप्रयोगे पापमस्त्येव; न च तस्य नियमेन वर्जनं भवति, मीमांसकस्य निषिद्धाचरणवद्वाग्योगविदोऽप्यपशब्दप्रयोगसंभवात्; प्रायेण सर्वेषां भाषाशब्दैरेव व्यवहारदर्शनाच्च । तस्मादपशब्दान् परित्यज्य साधून् यः प्रयुङ्क्ते तस्याभ्युदयः, अपशब्दप्रयोगे सर्वेषां पापमविशिष्टम् । योगविदोऽधिकं वा, अज्ञानकृतात् ज्ञानकृते पापाधिक्यस्मरणात् । अयोगविदः साधुभाषणेन नाभ्युदयः "योगवित्" इत्यनेन ज्ञानपूर्वकप्रयोगस्यैवाभ्युदयहेतुत्वश्रवणात्, अनधीतवेदस्य कर्मानुष्ठानेन फलाभाववत्; एतदभिसंधायाह—ज्ञानपूर्वकादिति । ननु 'क' इत्यधिकरणप्रश्ने श्लोकेष्वित्युत्तरेण भाव्यं, न तु श्लोका इति; अत आह—प्रातिपदिकेति । अधिकरणद्वारा प्रकृत्यर्थमात्रविषयकः प्रश्नः; न तु प्रत्ययार्थविषयक इत्यर्थः । तथापि यादृशः प्रश्नः संपन्नस्तमाह—किं तदिति । व्याख्यानप्रयोजनमाह—अत एवेति । प्रत्ययार्थप्रश्ने उत्तरासङ्गतिं स्फोरयति—अन्यथेति । भाष्ये 'भ्राजाः' इति श्लोकविशेषाणां नाम । स्मृतीनां प्रामाण्यस्य स्थितत्वात् प्रश्नायोगं परिहरति—आप्तेति । भाष्ये—किंचेति समुदायः प्रश्नार्थकः । अनाप्तोक्तस्यापि प्रामाण्ये किं बाधकमित्याशङ्कते भाष्ये—किंचात इति । प्रश्ने-

निष्टमाह—यदीति भाष्ये । अनेन किं निन्द्यते? अत आह—अयं श्लोक इति । उदुम्बरवर्णानाम्; ताम्रवर्णानाम् । घटानाम्; सुरापूर्णानामिति यावत् । वक्तुर्मत्तत्वे मानाभावात् भावनिष्ठया व्याचष्टे—प्रमादेनेति । बुद्धिपूर्वकं गीतस्य न प्रमादेन गीतत्वमत आह—विप्रतिपन्नत्वेनेति; श्रुतिविरुद्धत्वेनेत्यर्थः । यद्यपि विरोधाधिकरणे श्रुतिविरोधे स्मृतेरप्रामाण्यम्, अविरोधे त्वनुमितवेदमूलकतया प्रामाण्यं सिद्धम्; तथाप्यस्य प्रत्यक्षश्रुतिमूलकत्वात् प्रामाण्ये न विवाद इत्याशयेनाह—कात्यायनेनेति । सुज्ञातः; सम्यग् ज्ञातः; व्याकरणोक्तप्रकृतिप्रत्ययादिविभागेन ज्ञात इति यावत् । सुप्रयुक्तः; स्वरवर्णव्यत्यासं विना प्रयुक्तः ।

भा.—अविद्वांसः—

"अविद्वांसः प्रत्यभिवादे नाम्नो ये न प्लुतिं विदुः ।
कामं तेषु तु विप्रोष्य स्त्रीष्विवायमहं वदेत् ॥"

अभिवादे स्त्रीवन्मा भूमेत्यध्येयं व्याकरणम् ॥ अविद्वांसः ॥

विभक्तिं कुर्वन्ति—

याज्ञिकाः पठन्ति—"प्रयाजाः सविभक्तिकाः कार्या" इति । न चान्तरेण व्याकरणं प्रयाजाः सविभक्तिकाः शक्याः कर्तुम् ॥ विभक्तिं कुर्वन्ति ॥

यो वा इमाम्—

"यो वा इमां पदशः स्वरशोऽक्षरशश्च वाचं विदधाति स आर्त्विजीनो भवति"। आर्त्विजीनाः स्यामेत्यध्येयं व्याकरणम् ॥ यो वा इमाम् ॥

चत्वारि—

"चत्वारि शृङ्गा त्रयो अस्य पादा
द्वे शीर्षे सप्त हस्तासो अस्य ।
त्रिधा बद्धो वृषभो रोरवीति
महो देवो मर्त्यां आ विवेश ॥"

इति । चत्वारि शृङ्गाणि; चत्वारि पदजातानि नामाख्यातोपसर्गनिपाताश्च । त्रयो अस्य पादाः; त्रयः काला भूतभविष्यद्वर्तमानाः । द्वे शीर्षे; द्वौ शब्दात्मानौ नित्यः कार्यश्च । सप्त हस्तासो अस्य; सप्त विभक्तयः । त्रिधा बद्धः; त्रिषु स्थानेषु बद्ध उरसि कण्ठे शिरसीति । वृषभो वर्षणात् । रोरवीति; शब्दं करोति ।

कुत एतत्? रौतिः शब्दकर्मा। महो देवो मर्त्यां आविवेशेति; महान्देवः शब्दो मर्त्या मरणधर्माणो मनुष्याः, तानाविवेश। महता देवेन नः साम्यं यथा स्यादित्यध्येयं व्याकरणम्। अपर आह—

"चत्वारि वाक्परिमिता पदानि
तानि विदुर्ब्राह्मणा ये मनीषिणः।
गुहा त्रीणि निहिता नेङ्गयन्ति
तुरीयं वाचो मनुष्या वदन्ति॥"

चत्वारि वाक्परिमिता पदानि; चत्वारि पदजातानि नामाख्यातोपसर्गनिपाताश्च। तानि विदुर्ब्राह्मणा ये मनीषिणः; मनस ईशिनो मनीषिणः। गुहा त्रीणि निहिता नेङ्गयन्ति; गुहायां त्रीणि निहितानि नेङ्गयन्ति न चेष्टन्ते, न निमिषन्तीत्यर्थः। तुरीयं वाचो मनुष्या वदन्ति; तुरीयं वा एतद्वाचो यन्मनुष्येषु वर्तते; चतुर्थमित्यर्थः॥ चत्वारि॥

उत त्वः—

"उत त्वः पश्यन्न ददर्श वाचमुत त्वः शृण्वन्न शृणोत्येनाम्।
उतो त्वस्मै तन्वं विसस्रे जायेव पत्य उशती सुवासाः॥"

उतत्वः; अपि खल्वेकः। शृण्वन्नपि न शृणोत्येनामिति; अविद्वांसमाहार्धम्। उतो त्वस्मै तन्वं विसस्रे; तनुं विवृणुते। जायेव पत्य उशती सुवासाः; तद्यथा जाया पत्ये कामयमाना सुवासाः स्वमात्मानं विवृणुते, एवं वाग् वाग्विदे स्वात्मानं विवृणुते। वाङ् नो विवृणुयादात्मानमित्यध्येयं व्याकरणम्॥ उत त्वः॥

सक्तुमिव—

"सक्तुमिव तितउना पुनन्तो
यत्र धीरा मनसा वाचमक्रत।
अत्रा सखायः सख्यानि जानते
भद्रैषां लक्ष्मीर्निहिताधिवाचि॥"

सक्तुः; सचतेर्दुधावो भवति; कसतेर्वा विपरीताद्विकसितो भवति। तितउ परिपवनं भवति। ततवद्वा तुन्नवद्वा। धीरा ध्यानवन्तः। मनसा प्रज्ञानेन। वाचमक्रत वाचमकृषत। अत्रा सखायः

सख्यानि जानते । क्व? य एष दुर्गो मार्गः । एकगम्यो वाग्विषयः । के पुनस्ते? वैयाकरणाः । कुत एतत्? । भद्रैषां लक्ष्मीर्निहिताधि-वाचि; एषां वाचि भद्रा लक्ष्मीर्निहिता भवति । लक्ष्मीर्लक्षणाद्भा-सनात्परिवृढा भवति ॥ सक्तुमिव ॥

सारस्वतीम्—

याज्ञिकाः पठन्ति—"आहिताग्निरपशब्दं प्रयुज्य प्रायश्चित्तीयां सारस्वतीमिष्टिं निर्वपेत्" इति । प्रायश्चित्तीया मा भूमेत्यध्येयं व्याकरणम् ॥ सारस्वतीम् ।

दशम्यां पुत्रस्य—

याज्ञिकाः पठन्ति—"दशम्युत्तरकालं पुत्रस्य जातस्य नाम विदध्याद् घोषवदाद्यन्तरन्तःस्थमवृद्धं त्रिपुरुषानूकमनरिप्रतिष्ठितम् । तद्धि प्रतिष्ठिततमं भवति । द्व्यक्षरं चतुरक्षरं वा नाम कृतं कुर्यान्न तद्धितम्" इति । न चान्तरेण व्याकरणं कृतस्तद्धिता वा शक्या विज्ञातुम् ॥ दशम्यां पुत्रस्य ॥

सुदेवो असि—

"सुदेवो असि वरुण यस्य ते सप्त सिन्धवः ।
अनुक्षरन्ति काकुदं सूर्म्यं सुषिरामिव ॥"

सुदेवो असि वरुण; सत्यदेवोऽसि; यस्य ते सप्त सिन्धवः सप्तविभक्तयः; अनुक्षरन्ति काकुदम्; काकुदं तालु; काकुर्जिह्वा; सास्मिन्नुद्यत इति काकुदम् । सूर्म्यं सुषिरामिव; तद्यथा शोभना-मूर्मीं सुषिरामग्निरन्तः प्रविश्य दहति, एवं ते सप्त सिन्धवः सप्त विभक्तयस्ताल्वनुक्षरन्ति । तेनासि सत्यदेवः । सत्यदेवः स्यामित्य ध्येयं व्याकरणम् ॥ सुदेवो असि ॥

प्र.—स्त्रीष्विवेति; प्रत्यभिवादे हि गुरुणा प्लुतः कार्यः; यस्तु प्लुतं कर्तुं न जानाति स स्त्रीवद्वक्तव्यः 'अयमहम्' इति, न तु 'अभिवादये देवदत्तोऽहम्' इत्यादिना संस्कृतवाक्येनेत्यर्थः । प्रयाजा इति; प्रयाजादि-मन्त्रा ऊह्यमाना अग्निशब्दप्रकृतिकविभक्तियुक्ता इत्यर्थः; यथा: "समिधोऽग्न

आज्यस्य व्यन्तु अग्नेऽग्ने" इति। पदश इति; पदं पदमिति 'संख्यैकवचनाच्च वीप्सायाम्" इति शस्। स्वरश इति; स्वर उदात्तादिः। अक्षरश इति; अक्षरं व्यञ्जनसहितोऽच्। आर्त्विजीन इति; ऋत्विजमर्हत्यार्त्विजीनो यजमानः; ऋत्विक्कर्मार्हतीति याजकोऽप्यार्त्विजीनः "यज्ञर्त्विग्भ्यां घखञौ" इति सूत्रेण "यज्ञर्त्विग्भ्यां तत्कर्मार्हतीति चोपसङ्ख्यानम्" इति वार्तिकेन च खञ्। "विद्वान्यजेत" "विद्वान्याजयेत्" इति द्वयोरपि विदुषोरधिकारात्। चत्वारीति; शब्दस्य वृषभत्वेन निरूपणम्। त्रयः काला इति; लडादिविषयाः। नित्यः कार्यश्चेति, व्यङ्ग्यव्यञ्जकभेदेन। सप्त विभक्तय इति, सुप इत्यर्थः। केचित्तु तिङामपरिग्रहप्रसङ्गात्सह शेषेण सप्त कारकाणि विभक्तिशब्दाभिधेयानि व्याचक्षते। वर्षणादिति; कामानां ज्ञानपूर्वकानुष्ठानफलत्वात्। महतेति; परेण ब्रह्मणेत्यर्थः। चत्वारीत्यनेनैकदेशेन वाक्यान्तरमपि सूच्यत इत्याह—अपर आहेति। परिमितानीति प्राप्ते "शेश्छन्दसि बहुलम्" इति शेर्लोपे परिमितेति भवति। परिमितानि; परिच्छिन्नानि, एतावन्त्येवेत्यर्थः। मनीषिशब्दः पृषोदरादित्वात्साधुः। कथं मनीषिण एव विदन्तीत्यत्राह—गुहेति; अज्ञानमेव गुहा, तस्यामित्यर्थः। "सुपां सुलुक्" इति सप्तम्या लुक्। व्याकरणप्रदीपेन तु तानि प्रकाशन्ते। तत्र चतुर्णां पदजातानामेकैकस्य चतुर्थभागं मनुष्या अवैयाकरणा वदन्ति। नेङ्गयन्तीत्यस्यैव व्याख्यानं न चेष्टन्ते न निमिषन्तीति। उत त्व इति, त्वशब्दोऽन्यवाची। उतशब्दोऽपिशब्दस्यार्थे। स च भिन्नक्रमः। प्रत्यक्षेण शब्दस्वरूपमुपलभमानोऽप्यर्थापरिज्ञानान्न पश्यतीत्यर्थः। उतो इति; उत उ इति निपातसमाहारः। अविद्वांसमाहार्धमिति; अविद्वल्लक्षणमर्थमर्द्धर्चे आहेत्यर्थः। सचतेरिति, "षच सेचने" इत्यस्य। दुर्धाव इति, दुःशोधः। यथा तितउना सक्तोस्तुषाद्यपनीयते तथा व्याकरणेन वाचोऽपशब्दा इत्यर्थः। कसतेरिति; पृषोदरादित्वाद्वर्णव्यत्ययः। ततवादिति, विस्तारयुक्तमित्यर्थः। तुन्नवदिति; बहुच्छिद्रम्। धीरा इति, वैयाकरणाः। वाचमक्रतेति, अपशब्देभ्यो विविक्तां कृतवन्तः। "मन्त्रे घस" इति क्लेर्लुकि सत्यक्रतेति रूपम्। अत्रा सखाय इति; "ऋचि तनुघ" इति दीर्घः। सखायः, समानख्यातयः; भेदग्रहस्य निवृत्तत्वात्सर्वमेकमिति मन्यन्ते। सख्यानीति;

सायुज्यानीत्यर्थः । एकगम्यइति; ज्ञानेनैव प्राप्यः । वाचीति; वेदाख्ये ब्रह्मणि या लक्ष्मीर्वेदान्तेषु परमार्थसंविल्लक्षणोक्ता सैषां निहितेत्यर्थः । प्रायश्चित्तीयामिति; भवार्थे "वृद्धाच्छः" । प्रायश्चित्तीया इति; प्रायश्चित्ताय पापशोधनाय श्रुतिस्मृतिवाहताय कर्मणे हितास्तन्निमित्तोत्पादना मा भूमेत्यर्थः । दशम्युत्तरकालमिति; दशम्या उत्तर इति "पञ्चमी" इति योगविभागात्समासः । ततः कालशब्देन बहुव्रीहिः, क्रियाविशेषणं चैतत् । दश दिनान्याशौचं भवतीति दशम्युत्तरकालमित्युक्तम् । यदपि गृह्यकाराः पठन्ति "दशम्यां पुत्रस्य" इति तदपि दशम्यामिति सामीपिकमधिकरणं व्याख्येयम् । घोषवदादीति; घोषवन्तो ये वर्णाः शिक्षायां प्रदर्शितास्तदादि । अन्तरन्तःस्थमिति; मध्ये यरलवा यस्य तदित्यर्थः । त्रिपुरुषानूकमिति; नामकरणे योऽधिकारी पिता तस्य ये त्रयः पुरुषास्ताननु कायत्यभिधत्त इति त्रिपुरुषानूकम् "अन्येषामपि दृश्यते" इति दीर्घः । सुदेवो असीति; वरुणस्येयं स्तुतिः । यतो हेतोर्व्याकरणज्ञानाद्वरुण सत्यदेवोऽसि ततो हेतोरन्येऽपि सत्यदेवा भवन्तीत्यर्थः । सिन्धव इति; नद्य इव विभक्तय इत्यर्थः । अनुक्षरन्तीति; तास्वनुप्राप्य प्रकाशन्त इत्यर्थः । सास्मिन्नद्यत इति; अनेकार्थत्वाद्धातूनामुत्क्षिप्यत इत्यर्थः । सूर्म्यमिति; सूर्मीमिति प्राप्ते "आमि पूर्वः" इत्यत्र "वा छन्दसि" इत्यनुवृत्त्या यणादेशः ।

उ. अभिवाद्यमानकर्तृकाशीर्वचनं प्रत्यभिवादः । तत्र "प्रत्यभिवादेऽशूद्रे" इति प्लुतो विहितः । गुरुणा; अभिवाद्येन । ननु 'वदेत्' इत्यस्य किं कर्म? अत आह—अयमहमिति, नन्वितेरभावात् कथं शब्दपरत्वनिश्चयः? अत आह—अनुकरणमिति; अनुकरणत्वाच्छब्दपरत्वनिश्चय इत्यर्थः । प्राक् प्रयोग इति; अनुकरणं द्विविधम्, इतिपरम्, अनितिपरं चेति । अत्र धातोः प्राक् प्रयोगादनितिपरमनुकरणमिति निश्चीयत इति भावः । अत्र 'अभिवादये देवदत्तोऽहम्' इत्युक्ते 'आयुष्मानेधि देवदत्त ३' इति प्लुतस्य मन्वादिभिरुक्तत्वात् व्याकरणस्य नेद|प्रयोजनमिति केचित्; तच्चिन्त्यम्, व्याकरणमूलत्वात्तदुपदेशस्य; स्मृत्यन्तरेण स्मृत्यन्तरस्यान्यथासिध्ध्ययोगाच्च । ननु प्रयाजाः प्रयाजमन्त्राः, तत्र पदानि सविभक्तिकान्येवेति वचनमिदं व्यर्थमत आह—प्रयाजमन्त्रा इति । ऊह्यमाना याग्निशब्दप्रकृतिकविभक्तिस्तद्युक्ता इत्यर्थः । तदुदाहरति-यथेति । अग्निशब्दात् द्वितीयातृतीया-प्रथमाविभक्तय ऊहिताः । तत्र याज्ञिकप्रसिध्द्या सिद्धशब्दानुक्रमणपरग्रन्थदर्शनेन वा "अग्निर्वृत्राणि जङ्घनत्" "अग्निं स्तोमेन बोधय" "अग्निनाग्निः समिध्यते" इत्यादिवैदिक-

प्रयोगेण वा विभक्तिज्ञानसंभवान्नेदं व्याकरणप्रयोजनमिति न वाच्यम्; आद्यद्वयस्य व्याकरणमूलकत्वात्, वैदिकप्रयोगस्य विक्षिप्तस्य सहसा ज्ञातुमशक्यत्वात्, आनुषङ्गिकप्रयोजनत्वाविरोधाच्च। संख्येति; स्वरश इत्यादावप्यनेनैव शस् । स्वरशब्देनाज्ग्रहणशङ्कां वारयति—उदात्तादिरिति। वर्णशोऽक्षरश इत्यनयोः पौनरुक्त्यनिरासायाह—अक्षरमिति । वर्णशब्देनेतरासहिताल्मात्रग्रहणमिति भावः। आर्त्विजीनशब्दस्य तन्त्रेणावृत्त्या वा ऋत्विग्यजमानोभयपरत्वमाह—ऋत्विजमर्हतीति । ननु ऋत्विक्छब्दस्य तत्कर्मपरत्वे प्रमाणाभावात् कथं तदर्हे खञ्? अत आह—यज्ञिर्त्विग्भ्यामिति। आर्त्विजीनशब्दस्योभयपरत्वे युक्तिमाह—विद्वानिति; विनिगमकाभावादिति भावः । वाचं वेदं विदधाति विशेषेण जानात्यधीते वा । यद्यपि ज्ञानाध्ययनयोरध्यापकपरंपरासिद्धत्वान्न व्याकरणापेक्षा, तथापि "अणोरणीयान्" "अणवश्च मे" इत्यादावेकस्यैवाणुशब्दस्यान्तोदात्तत्वाद्युदात्तत्वदर्शनेन धान्यवाचिन आद्युदात्तत्वं परिमाणवाचिनोऽन्तोदात्तत्वमिति विवेकस्य व्याकरणाधीनत्वात् 'दध्याशयति' इत्यादौ संध्यक्षरसंख्याया अपि तदधीनत्वादानुषङ्गिकफलत्वाविरोध इति । मन्त्रतात्पर्यमाह—शब्दस्येति । कालानां शब्दसंबन्धमाह—लडादीति। स्फोटस्य नित्यत्वादनित्यत्वायोगमाशङ्क्याह—व्यञ्जकेति । व्यञ्जकोऽनित्यः। व्यङ्ग्यो नित्यः स्फोटः । भाष्ये सप्तेति छन्दांसि; गायत्रीबृहतीत्रिष्टुब्जगत्यनुष्टुप्पङ्क्त्युष्णिक्ककुभ इति मन्ते अष्टौ छन्दांसि; तत्रान्त्ययोरुष्णिक्ककुभोरेकाकारेण सप्त छन्दांसीति वेदभाष्ये उक्तम्। साक्षाद्व्याकरणप्रतिपाद्यत्वाभिप्रायेणाह भाष्ये—सप्त विभक्तय इति । ननु तिङ्विभक्तयः षडेव, अत आह—सुप इति । तिङामिति; 'विभक्तिशब्दस्य समुदायप्रसिद्धिमाश्रित्यैवं व्याख्यायमाने' इत्यादिः । सह शेषेणेति; यद्यपि शेषस्य न कारकत्वं तथापि शेषेण सह कारकाणि सप्तेति सप्तसंख्यापूरकत्वं "मनःषष्ठानि" इतिवद्युक्तम् । विभज्यते प्रत्ययविशेषेणानेकधा शब्दोऽनेनेति व्युत्पत्त्या विभक्तिशब्देन शेषसहितकारकग्रहणं युक्तमिति भावः । जलवर्षशङ्कां वारयति—कामानामिति । कामानामित्यध्याहारे हेतुमाह—ज्ञानेति । "एकः शब्दः सुज्ञातः सुप्रयुक्तः स्वर्गे लोके कामधुग्भवति" इति श्रुत्या कामवर्षणस्योक्तत्वादिति भावः। यद्वा 'वर्षणात्' इत्यनेन फलदानं विवक्षितमित्याह—कामानामित्यादि, इत्येकग्रन्थतयैव योज्यम् । भाष्ये—शब्दं करोतीति; शब्दस्य प्रकाशमानत्वमेव शब्दकर्तृत्वम्; प्रसिद्धवृषभसाम्यार्थं शब्दकर्तृत्वरूपितं वा। "शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति" इत्यभिप्रेत्याह—परब्रह्मणेति । शब्देन तादात्म्यमयुक्तमित्याशङ्क्याह—परेति; स्फोटस्य परब्रह्मरूपत्वादिति भावः । चत्वारीत्यनेनोभयग्रहणे हेतुमाह—चत्वारीति । यद्यपि भाष्यकारस्येदं प्रयोजनानुक्रमणं नान्यदीयं, येन व्याख्यानद्वयं भाष्यकारस्य युज्येत; तथापि 'चत्वारि शृङ्गा' इति 'चत्वारि वाक्' इति वा पठनीये 'चत्वारि' इति मन्त्रद्वयाभिप्रायेण भाष्यकारेणैवं पठितमित्याशयः। भष्यात् पूर्वनिबन्धेष्विदं प्रयोजनानुक्रमणमित्यपि केचित्। परिमितेत्यस्य टावन्तत्वेऽनन्वयमाशङ्क्याह—परिमितानीति । एवं 'निहितानि' इत्यस्य 'निहिता' इति रूपमिति ज्ञेयम् । परिमितत्वं परिमाणवत्त्वं शब्दे न संभवत्यत आह—परिच्छिन्नानीति; परिच्छेदकत्वात् संख्यापि परिमाणमित्युच्यत इति भावः । विशेषणप्रयोजनमाह—एतावन्त्येवेति; तथापि तान्यवैयाकरणो न जानातीति तन्निन्दा प्रयोजनमित्यर्थः । पृषोदरादित्वादिति;

तस्याकृतिगणत्वादमुनो लोपः ककारस्य च षकार इति भावः । इत्याह; इति शङ्काया-माह । श्रुतौ प्रसिद्धगुहाग्रहणायोगादाह—अज्ञानमेवेति । सर्वशब्दज्ञानं व्याकरणस्य प्रयो-जनमनेनोक्तमित्याह—व्याकरणेनेति । तुरीयं वाच इत्येतद्व्याचष्टे—तन्नेति। ननु यदि संस्कृता-ज्ञानिनोऽवैयाकरणास्तर्हि शतांशमपि ते न वदन्ति; यद्यनधीतव्याकरणाः प्रयोगशरणास्त-र्हि निपातोपसर्गान् सर्वानपि ते वदन्तीति 'एकस्य चतुर्थभागस्' इत्ययुक्तमिति चेत्, अत्राहुः—उपसर्गाणामल्पत्वेन कथंचित् सर्वप्रयोगसंभवेऽपि निपातानां न संभवति; नामाख्याता-नां च चतुर्थभागस्याप्यप्रयोगः; साकल्येन सर्वशब्दज्ञानमवैयाकरणस्य नास्ति; वैयाकर-णस्य तु क्वचित् सामान्येन क्वचिद्विशेषेण च तदस्तीति श्रुतेस्तात्पर्यम् । परिमितानीत्यादिना वदन्ती त्यन्तेन श्रुतिं व्याख्याय भाष्यमनुसंधत्ते—नेङ्गयन्तीति; न निमिषन्ति, न प्रकाशन्त इति यावत्। अत्र चत्वारि शृङ्गेत्यस्य विषुवति होमाज्यप्रयुक्तस्य तदनुगुण एवार्थो वाच्यो न त्वदुक्तः, चत्वारि वागित्यस्यापि त्वदुक्तार्थग्रहे तुरीयं वाच इत्यसंबन्धः, चतुर्णामपि पदानां मनुष्यैरुच्य-मानत्वादिति केचित् । तच्चिन्त्यम् । कर्मसंनिधौ पठितस्य कर्मपरत्वेऽप्युपनिषत्सु पठितस्य "चत्वारि शृङ्गा" इत्यस्य ब्रह्मप्राप्त्यनुकूलतया व्याख्येयत्वेनोक्तव्याख्यानस्य युक्ततर-त्वात् । अत एव महता तादात्म्यं स्यादित्युक्तम् । अत एव "नवो नवो भवति जायमानः" इत्यस्यादित्यचन्द्रदैवत्ययागद्वये विनियुक्तस्य चन्द्रसूर्योभयप्रकाशकत्वेन व्याख्यानद्वयं वेद-भाष्ये स्थितम् । अवैयाकरणस्य साकल्येन सर्वपदज्ञानस्य कस्याप्यसंमतत्वेन चतुर्णामपि पदानां मनुष्यैरुच्यमानत्वादित्यस्य मनुष्यशब्देनावैयाकरणविवक्षयैव निरस्तत्वात् । ब्रह्मप्रकर-णाधीतचत्वारिशृङ्गेत्येतत्सरूपस्य चत्वारि वागित्यस्य तदनुसारिव्याख्यानस्योचितत्वात् तद्व्याख्यानं वाक्कौशलमात्रम् । अत एव वैशेषिकादिभिरपि स्वशास्त्रपरतया योजयितुं शक्यमित्यतिप्रसङ्गो निरस्तः । श्रुतावन्यशब्दाभावाद्भाष्ये अपि खल्वेक इत्ययुक्तमत आह—त्वशब्द इति । भाष्ये एकशब्दोऽन्यवाची । भाष्ये अपि खल्विति प्रसिद्धिद्योतकम् । नन्वपिशब्दार्थो-तशब्दस्य अन्यशब्दार्थत्वशब्देनान्वये वैयर्थ्यं, पश्यन्नपीति भाष्यानार्जवं चात आह—स चेति । अपिशब्दार्थ उतशब्दः; पश्यन्नपि शृण्वन्नपीत्यन्वेतीत्यर्थः। पदार्थमुक्त्वा वाक्यार्थमाह—प्रत्यक्षेति। विरोधं परिहरति—अर्थेति । एवं शृण्वन्नपीत्यस्याप्यर्थः । अत्यन्ताज्ञत्वद्योतनाय निन्दा-द्वयम् । निपातेति; उत उ इति निपातद्वयसमाहारस्त्वर्थ इत्यर्थः । पूर्वार्धे अविद्व-च्छब्दाभावादविद्वांसमित्ययुक्तमत आह—विद्वल्लक्षणमिति; अर्थापरिज्ञानं तल्लक्षणमित्यर्थः । अत्र लोकनिरुक्तकल्पमीमांसोत्पन्नपदार्थवाक्यार्थज्ञानप्रशंसा गम्यते, न व्याकरणोपयोग इति न वाच्यम्; पदार्थज्ञानोपयुक्ततया प्रसक्तव्याकरणस्य प्रतिषेधायोगात् । षचतेस्तुन्नन्तस्य सक्तुरिति रूपे दुःशोधत्वमर्थः । कसतेस्तुनि वर्णव्यत्ययेन सक्तुरिति पक्षे विकसितस्तुषमिश्र इत्यर्थः । दृष्टान्तलभ्यमर्थमाह—यथेति । वर्णव्यत्ययः; आद्यन्तवर्णयोः कस्य सः, सस्य क इत्यर्थः । विस्तारयुक्तं शूर्पादि। बहुच्छिद्रं चालिनी । सामार्थ्यादाह—वैयाकरणा इति । लेलैंगिति; च्लिप्रत्ययस्य लुकि सति यणादेशे अक्रतेति रूपम् । समान-ख्यातय इत्यस्य व्याख्यानं भेदग्रहस्येति; सायुज्यानीति; जीवभेदविवक्षया बहुवच-नम् । ज्ञानेनैवेति; "नान्यः पन्थाः" इति श्रुतेरिति भावः । वेदान्तेषु;

"सत्यं ज्ञानम्" इत्यादिषु। यत्र ब्रह्मणि विषये वाचं वेदरूपां व्याकरणेनापशब्देभ्यो विविक्तां कृतवन्तः अत्र ब्रह्मणि जीवब्रह्मैक्यज्ञानात् सायुज्यं प्राप्नुवन्ति। ज्ञानरूपा च लक्ष्मीर्वेदान्तेषु निहितास्ते। अतः पदार्थज्ञानद्वारा वाक्यार्थभिदज्ञानस्य व्याकरणाधीनत्वात् व्याकरणमध्येयमिति श्रुतितात्पर्यम्। यद्यपि कर्मज्ञानेऽप्युपयोगोऽस्ति तथाऽपि विशेषेणोपयोगोऽनेनोक्तः। एवं चाविप्लुतस्वाध्यायाध्ययननिर्मलवेदार्थज्ञानप्रशंसार्थ एवायं मन्त्रो न व्याकरणप्रयोजनपर इत्याग्रहमात्रमिति ज्ञेयम्। भाष्ये—परिपवनं परिशोधनम्; करणे ल्युट्। भाष्ये—वाग्विषयः; वेदान्तविषयो ब्रह्मरूपः। 'सख्यानि जानते' इत्यत्र कर्तॄन् पृच्छति भाष्ये—के पुनस्ते इति। उत्तरं भाष्ये—वैयाकरणा इति। पूर्वार्धे तेषामेव प्रकृतत्वादिति भावः। वैयाकरणानामात्मज्ञानसाधनं पृच्छति भाष्ये—कुत एतदिति; एतत्सायुज्यसाधनं ज्ञानं कुतो हेतोरित्यर्थः। "वेदान्तेभ्यः" इत्युत्तरतात्पर्यम्। भवार्थे इति; पापनाशकत्वेन विहितं कर्म प्रायश्चित्तम्; तत्र भवा तन्मध्यस्था सारस्वतीष्टिः। 'प्रायश्चित्तीयाः' इत्यत्र भवार्थे छानुपयोगात् प्राक्क्रीतीयच्छान्तत्वमाह—प्रायेति। प्रायश्चित्ताय हिता इत्यर्थे "प्राक्क्रीताच्छः" इत्यर्थः। प्रायश्चित्तायेत्यस्य व्याख्यानं पापेत्यादि कर्मणा इत्यन्तम्। पदार्थमुक्त्वा तात्पर्यमाह—तन्निमित्तेति। प्रायश्चित्तनिमित्तमपभाषणम्; तदुत्पादका अपशब्दभाषका मा भूमेत्यर्थः।

यत्तु "वैदिकशब्दविनाशानृतवादम्लेच्छभाषाश्रयमेतत्, न व्याकरणाननुगतशब्दप्रयोगविषयम्; तथाहि—

> कथं नामेदृशान्मार्गात्सर्व एवाहिताग्नयः।
> प्रच्यवेरन् कथं चान्यैर्न निन्द्येरन्नशिष्टवत् ॥

प्रायेण हि विशिष्टानां धर्माचारे प्रणिहितचेतसां कश्चिदेव प्रमादादल्पानाचारो भवति; गाव्यादिप्रयोगेषु पुनर्न केषांचिदनाचारबुद्धिः, न कलञ्जभक्षणादिवद्विचिकित्सा गर्हा वा दृश्यते। न चाहिताग्निसहस्रेऽप्येकस्त्वदभिमतसाधुशब्दैरेव व्यवहारमाणो दृश्यते" इति वार्तिकम्, तच्चिन्त्यम्; अपशब्दपदस्य व्याकरणाननुगतशब्दे प्रसिद्धस्यार्थान्तरकल्पनायोगात्; अन्यथा अनधीतमीमांसावेदानामेव प्रायेण कर्मानुष्ठानदर्शनेन निन्दाया अदर्शनेन महत्त्वबुद्धिदर्शनेन च वेदाध्ययनमीमांसयोरप्यनुपयोग एव स्यात्। यदि चाध्ययनविधेरर्थज्ञानपर्यन्तत्वस्य स्थितत्वादध्ययनरहितस्य कर्मानधिकारः, तर्हि व्याकरणाननुगतशब्दभाषणस्यापि पापहेतुत्वमनिवार्यम्। "दशम्यां पुत्रस्य" इत्यनुक्रम्य "दशम्युत्तरकालम्" इति पाठान्तरमाश्रितम्; तत्र व्याख्यानपूर्वकं तात्पर्यमाह—दशम्या इति। योगेति—भयादिषूत्तरशब्दाभावादित्यर्थः। तत इति, दशम्युत्तरः कालो यस्मिन्निति बहुव्रीहिः। नामविशेषणत्वासंभवादाह – क्रियेति। पाठान्तरस्वीकारे प्रयोजनमाह—दशेति। दशम्यामिति पाठस्यासाधुत्वं निराह—येऽपीति। सामीपिकमिति; दशमीसमीपे दशम्युत्तरदिन इत्यर्थः नवमदिनस्यापि तत्समीपत्वाद्दशम्यामतीतायामित्यध्याहारसूचनाय भाष्ये पाठान्तरानुसरणमिति ज्ञेयम्। घोषवदक्षरमादौ यस्य तत् घोषवदादि; अन्तर्मध्ये अन्तःस्थं यस्य

---

तन्त्रवा. Page 199.

तत् अन्तरन्तःस्थम् ; तद्व्याचष्टे—घोषवन्त इति । शिक्षायामिति; वर्गप्रथमद्वितीयशष-सव्यतिरिक्ता इत्यर्थः । त्रित्वयुक्ताः पुरुषाः त्रिपुरुषा इति विग्रहः ; तेन ताननु कायतीति विग्रहोपपत्तिः । अत्र मूलविभुजादित्वात् कः ; न तु "आतोऽनुपसर्गे" इत्यनेन, अनुपसर्ग इति प्रतिषेधात् । केचित्तु—तात्पर्यकथनमेतत्, न विग्रहवाक्यम्; अनु कायतीति "आतश्चोपसर्गे" इति कः; त्रयाणां पुरुषाणां समाहारस्त्रिपुरुषम् ; पात्रादित्वान्न स्त्रीत्वम् ; त्रिपुरुषस्यानूकमिति षष्ठीसमास इत्याहुः । अत्र कृत्तद्धितसंज्ञयोर्व्याकरणेऽपि पूर्वसिद्धयोरेवोपादानान्न व्याकरणापेक्षेति न वाच्यम्, पूर्वसिद्धिः व्याकरणान्तरे; न तु लोके शास्त्रान्तरे वा । तथाच व्याकरणापेक्षावश्यक्येत्र । मन्त्रस्य तात्पर्यमाह—वरुणस्येति । वरुणस्य व्याकरणज्ञाने सत्यदेवत्वमिति स्तूयते । तत एवान्येषामपि वरुणतुल्यता भवति । तदर्थं व्याकरणमध्येयमिति भावः । सिन्धुशब्देन विभक्तिग्रहणे हेतुमाह—नद्य इवेति; यथा नद्यः कुतश्चिद्देशात् प्रवहन्ति, एवं ताल्वादिदेशादभिव्यक्ताः प्रकाशन्त इति सिन्धुसाम्यात् सिन्धवो विभक्तय इत्यर्थः । प्रसिद्धनदीनां काकुदं प्राप्य प्रकाशासंभवान्न तद्ग्रहणं युक्तम् । ताल्वादिस्थानस्य वर्णाभिव्यञ्जकत्वाद्विभक्तिज्ञानस्य च व्याकरणाधीनत्वात् व्याकरणाधीनसाधुशब्दप्रयोगस्य सुदेवत्वहेतुत्वप्रतीतेर्व्याकरणविषयोऽयं मन्त्रो न भवतीत्ययुक्तम्। वदेः शब्दकर्मकत्वाज्जिह्वोच्यत इत्ययुक्तमत आह—अनेकार्थत्वादिति। काकुदमिति भाष्ये "घञर्थे कविधानम्" इति वदेरधिकरणे कः। ततः षष्ठीसमासः। पृषोदरादित्वादेकस्योकारस्य लोपः। ततः काकुदमिति सिध्यति। अनुक्षरन्ति काकुदमित्यस्य तात्पर्यमाह—अनुक्षरन्तीति। सूर्म्यमित्यत्र यणं साधयति—सूर्मिमिति। भाष्ये ऊर्मि सुषिराम्; ऊर्मितुल्यां सुषिराम्। सुषिरस्य प्रवेशनकर्मत्वे दहनकर्म किंचिदध्याहार्यम्। सुषिरस्यैव वोभयकर्मत्वम्। यथाग्निर्दहन् प्रकाशते तथा विभक्तयोऽपि प्रकाशन्त इति दार्ष्टान्तिकसंगतिः।

**भा.—किं पुनरिदं व्याकरणमेवाधिजिगांसमानेभ्यः प्रयोजनमन्वाख्यायते ?न पुनरन्यदपि किंचित् । ओम् इत्युक्त्वा वृत्तान्तशः[1] शमित्येवमादीन् शब्दान् पठन्ति । पुरा कल्प एतदासीत्—संस्कारोत्तरकालं ब्राह्मणा व्याकरणं स्माधीयते । तेभ्यस्तत्तत्स्थानकरणनादानुप्रदानज्ञेभ्यो वैदिकाः शब्दा उपदिश्यन्ते । तदद्यत्वे न तथा । वेदमधीत्य त्वरिता वक्तारो भवन्ति—'वेदान्नो वैदिकाः शब्दाः सिद्धा लोकाच्च लौकिकाः; अनर्थकं व्याकरणम्' इति । तेभ्य एवं विप्रतिपन्नबुद्धिभ्योऽध्येतृभ्यः सुहृद् भूत्वाचार्य इदं शास्त्रमन्वाचष्टे—इमानि प्रयोजनानि ; अध्येयं व्याकरणमिति ।**

---

१ अन्नंभट्टमते 'वृत्तान्तं' इत्येव भाष्यपाठः ।

प्र.— किं पुनरिति । ननु कानि पुनरस्येति येन पृष्टं स एव कथं पृच्छति 'किं पुनः' इति ? एवं तर्हि भाष्यकारः प्रयोजनान्वाख्यानस्य विषयाविभागं दर्शयति । पुरा वेदाध्ययनात्पूर्वं व्याकरणमधीयते; ते बाल्यात्प्रष्टुमसमर्था इति न प्रयोजनमन्वाख्येयम् । अद्यत्वे तु स्वल्पायुष्ट्वात्पूर्वमेव वेदं प्रधानमधीयते। ततः प्रष्टुं समर्थत्वात् व्याकरणाध्ययनस्य प्रयोजनं पृच्छन्तीत्यवश्यान्वाख्येयं प्रयोजनम् । न पुनरन्यदिति; वेदमप्यधिजिगांसमानेभ्य इत्यर्थः । ओमित्युक्त्वेति, अभ्युपगम्येत्यर्थः । वृत्तान्तश[2] इति; वृत्तान्तः प्रपाठक उच्यते; वृत्तान्तं वृत्तान्तं पठन्तीत्यर्थः । अद्यत्व इति, अद्यत्वेशब्दो निपातोऽस्मिन् काल इत्यत्रार्थे वर्तते । त्वरिता इति; विवाहादौ ।

उ.—किंपुनरिति भाष्यमाक्षिपति—नन्विति। व्याकरणाध्ययनस्यैव प्रयोजनप्रश्ने फलोक्तेस्तस्यैवेति निश्चितत्वादन्यविषयत्वशङ्का तस्यानुपपन्नेत्यर्थः। एवं तर्हीति; व्याकरणाध्येतुः प्रयोजनजिज्ञासायां प्रयोजनं वाच्यम्; तज्जिज्ञासाया बालकानामभावात्तन्न वाच्यमिति मध्यस्थशङ्कामिदानींतनानां तत्संभवोपपादनेन निरस्यतीति भावः। विषयति; वर्तमानकालविषयत्वमिति यावत्। तत् विशदयति—पुरेति। ननूपाकर्मानन्तरं स्वाध्यायेषु वेदाध्ययनमनध्यायेष्वङ्गाध्ययनमिति क्रममतिक्रम्य कथं पूर्वमङ्गाध्ययनमिति चेत्; अत्राहुः—व्याकरणस्यार्थज्ञाने शब्दस्वरूपे चोपयोगोऽस्ति; तदुक्तं भाष्ये—स्थानकरणेति; तथा च पूर्वमपि व्याकरणाध्ययनं युक्तमेवेति।

ननु 'अन्यदपि' इत्येतत् 'ओम्' इत्यादिनैकवाक्यं, भिन्नवाक्यं वा? आद्ये नपुंसकैकवचनान्तस्य पुंलिङ्गबहुवचनान्तेन सामानाधिकरण्यायोगः,। द्वितीये प्रथमान्तं द्वितीयान्तं वा; आद्ये विषयप्रयोजनसंबन्धाधिकारिपरं वाच्यम्; तत्र व्याकरणमेवेत्येवकारानुपपत्तिः; प्रश्नाननुगुणं चोत्तरं स्यात्। द्वितीये क्रियापदाभावादनन्वयः; अत आह—वेदमिति। भाष्ये 'किंचिदपि' इत्यनन्तरम् 'अधिजिगांसमानेभ्यः' इत्यनुषङ्गः। 'किं तत्' इत्याकाङ्क्षायाम् 'ओम्' इत्यादि भाष्यम्। 'पठन्ति' इत्यनन्तरं 'ये तेभ्योऽपि' इत्यध्याहारः। 'पुरा' इत्यादि परिहारभाष्यमिति ज्ञेयम्। ननु 'ओमित्युक्त्वा' इत्यस्य प्रकृतोपयोगाभावोऽत आह—अभीति। यथा वेदे प्रयोजनाभावमभ्युपेत्य प्रयोजनज्ञानमनपेक्ष्य प्रवृत्तिः, तथा व्याकरणाध्ययनेऽपीति शङ्कातात्पर्यम्। वृत्तान्तशब्दार्थमाह—

---

२. अन्नंभट्टमते—'वृत्तान्तमिति; वृत्तान्तः प्रपाठः; वृत्तान्तं पठन्तीत्यर्थः।' इति प्रदीपपाठः।

प्रपाठ इति; प्रकर्षेण पाठः। पाठस्य प्रकर्षो नाम स्वाधीनोच्चारणसंपादकत्वम्; वृत्तान्तमिति क्रियाविशेषणम्; स्वाधीनोच्चारणक्षमं यथा भवति तथा पठन्तीत्यर्थः। एतेन 'वृत्तान्तं शमित्यंत्रमादीन्' इति भाष्यपाठः प्रामाणिकः; 'वृत्तान्तशः शमित्येवमादीन्' इति शसन्तपाठः प्रामादिक इति ज्ञेयम्। भावप्रत्ययान्तत्वे विवक्षितार्थालाभादाह---अद्यत्वशब्द इति। विवाहादाविन्यादिना तुरीयाश्रमपरिग्रहः।

**भा.**—शब्दानुशासनमिदानीं कर्तव्यम्। तत्कथं कर्तव्यम्? किं शब्दोपदेशः कर्तव्यः, आहोस्विदपशब्दोपदेशः, आहोस्विदुभयोपदेश इति। अन्यतरोपदेशेन कृतं स्यात्। तद्यथा—भक्ष्यनियमेनाभक्ष्यप्रतिषेधो गम्यते; "पञ्च पञ्चनखा भक्ष्याः" इत्युक्ते गम्यत एतद् अतोऽन्येऽभक्ष्या इति। अभक्ष्यप्रतिषेधेन वा भक्ष्यनियमः; तद्यथा 'अभक्ष्यो ग्राम्यकुक्कुटः, अभक्ष्यो ग्राम्यसूकरः' इत्युक्ते गम्यत एतद् आरण्यो भक्ष्य इति। एवमिहापि। यदि तावच्छब्दोपदेशः क्रियते, गौरित्येतस्मिन्नुपदिष्टे गम्यत एतद् गाव्यादयोऽपशब्दा इति। अथाप्यपशब्दोपदेशः क्रियते, गाव्यादिषूपदिष्टेषु गम्यत एतद् गौरित्येष शब्द इति। किं पुनरत्र ज्यायः? लघुत्वाच्छब्दोपदेशः। लघीयान् शब्दोपदेशः, गरीयानपशब्दोपदेशः। एकैकस्य शब्दस्य बहवोऽपभ्रंशाः; तद्यथा—गौरित्यस्य शब्दस्य गावी गोणी गोता गोपोतलिकेत्येवमादयोऽपभ्रंशाः। इष्टान्वाख्यानं खल्वपि भवति। अथैतस्मिन् शब्दोपदेशे सति किं शब्दानां प्रतिपत्तौ प्रतिपदपाठः कर्तव्यः—'गौरश्वः पुरुषो हस्ती शकुनिर्मृगो ब्राह्मणः' इत्येवमादयः शब्दाः पठितव्याः? नेत्याह; अनभ्युपाय एष शब्दानां प्रतिपत्तौ प्रतिपदपाठः। एवं हि श्रूयते—"बृहस्पतिरिन्द्राय दिव्यं वर्षसहस्रं प्रतिपदोक्तानां शब्दानां शब्दपारायणं प्रोवाच, नान्तं जगाम"। बृहस्पतिश्च प्रवक्ता, इन्द्रश्चाध्येता, दिव्यं वर्षसहस्रमध्ययनकालः, न चान्तं जगाम। किं पुनरद्यत्वे? यः सर्वथा चिरं जीवति स वर्षशतं जीवति। चतुर्भिश्च प्रकारैर्विद्योपयुक्ता भवति—आगमकालेन, स्वाध्यायकालेन, प्रवचनकालेन, व्यवहारकालेनेति। तत्र चास्यागमकालेनैवायुः कृत्स्नं पर्युपयुक्तं स्यात्। तस्मादनभ्युपायः शब्दानां प्रतिपत्तौ प्रतिपदपाठः। कथं तर्हीमे शब्दाः प्रतिपत्तव्याः? किंचि-

**त्सामान्यविशेषवल्लक्षणं प्रवर्त्यम्, येनाल्पेन यत्नेन महतो महतः शब्दौघान् प्रतिपद्येरन्। किं पुनस्तत्? उत्सर्गापवादौ। कश्चिदुत्सर्गः कर्तव्यः, कश्चिदपवादः। कथंजातीयकः पुनरुत्सर्गः कर्तव्यः, कथंजातीयकोऽपवादः? सामान्येनोत्सर्गः कर्तव्यः; तद्यथा-"कर्मण्यण्"। तस्य विशेषेणापवादः; तद्यथा-"आतोऽनुपसर्गे कः"।**

प्र.—उभयोपदेश इति; हेयोपादेयोपदेशे स्पष्टा प्रतिपत्तिर्भवतीत्युभयोपदेश उद्भावितः। यद्यपि प्रतिपत्तिः स्पष्टा, गौरवं तु भवतीत्याह—अन्यतरेति; शब्दापशब्दयोरित्यर्थः। अन्यतरान्यतमशब्दावव्युत्पन्नौ स्वभावाद् द्विबहुविषये निर्धारणे वर्तेते। पञ्चेति; अर्थित्वात् भक्षणं प्राप्तं पञ्चसु पञ्चनखेषु नियम्यमानं सामर्थ्यादन्येभ्यो निवर्तते। न त्वयं विधिः, अप्राप्तेरभावात्। किं पुनरिति; उभयोपदेशात् गुरोर्द्वावपि प्रशस्यौ; तयोः को ज्यायानित्यर्थः। इष्टेति; साधुशब्दप्रयोगाद्धर्मावाप्तेरित्यर्थः; अथ वा उपादेयोपदेशात्साक्षात्प्रतिपत्तिर्भवतीति भावः। बृहस्पतिरिन्द्रायेति; प्रतिपदपाठस्याशक्यत्वं प्रतिपादयितुमयमर्थवादः। शब्दानामिति; शब्दपारायणशब्दो योगरूढः शास्त्रविशेषे। तत्र प्रतिपदोक्तानामिति विशेषणाभिधानाय गम्यमानार्थस्यापि शब्दानामित्यस्य प्रयोगः। एकदेशोपयोगादपि लोके उपयुक्तमित्युच्यते; यथौषधसंस्कृतघृतमात्रैकदेशोपयोगे उपयुक्तं घृतमिति व्यवहारः, तथेह नेति प्रतिपादयति—चतुर्भिरिति। आगमकालो ग्रहणकालः। स्वाध्यायकालोऽभ्यासकालः। प्रवचनकालोऽध्यापनकालः। व्यवहारो याज्ञे कर्माणि। किंचिदिति; सामान्यविशेषौ यस्मिंस्तत् सामान्यविशेषवत्; "कर्मण्यण्" "आतोऽनुपसर्गे कः" इत्यादि।

उ.—भाष्ये वक्ष्यमाणविवेकाय वृत्तसंकीर्तनम्—उक्त इत्यादि। येनोच्चारितेनेति तत्स्वरूपमुक्तम्। प्रयोजनान्युक्तानि। विषयप्रयोजनोक्तौ संबन्धाधिकारिणावप्युक्तप्रायौ। तदेवमनुबन्धचतुष्टयसद्भावादारब्धव्ये शास्त्रे तत्प्रकारनिरूपणाय किमित्याद्युत्तरग्रन्थः। ननु गौरवादुभयोपदेशो न संगतः; अत आह—हेयेति। ननु स्पष्टप्रतिपत्तेरुक्तत्वादन्यतरेत्ययुक्तम्; अत आह—यद्यपीति। गौरवं त्विति; एकोपदेशे तदितरत्वेनान्येषामपि स्पष्टप्रतिपत्तिः स्यादेवेति भावः। ननु शब्दापशब्दानां बहुत्वादन्यतरेत्ययुक्तम्; अत आह—शब्दापशब्दयोरिति।

जातिद्वयविवक्षया द्वित्वोपपत्तिरिति भावः। नन्वत्राव्युत्पन्नत्वान्न द्वयोर्निर्धारणविषयत्वम्; अत आह—अन्यतरेति। अव्युत्पन्नौ; अव्युत्पन्नावपि। डतरडतमयोः किंयत्तदामेव प्रकृतत्वादिति भावः। एकोपदेशेनेतरसिद्धिमुदाहरति भाष्ये—तद्यथेति। "पञ्च पञ्चनखाः" इत्यस्य नियमविधित्वमुपपादयति—आर्थत्वादिति। रागतः प्राप्तत्वाद्भक्षणस्य नायमपूर्वविधिः। यद्यप्ययं परिसंख्याविधिः; तथाप्यप्राप्तांशपरिपूरणफलको नियमविधिः, इतरनिवृत्तिफलकः परिसंख्याविधिरिति तयोरवान्तरभेदसत्त्वेऽपि नियमेऽपीतरनिवृत्तिसत्त्वेन तद्वत्त्वमात्रेण द्वयोरभेदं विवक्षित्वा नियम्यमानमित्युक्तम्। यद्वा परिसंख्यायास्त्रैदोष्यात् कथंचिदप्राप्तांशपरिपूरणसंपादनेन नियमविधिरेवायमिति भाष्यप्रदीपयोराशयः। विधिः, अपूर्वविधिः। ननु द्वयोः प्रशस्तयोरेकस्यातिशये आतिशायनिकप्रत्ययः। अत्रापशब्दानां बहुत्वेन तदुपदेशस्याप्रशस्तत्वेनावानयोः किं ज्याय इत्यनुपपन्नम्; अत आह—उभयेति। साधुशब्दोपदेशे हेत्वन्तरकथनाय इष्टेति भाष्यं व्याचष्टे—साध्विति। ननु साधुप्रयोगस्य धर्मसाधनत्वं साक्षान्न तदुपदेशप्रयोजकम्, इतरोपदेशेऽपि तदितरयावज्ज्ञानेन प्रवृत्तिसंभवात्; अत आह—अथवेति। "एकः शब्दः सुज्ञातः" इति विध्युपपादकव्याकरणस्य साक्षात्साध्वनुशासनमेव कार्यमिति भावः। ननु प्रतिपदपाठेनापि साधुशब्दज्ञानसंभवात् व्याकरणं व्यर्थमित्याशङ्क्य प्रतिपदपाठं दूषयितुं शङ्कते भाष्ये—अथेति। 'बृहस्पतिः' इत्यादेस्तात्पर्यमाह—प्रतिपदेति; ननु शब्दपारायणशब्दो यौगिको रूढो वा; आद्ये शब्दानामिति व्यर्थम्, समासेनैव प्राप्तत्वात्; द्वितीये शब्दपारायणमिति व्यर्थम्; प्रतिपदोक्तान् प्रोवाचेत्येव वक्तव्यत्वादत आह—शब्देति। केवलयौगिकत्वे शब्दप्रतिपादकग्रन्थमात्रस्य तच्छब्दवाच्यत्वं स्यात्; अतो रूढिरप्यङ्गीकृता। तत्र 'शब्दपारायणं प्रोवाच' इत्येव विवक्षितम्। तत्र प्रतिपदोक्तत्वाप्रतीतेस्तदर्थं प्रतिपदोक्तानामिति विशेषणम्। तावतैव समासावयवशब्दविशेषणत्वप्रतीतौ स्पष्टप्रतिपत्तये शब्दानामित्युपात्तम्; शब्दानां प्रतिपदोपदेशकग्रन्थविशेषमध्यापयामासेति समुदायतात्पर्यम्। ननु व्यवहारोपयुक्तकतिपयज्ञानेऽपि सुशब्दप्रयोगसंभवात् प्रतिपदपाठोऽभ्युपाय एवेति शङ्कानिरासाय चतुर्भिरिति भाष्यमित्याह—एकदेशेति। तथेहेति; सर्वशब्दज्ञानव्यतिरेकेण तद्भिन्नत्वेनापशब्दज्ञानस्य तद्वर्जनस्य चाशक्यत्वात् सकलशब्दज्ञानं न प्रतिपदपाठे संभवतीति भावः। आगमादीनामपुनरुक्तमर्थमाह—आगमेति। इवार्थे वतिभ्रमं वारयति—सामान्येति। तौ दर्शयति—कर्मणीति।

**भा.—किं पुनराकृतिः पदार्थः? आहोस्विद् द्रव्यम्? उभयमित्याह। कथं ज्ञायते? उभयथा ह्याचार्येण सूत्राणि पठितानि। आकृतिं पदार्थं मत्वा "जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्" इत्युच्यते; द्रव्यं पदार्थं मत्वा "सरूपाणाम्" इत्येकशेष आरभ्यते। किं पुनर्नित्यः शब्दः? आहोस्वित् कार्यः? संग्रह एतत्प्राधान्येन परीक्षितम्—नित्यो वा स्यात्कार्यो**

**वेति। तत्रोक्ता दोषाः, प्रयोजनान्यप्युक्तानि। तत्र त्वेष निर्णयः—यद्येवं नित्यः, अथापि कार्यः, उभयथापि लक्षणं प्रवर्त्यमिति।**

प्र.—सकलशास्त्रव्यवस्थैकतरपक्षाश्रयणे न सिध्यतीति पक्षद्वयाश्रयणं प्रश्नपूर्वकं करोति—किं पुनरिति। आकृतिपक्षे केवल आश्रीयमाणे "सकृद्गतौ विप्रतिषेधेन" इत्यादि नोपपद्यते; केवलेऽपि व्यक्तिपक्षे "पुनः प्रसङ्गविज्ञानात्" इति न घटते। तस्माल्लक्ष्यसिद्धये क्वचित्प्रदेशे कश्चित्पक्षः परिगृह्यते। तत्र जातिवादिन आहुः—जातिरेव शब्देन प्रतिपाद्यते, व्यक्तीनामानन्त्यात् संबन्धग्रहणासंभवात्। सा च जातिः सर्वव्यक्तिष्वेकाकारप्रत्ययदर्शनादस्तीत्यवसीयते। तत्र गवादयः शब्दा भिन्नद्रव्यसमवेतां जातिमभिदधति। तस्यां प्रतीतायां तदावेशात्तदवच्छिन्नं द्रव्यं प्रतीयते। शुक्लादयः शब्दा गुणसमवेतां जातिमाचक्षते। गुणे तु तत्संबन्धात्प्रत्ययः; द्रव्ये संबन्धिसंबन्धात्। संज्ञाशब्दानामप्युत्पत्तिप्रभृति आ विनाशात् पिण्डस्य कौमारयौवनाद्यवस्थाभेदेऽपि 'स एवायम्' इत्यभिन्नप्रत्ययनिमित्ता डित्थत्वादिका जातिर्वाच्या। क्रियाशब्देष्वपि जातिर्विद्यते; सैव धातुवाच्या। 'पठति, पठतः, पठन्ति' इत्यादेरभिन्नस्य प्रत्ययस्य सद्भावात्तन्निमित्तजात्यभ्युपगमः। व्यक्तिवादिनस्त्वाहुः—शब्दस्य व्यक्तिरेव वाच्या। जातेस्तूपलक्षणभावेनाश्रयणादानन्त्यादिदोषानवकाशः। किं पुनरिति; विप्रतिपत्त्या संशयः। केचिद् ध्वनिव्यङ्ग्यं वर्णात्मकं नित्यं शब्दमाहुः। अन्ये वर्णव्यतिरिक्तं पदस्फोटमिच्छन्ति। वाक्यस्फोटमपरे संगिरन्ते। अन्ये तु ध्वनिरेव शब्दः, स च कार्यः, तद्व्यतिरेकेणान्यस्यानुपलम्भादित्याचक्षते। संग्रह इति; ग्रन्थविशेषे।

उ.—किंपुनरित्यस्य प्रकृतोपयोगमाह—सकलेति। एकैकस्मिन्पक्षे व्यवस्थासिद्धिमुपपादयति—आकृतीति। सकृदिति; "सकृद्गतौ विप्रतिषेधेन यद्बाधितं तद्बाधितमेव" "पुनःप्रसङ्गविज्ञानासिद्धम्" इति शास्त्रेऽङ्गीक्रियते। [2] तत्र व्यक्तिपक्षे एकस्यां व्यक्तौ लक्षणद्वयप्रसक्तावेकेनेतरस्य बाधे तल्लक्षणं तद्व्यक्तिमात्रप्रवृत्तं बाधितमेवेति न तस्य पुनःप्रसङ्गसम्भवः।

G omits from तत्र व्यक्तिपक्षे to संभव इति भावः।

जातिपक्षे शास्त्रस्यैकत्वात् क्वचित् व्यक्तौ बाधितस्यापि व्यक्त्यन्तरे विद्यमानत्वान्न सर्वथा बाधः। विद्यमानस्य चेष्टसिद्ध्यै पुनःप्रसङ्गसंभव इति भावः। तत्र "विप्रतिषेधे परम्" इति सूत्रं जातिपक्षे विध्यर्थं, व्यक्तिपक्षे नियमार्थमिति वक्ष्यति। तत्र विधिपक्षे पूर्वस्य निवारकाभावात् सकृद्गताविति न सिध्यति। नियमपक्षे तद्व्यक्तौ पूर्वविधिबाधान्न पुनःप्रसङ्गसिद्धिः। सकृद्गतावित्यस्य 'कुरुतात् त्वम्' इत्युदाहरणम्; तत्र हेर्लुक् प्राप्नोति; परत्वात्तातङि कृते स्थानिवद्भावाल्लुक् न प्रवर्तते। पुनःप्रसङ्गेत्यस्य 'ईजतुः' इत्युदाहरणम्; परत्वात् संप्रसारणे कृते द्विर्वचनं भवति। अतिप्रसङ्गं निराह—तस्मादिति। केवलजातिपक्षं समर्थयति—तत्रेति; विशिष्टशक्तिकल्पनायां गौरवादिति भावः। जातिसद्भावे मानमाह—सा चेति; कार्यकारणभावानुपपत्त्या सातीन्द्रियाप्यङ्गीकार्येति भावः। जातिवाचित्वेन सर्वसंमतानुदाहरति—गवादय इति। देवदत्तत्वाद्यपेक्षया वैलक्षण्यद्योतनाय—भिन्नेति। आनयनादौ द्रव्यस्यैवान्वयात्तदुपस्थितिमाह—तस्यामिति; जातिव्यक्त्योस्तादात्म्याज्जातिभाने व्यक्तेरपि भानं संभवति; अत एव तदावेशादित्युक्तमिति भावः। गुणशब्दानामपि जातिवाचित्वमाह—शुक्लादय इति देवदत्तादिशब्दानामपि तदाह—संज्ञाशब्दानामिति। परिणामभेदेन द्रव्यभेदादनुगतप्रतीत्यभावेऽपि प्रत्यभिज्ञया देवदत्तत्वादिजातिसिद्धिरिति भावः। 'अयं पचति, अयं पचति' इत्यनुगतप्रत्ययेन पाकत्वादिजातिसद्भावात् क्रियाशब्दानामपि तद्वाचकत्वमित्याह—क्रियास्वपीति। व्यक्तिवादिनामाशयमाह—व्यक्तीति। प्रायेण व्यक्तेरेव सर्वत्र क्रियान्वयात्तत्रैव शक्तिः, अवाच्याया अपि जातेरुपलक्षणत्वाङ्गीकारान्नानन्त्यव्यभिचारौ। यद्यपि गोपदाद्गोत्वप्रकारिका धीरनुभवसिद्धा, अनुपस्थितजातेरुपलक्षणत्वासंभवश्च; तथापि केवलयोगवादिनां पङ्कजादिपदे शक्तिं विनापि नियतपद्मत्वोपस्थितिवत् संस्कारविशेषादेव गोत्वाद्युपस्थितिः संभवतीति भावः। येनोच्चारितेनेति भाष्ये श्रोत्रग्राह्यः शब्द इत्युक्तम्। अत्र नित्यत्वादिनिर्णयाय किं पुनरिति भाष्यम्। तत्र संशयबीजमाह—विप्रतिपत्त्येति; वादिनामित्यादिः। तामेवाह—केचिदिति; मीमांसकाः। अन्ये; वैयाकरणाः। अपर इति; वैयाकरणा एव केचित्।अन्ये त्विति; नैयायिकादयः। ध्वनिः; वर्णात्मकः।

**भा.—कथं पुनरिदं भगवतः पाणिनेराचार्यस्य लक्षणं प्रवृत्तम्?**

**वा—सिद्धे शब्दार्थसंबन्धे[1] ।**

**भा.—सिद्धे शब्दे अर्थे संबन्धे चेति। अथ सिद्धशब्दस्य कः पदार्थः? नित्यपर्यायवाची सिद्धशब्दः। कथं ज्ञायते? यत्कूटस्थेष्वविचालिषु भावेषु वर्तते; तद्यथा—'सिद्धा द्यौः, सिद्धा पृथिवी, सिद्धमाकाशम्' इति। ननु च भोः कार्येष्वपि**

[1] "सिद्धे शब्दार्थसंबन्धे लोकतोऽर्थप्रयुक्ते शास्त्रेण धर्मनियमो यथा लौकिकवैदिकेषु" इति वार्तिकं खण्डशो विभज्य व्याख्यातं भाष्ये।

वर्तते ; तद्यथा—' सिद्ध ओदनः, सिद्धः सूपः, सिद्धा यवागूः ' इति । यावता कार्येष्वपि वर्तते, तत्र कुत एतन्नित्यपर्यायवाचिनो ग्रहणं, न पुनः कार्ये यः सिद्धशब्द इति ? संग्रहे तावत्कार्यप्रतिद्वन्द्विभावान्मन्यामहे नित्यपर्यायवाचिनो ग्रहणमिति । इहापि तदेव । अथवा सन्त्येकपदान्यप्यवधारणानि ; तद्यथा ' अब्भक्षः, वायुभक्षः ' इति ' अप एव भक्षयति, वायुमेव भक्षयति ' इति गम्यते । एवमिहापि सिद्ध एव न साध्य इति । अथवा पूर्वपदलोपोऽत्र द्रष्टव्यः–अत्यन्तसिद्धः सिद्ध इति । तद्यथा- 'देवदत्तः, दत्तः ; सत्यभामा, भामा ' इति । अथवा " व्याख्यानतो विशेषप्रतिपत्तिर्न हि संदेहादलक्षणम् " इति नित्यपर्यायवाचिनो ग्रहणमिति व्याख्यास्यामः । किं पुनरनेन वर्ण्येन ? किं न महता कण्ठेन नित्यशब्द एवोपात्तः ? यस्मिन्नुपादीयमानेऽसंदेहः स्यात् । मङ्गलार्थम् ; माङ्गलिक आचार्यो महतः शास्त्रौघस्य मङ्गलार्थं सिद्धशब्दमादितः प्रयुङ्क्ते । मङ्गलादीनि हि शास्त्राणि प्रथन्ते वीरपुरुषाणि च भवन्त्यायुष्मत्पुरुषाणि चाध्येतारश्च सिद्धार्था यथा स्युरिति । अयं खलु नित्यशब्दो नावश्यं कूटस्थेष्वविचालिषु भावेषु वर्तते । किं तर्हि ? आभीक्ष्ण्येऽपि वर्तते ; तद्यथा - ' नित्यप्रहसितः, नित्यप्रजल्पितः ' इति । यावताभीक्ष्ण्येऽपि वर्तते तत्राप्यनेनैवार्थः स्यात्—" व्याख्यानतो विशेषप्रतिपत्तिर्न हि संदेहादलक्षणम् " इति । पश्यति त्वाचार्यो मङ्गलार्थश्चैव सिद्धशब्द आदितः प्रयुक्तो भविष्यति, शक्ष्यामि चैनं नित्यपर्यायवाचिनं वर्णयितुमिति । अतः सिद्धशब्द एवोपात्तो न नित्यशब्दः ।

प्र.—कथं पुनरिति ; किमाचार्य एव स्रष्टा शब्दार्थसंबन्धानाम्, अथ स्मर्तेति प्रश्नः । सिद्ध इति ; तत्र शब्दो जातिस्फोटलक्षणो व्यक्तिस्फोटलक्षणो वा । कार्यशब्दिकानामपि मते प्रवाहनित्यतयार्थस्यापि जातिलक्षणस्य नित्यत्वम् । द्रव्यपक्षेऽपि सर्वशब्दानामसत्योपाध्यवच्छिन्नं ब्रह्मतत्त्वं वाच्यमिति नित्यता, प्रवाहनित्यतया वा । संबन्धस्यापि व्यवहार-

परंपरयानादित्वान्नित्यता । सिद्धशब्दस्य नित्यानित्ययोर्दर्शनात्पृच्छति — अथेति। नित्येति; नित्यलक्षणस्यार्थस्य पर्यायेण वाचकः। तमेवार्थं कदाचिन्नित्यशब्द आह, कदाचित्सिद्धशब्द इत्यर्थः। कूटस्थेष्विति- अविनाशिषु। अविचालिष्विति, देशान्तरप्राप्तिरहितेषु। ननु चेति; सिद्धशब्दात्क्रिया निष्पन्नोऽप्यर्थोऽवगम्यत इत्यर्थः। संग्रहे तावदिति; तत्र हि किं कार्यः शब्दोऽथ सिद्ध इति पक्षद्वयविचारः कृतः। तत्र कार्यप्रतिपक्षार्थाभिधायी सामर्थ्यात्सिद्धशब्द इति स्थितम्। तत्समानतन्त्रत्वादिहापि तथैव युक्तमित्यर्थः। अथवेति; एवशब्दप्रयोगे द्विपदमवधारणं, द्योतकत्वेनैवशब्दस्यापेक्षणात्। यदा तु द्योतकमन्तरेण सामर्थ्यादवधारणं गम्यते तदा तदेकपदमित्युच्यते। तत्र सर्व एवापो भक्षयन्तीत्यभक्षश्रुतिः सामर्थ्यान्नियममवगमयति 'अप एव भक्षयति' इति। इहापि नित्यानित्यव्यतिरेकेण राश्यन्तराभावात्सिद्धशब्दोपादानान्नियमोऽवगम्यते—सिद्ध एवेति। कार्याणां तु पदार्थानां प्रागभावप्रध्वंसाभावयोरपि सत्त्वात् सिद्धता नास्तीति न तेऽपि सिद्धा एव। अथवेति; कथं पुनर्देवदत्तशब्दे संज्ञात्वेन विनियुक्ते एकदेशः प्रयुज्यते? न ह्यसौ संज्ञात्वेन विनियुक्तः; न चैकदेशात्स्मर्यमाणस्य समुदायस्य वाचकत्वमुपपद्यते, प्रतीयमानस्य प्रत्यायकत्वासंभवादुच्चार्यमाणस्यैव वाचकत्वात्। एवं तर्ह्यनुनिष्पादिन्योऽवयवसरूपाः संज्ञा विनियोगकाले विनियुक्ता एव। लोपस्तु वर्णानां साधुत्वं मा भूदित्यन्वाख्यायते। इहापि नित्यानित्ययोर्निष्पन्नत्वाविशेषात्सिद्धश्रुतिरुपात्ता प्रकर्षं गमयति—अत्यन्तासिद्ध इति। न्यायाद्वा नित्यत्वं शब्दादीनां स्थितमित्याह—अथवेति। न हि संदेहमात्रादलक्षणता भवति, पुनः प्रमाणान्तरेण निश्चयोत्पादात्। वर्ण्येनेति; प्रयत्नव्याख्यानव्येनेत्यर्थः। माङ्गलिक इति; अगर्हिताभीष्टार्थसिद्धिर्मङ्गलं, तत्प्रयोजन आचार्यो माङ्गलिकः। प्रथन्त इति; अध्ययनस्याविच्छेदात्। वीरपुरुषाणीति, श्रोतॄणां परैरपराजयात्। आयुष्मत्पुरुषाणीति, शास्त्रानुष्ठाने धर्मोपचयादायुर्वर्धनात्। सिद्धार्था इति; अध्ययननिष्पत्तिरेव तेषां सिद्धिः। नावश्यमिति, ततश्चाभीक्ष्ण्येन ये शब्दाः प्रयुज्यन्ते आगोपालाङ्गनं, तेषामेवान्वाख्यानं स्यात्, न विरलप्रयोगाणाम्।

विनापि च क्रियापदप्रयोगेणाभीक्ष्ण्यवृत्तिर्नित्यशब्दः प्रयुज्यते। यथा — " आश्चर्यमनित्ये " " नित्यवीप्सयोः " इति।

उ.—एवं व्याकरणारम्भं समर्थ्य " सिद्धे " इत्यादिवार्तिकमवतारयितुं कथमिति भाष्यम्। तस्य तात्पर्यमाह—किमिति। स्रष्टा; यथा देवदत्तादिशब्दाः केनचिदर्थविशेषे संकेतिताः, यथा केनचित् शिल्पिना वस्तुविशेषं निर्माय नामविशेषः क्रियते, तद्वदित्यर्थः। स्मर्ता; लोकसिद्धशब्दानाम्। सिद्धशब्देन नित्यत्वं विवक्षितम्। त्रयाणामपि सिद्धत्वं विशेषणम्। तत्र स्फोटरूपशब्दस्य नित्यत्वमस्तीत्याह—तत्रेति। जातिपदार्थवादिनां तद्वाचको जातिस्फोटः; व्यक्तिपदार्थकत्ववाचिनां व्यक्तिस्फोट इति विवेकः। ननु " उभयथाऽपि लक्षणं प्रवर्त्यम् " इत्युक्तेः कार्यपक्षे कथं शब्दस्य सिद्धत्वमत आह—कार्येति। प्रवाहनित्यतया; 'शब्दः नित्यः' इत्यनुषङ्गः। व्यक्तिपदार्थत्वपक्षे कथं सर्वस्यार्थस्य नित्यत्वमत आह—द्रव्यपक्ष इति; गवादिपदानां गवाद्यवच्छिन्नब्रह्मैव वाच्यम्; अत एव सर्वशब्दाभिधेयं ब्रह्मेति सिद्धान्त इति भावः। मतान्तरेऽप्याह—प्रवाहेति। नित्यशब्दपक्षे शक्तिलक्षणसंबन्धस्य नित्यत्वेऽप्यनित्यशब्दपक्षे कथं संबन्धस्य[1] नित्यत्वम्? अत आह—संबन्धस्यापीति। यद्यपि नैयायिकैरनित्यशब्दस्यापीश्वरेच्छारूपशक्तेर्नित्यत्वमङ्गीकृतं, तथापि चिकीर्षादिवच्छक्तित्वमपि व्यवहाराभावकाले अभावादनित्यमेव वाच्यमिति तन्मतायुक्तत्वे तात्पर्यम्। ननु वृद्धव्यवहारेण सिद्धशब्दस्य नित्यार्थकत्वनिश्चयात् प्रश्नो न युक्तः; अत आह—सिद्धशब्दस्येति। दर्शनात्; 'प्रयोगस्य' इत्यादिः। नित्यपर्याय इत्येवालम्; वाचीत्यधिकममन्वितं च; अत आह—नित्यलक्षणस्येति; नित्यपदमर्थपरं न तु शब्दपरमिति नोक्तदोष इति भावः। पदद्वयस्याप्यपुनरुक्तमर्थमाह—अविनाशिष्विति। अनिवाशित्वमात्रमेवोपयुक्तम्; अविचालित्वं स्वरूपकथनमात्रम्। यद्यपि पृथिव्यादेः कार्यत्वाद्विनाशित्वमेव, तथापि " न कदाचिदनीदृशं जगत् " इति मतानुसारेणाविनाशित्वमुक्तम्। ननु " आत्मन आकाशः संभूतः " (तै. उ—२–१) इति श्रुतेराकाशादीनामपि कार्यत्वात् कार्येष्वपीत्ययुक्तमत आह—सिद्धशब्दादिति। आकाशादिकमात्मनः सकाशात् क्रियां विनैवोत्पद्यते; आभूतसंप्लवमवस्थानाच्च नित्यत्वम्; ओदनादेस्तु क्रियानिष्पन्नस्य शीघ्रं विनाशादनित्यत्वमिति भावः। अपूर्वपरतां व्यावर्तयति—सिद्धशब्दादितीति केचित्; तच्चिन्त्यम्, 'कार्यकारणभावः' इत्यादौ सर्वमतेऽपि कार्यशब्दस्य जन्यमात्रे प्रयोगदर्शनेन अपूर्ववाचकत्वायोगात्; तद्ग्रहणेऽप्यपूर्वस्य फलनाश्यतया अनित्यत्वेनानित्यवाचित्वसिद्धेस्तद्व्यावृत्त्यनुपयोगाच्च। कार्यप्रतिपक्षार्थो नित्य एव; तदभिधयीति तत्र सामर्थ्यात् तद्ग्रहणम्। अत्र न सामर्थ्यमस्तीति कथं तद्ग्रहणम्? अत आह—तत्समानेति। नन्वेकपदान्यपीत्ययुक्तम्, द्विपदावधारणानामभावेन समुच्चेयाभावात्; अत आह—एवेति। 'एवशब्दस्य' इति छेदः। एवकाराभावेऽप्यवधारणं दृष्टान्त उपपादयति—तत्र सर्व एवेति। नित्यप्राप्तस्य वचनमितरपरिसंख्यार्थमिति भावः। दार्ष्टान्तिकेऽप्याह—

[1] G. omits संबन्धस्य.

इहेति। अवधारणेन नित्यत्वलाभं दर्शयति—कार्याणामिति। प्रतीयमानस्येति; यद्यपि गोत्ववाचके गोशब्दे अशक्त्यादिनान्यथोच्चारितेऽपि श्रोतारस्तत्स्मरणेनार्थं प्रतियन्तीति प्रतीयमानस्यार्थप्रत्यायकत्वमस्त्येव, तथाप्येतस्यावाचकत्वेऽर्थवत्त्वाभावात् प्रातिपदिकत्वाभावे विभक्त्यनुत्पत्तावपदत्वात् प्रयोगो न स्यादित्यत्र तात्पर्यमित्याहुः। एवं तर्हीति; देवदत्त इति संज्ञाकाले 'देवः' इति 'दत्तः' इति च संज्ञात्वेन विनियुक्तमेवेत्यर्थः। अवयवेति; अर्थान्तरे प्रयुक्तपदसदृशा इत्यर्थः। नन्वेवं प्रत्येकमपि संज्ञात्वे "पूर्वपदलोपः" इति व्यर्थमत आह—लोप इति। वर्णानामिति; देवदत्तशब्दे पदद्वयं वाचकं, समुदायश्च; न तु चतुर्णामपि वर्णानां प्रत्येकं वाचकत्वमिति सूचनायाद्यपदलोपान्वाख्यानमित्यर्थः। ननु देवदत्तादिशब्दानां समुदायविनियोगबलात् पूर्वपदलोपः सुज्ञानः, सिद्धशब्दस्य लोके निष्पन्नमात्रवाचकत्वेन प्रसिद्धत्वात् कथं पूर्वपदलोपज्ञानमत आह—इहेति। सिद्धशब्दाभावेऽपि तदर्थलाभात्तदुपादानात् प्रकर्षलाभ इत्यर्थः। न्यायाद्वेति; शब्दार्थसंबन्धानां नित्यत्वस्य न्यायसिद्धत्वात्तत्र प्रयुक्तः सिद्धशब्दो नित्यमेव गमयति; यथा आत्माकादौ प्रयुक्तं द्रव्यपदं नित्यद्रव्यम्। अत एव न्यायानुसंधानसापेक्षत्वात् "व्याख्यानतः" इत्युक्तमिति भावः। स्थितम्; संग्रहादौ। व्याख्यानत इत्यस्यार्थमाह—न हीति। अभीष्टाप्रतिपादकत्वात् 'व्याख्यानतः' इत्यस्य व्याख्यानम्—प्रमाणान्तरेणेति। ननु स्पष्टप्रतिपत्तये 'नित्ये शब्दार्थसम्बन्धे' इत्येवोच्यताम्; किं सिद्धग्रहणेनेति पृच्छति भाष्ये—किं पुनरिति। वर्ण्येनेत्यस्यार्थमाह—प्रयत्नेति। भाष्ये महता कण्ठेनेति; उच्चारणेऽपि प्रयत्नगुरुत्वमुक्तम्। ननु मङ्गलजन्यनिर्विघ्नपरिसमाप्त्यादिकं प्रयोजनं तत्कर्तुः, न तु मङ्गलम्; अतो 'माङ्गलिकः' इत्ययुक्तम्; अत आह—अगर्हितेति। कृतेर्गर्हाभावः समाप्तेः। प्रचयगमनं च मङ्गलस्य प्रयोजनमत्र मङ्गलशब्देनोच्यत इत्यर्थः। तत्प्रयोजन इति; 'मङ्गलं प्रयोजनमस्य' इत्यर्थे "प्रयोजनम्" (पा. ५-१-१०९) इति सूत्रेण प्राग्वतीयष्ठगित्यर्थः। वीरत्वं पराजयराहित्यमित्याह—श्रोतॄणामिति। नन्वायुर्वृद्धिरपि मङ्गलस्यैव प्रयोजनमस्मादेव भाष्याद्गम्यते; अतः शास्त्रार्थानुष्ठानपर्यन्तधावनं व्यर्थम्, अनुष्ठानजनितधर्मस्य नित्यकाम्योभयरूपस्यायुर्वृद्धिहेतुत्वे प्रमाणाभावाच्चेति चेत्; अत्राहुः—पापेनायुःक्षयः प्रसिद्धः, "धर्मेण पापमपनुदति" (तै. उ. २-४९-१) इति श्रुतेर्धर्मस्य पापनाशकत्वं च; तथाच धर्मेण पापनाशे सत्यायुषो वृद्धिः; तत्र मङ्गलस्य परम्परया प्रयोजकत्वं भाष्याभिमतं, न तु साक्षादिति। सिद्धार्था इत्यत्र कस्य सिद्धिर्विवक्षिता? अत आह—अध्ययनेति। निष्पन्नाध्ययना भवन्तीत्यर्थः। तेषाम्; अध्येतॄणाम्। नित्यशब्देऽपि सन्देहस्तुल्य इत्याह भाष्ये—अयं खल्विति। नन्वाभीक्ष्ण्यस्य प्रकृतेऽनन्वयादविनाशित्वनिश्चयः स्यादत आह—ततश्चेति। आभीक्ष्ण्येन; पुनः पुनः। नन्वाभीक्ष्ण्यं क्रियायाः, नान्यस्य; तत्र क्रियापदाप्रयोगादाभीक्ष्ण्यार्थत्वं न संभवतीत्यत आह—विनापि चेति। आश्चर्यमिति; अत्रानित्यमिति अद्भुतमुच्यते; नित्यशब्देन पुनःपुनःप्रसिद्धेर्विवक्षितत्वादनित्यशब्देन तद्भिन्नां सकृत्प्रसिद्धिं गृहीत्वा तेनाद्भुतं लक्ष्यते। तत्र[1] विनाशवाचिनाप्यद्भुतलक्षणासंभवादाह—नित्येति। तत्र क्रियापदं विनापि प्रयुक्तनित्यशब्दस्याभीक्ष्ण्यार्थस्य योग्यताबलाद्यथा क्रियापदद्वारेत्रबोध-

[1] अत्र A.

कत्वं लभ्यते तथात्रापि 'नित्ये शब्दार्थसम्बन्धे' इत्युक्ते योग्यतया प्रयोगक्रियाविषयमाभीक्ष्ण्यं लभ्यत इति भावः।

भा.—अथ कं पुनः पदार्थं मत्वैष विग्रहः क्रियते—सिद्धे शब्दे अर्थे संबन्धे चेति? आकृतिमित्याह। कुत एतत्? आकृतिर्हि नित्या, द्रव्यमनित्यम्। अथ द्रव्ये पदार्थे कथं विग्रहः कर्तव्यः? सिद्धे शब्दे अर्थसंबन्धे चेति। नित्यो ह्यर्थवतामर्थैरभिसंबन्धः। अथवा द्रव्य एव पदार्थ एष विग्रहो न्याय्यः—सिद्धे शब्दे अर्थे संबन्धे चेति। द्रव्यं हि नित्यमाकृतिरनित्या। कथं ज्ञायते? एवं हि दृश्यते लोके—मृत् कयाचिदाकृत्या युक्ता पिण्डो भवति, पिण्डाकृतिमुपमृद्य घटिकाः क्रियन्ते, घटिकाकृतिमुपमृद्य कुण्डिकाः क्रियन्ते; तथा सुवर्णं कयाचिदाकृत्या युक्तं पिण्डो भवति, पिण्डाकृतिमुपमृद्य रुचकाः क्रियन्ते, रुचकाकृतिमुपमृद्य कटकाः क्रियन्ते, कटकाकृतिमुपमृद्य स्वस्तिकाः क्रियन्ते; पुनरावृत्तः सुवर्णपिण्डः, पुनरपरयाकृत्या युक्तः खदिराङ्गारसवर्णे कुण्डले भवतः। आकृतिरन्या चान्या च भवति; द्रव्यं पुनस्तदेव। आकृत्युपमर्देन द्रव्यमेवावशिष्यते। आकृतावपि पदार्थ एष विग्रहो न्याय्यः—सिद्धे शब्दे अर्थे संबन्धे चेति। ननु चोक्तम्—आकृतिरनित्येति। नैतदस्ति। नित्या आकृतिः। कथम्? न क्वचिदुपरतेति कृत्वा सर्वत्रोपरता भवति; द्रव्यान्तरस्था तूपलभ्यते। अथवा नेदमेव नित्यलक्षणम्—ध्रुवं कूटस्थमविचाल्यनपायोपजनविकार्यनुत्पत्त्यवृद्ध्यव्यययोगि यत्तन्नित्यमिति; तदपि नित्यं यस्मिंस्तत्त्वं न विहन्यते। किं पुनस्तत्त्वम्? तद्भावस्तत्त्वम्। आकृतावपि तत्त्वं न विहन्यते। अथवा किं न एतेन—इदं नित्यमिदमनित्यमिति? यन्नित्यं तं पदार्थं मत्वैष विग्रहः क्रियते—सिद्धे शब्दे अर्थे संबन्धे चेति।

प्र.—अर्थसंबन्धे चेति। द्रव्यपक्षे द्रव्यस्यानित्यत्वादर्थग्रहणं संबन्धविशेषणार्थमुपात्तम्। अनित्येऽर्थे कथं संबन्धस्य नित्यतेति चेत्, योग्यतालक्षणत्वात्संबन्धस्य। तस्याश्च शब्दाश्रयत्वाच्छब्दस्य च नित्यत्वाददोषः। द्रव्यं हि नित्यमिति; असत्योपाध्यवच्छिन्नं ब्रह्मतत्त्वं द्रव्यशब्दवाच्यमि-

त्यर्थः । आकृतिरिति, संस्थानम् । ब्रह्मदर्शने च गोत्वादिजातेरप्यसत्त्वादनित्यत्वम् "आत्मैवेदं सर्वम्" इति श्रुतिवचनात् । न क्वचिदुपरतेति ; अनभिव्यक्तेत्यर्थः । अद्वैतेन लोके व्यवहाराभावाद् व्यवहारे चाकृतेरेकाकारपरामर्शहेतुत्वान्नित्यत्वम् । अथवेति ; असत्यत्वेऽपि तत्त्वतो लोकव्यवहाराश्रयणेन जातेर्नित्यत्वं साध्यते । त्रिविधा चानित्यता ; संसर्गानित्यता, यथा—स्फटिकस्य लाक्षाद्युपधाने स्वरूपतिरोधानेन पररूपभासः, उपधानापगमे स्वरूपप्रतिभासात्परिणामाभावः । परिणामानित्यता यथा—बदरीफलस्य श्यामतातिरोभावे लौहित्यस्याविर्भावः । प्रध्वंसानित्यता सर्वात्मना विनाशः । एतत्त्रिविधानित्यताप्रतिक्षेपेण नित्यतां प्रतिपादयितुमुक्तं ध्रुवमित्यादि ; तत्र ध्रुवं कूटस्थमिति संसर्गानित्यता परिहृता ; अविचालीति परिणामानित्यता; अनपायेत्यादिना प्रध्वंसानित्यता । यन्नित्यमिति, बुद्धिप्रभासः शब्दार्थो यदा यदा शब्द उच्चारितस्तदा तदाऽर्थाकारा बुद्धिरुपजायत इति प्रवाहनित्यत्वादर्थस्य नित्यत्वमित्यर्थः ।

उ.—सिद्धशब्देनान्वयानुपपत्त्या संबन्धविशेषणत्वं युक्तमित्याह—द्रव्यपक्ष इति । ननु सम्बन्धस्य द्विनिष्ठत्वाद् द्रव्यस्यानित्यत्वे कथं तत्संबन्धस्य नित्यत्वमिति शङ्कते—अनित्येऽर्थ इति। तस्य ; संबन्धस्य। योग्यतेति ; अर्थप्रतीतिजननयोग्यत्वं संबन्धः ; स च शब्दनिष्ठ एवेति भावः। ननु घटादेरनित्यत्वात् कथं सर्वस्य द्रव्यस्य नित्यत्वम् ? अत आह—असत्येति । व्यञ्जकावच्छिन्नं [1] शब्दब्रह्म वाचकम् ; तदेव घटाद्यवच्छिन्नं वाच्यमिति भावः । जातेर्नित्यत्वादाह—संस्थानमिति । ननु संस्थानं न वाच्यम् ; वाच्या जातिर्नित्यैव ; अत आह—ब्रह्मेति । अपिना सर्वस्यासत्त्वं सूचितम् । असत्त्वात् [2] ; मिथ्यात्वात् । तत्र मानमाह—आत्मेति । आत्मव्यतिरिक्तं सर्वं परमार्थतो नास्तीत्यर्थः । उपरतत्वं विनाशित्वमेव ; अत आह—अनभिव्यक्तेति । संस्थानविशेषव्यङ्ग्या जातिस्तादृशसंस्थानाभावे तत्राप्रकाशमानापि संस्थानान्तरयुक्ते प्रकाशमानत्वान्नानित्येत्यर्थः । ननु ब्रह्मदर्शनेऽनित्यत्वमुक्तमत आह—अद्वैतेनेति । यावद्व्यवहारं सत्त्वरूपनित्यत्वं ब्रह्मदर्शनेऽपि संभवतीति भावः । नेदमेव नित्यानामिति भाष्यस्य तात्पर्यमाह—असत्यत्वेऽपीति ; तत्त्वतोऽसत्यत्वेऽपीत्यन्वयः । ध्रुवमित्यादिविशेषणानां साफल्यार्थमाह—त्रिधा चेति । संसर्गानित्यता ; द्रव्यान्तरसंसर्गेण विद्यमानस्यापि शुक्लरूपस्यानवभासमानत्वमेवानित्यत्वम् । स्वस्य रूपं शुक्लत्वं, तत्तिरोधानेनेति विग्रहः । रक्तरूपवत्तया पिठरस्येव स्फटिकस्यापि रक्तरूपवत्तया परिणामशङ्कां वारयति—उपधानेति ।

[1] G omits शब्द.

[2] असत्यत्वात् A.

पूवरूपस्य नाशं विना रूपान्तरयुक्ततया परिणामो न संभवतीत्याशयः । का अनित्यता केन विशेषणेन निराक्रियते ? अत आह—ध्रुवमिति । ध्रुवम् ; स्वाभाविकवस्त्वन्तरसंसर्गरहितम् । कूटस्थम् ; आगन्तुकेन संसर्गरहितम् । अविचालि ; अपरिणामि । अपायोपजनविकाररहितमित्यस्यैव व्याख्यानम् —अनुत्पत्ति, अवृद्धि, अव्यययोगीति । षड्भावविकारराहित्यं वानेन भाष्येणोच्यते ; तत्रापायो नाशः ; उपजनः सत्ता ; संबन्धोऽस्तित्वम् ; विकारः परिणामः ; उत्पत्तिवृद्धी प्रसिद्धे ; व्ययोऽपक्षय इति । एतत्त्रिविधानित्यत्वराहित्यं ब्रह्मणि प्रसिद्धम् । तद्भावस्तत्त्वमित्यादेरर्थमाह—बुद्धीति । बुध्या प्रतिभास्यत इति कर्मणि घञ् । तदेव विवृणोति—यदेति । अनेन कीदृशं नित्यत्वमुक्तम् ? अत आह—प्रवाहेति ।

**भा.—कथं पुनर्ज्ञायते सिद्धः शब्दोऽर्थः संबन्धश्चेति ?**

**वा.—लोकतः ।**

**भा.—यल्लोकेऽर्थमर्थमुपादाय शब्दान्प्रयुञ्जते नैषां निर्वृत्तौ यत्नं कुर्वन्ति। ये पुनः कार्या भावा निर्वृत्तौ तावत्तेषां यत्नः क्रियते । तद्यथा—घटेन कार्यं करिष्यन् कुम्भकारकुलं गत्वाह—कुरु घटं कार्यमनेन करिष्यामीति । न तद्वच्छब्दान् प्रयुयुक्षमाणो वैयाकरणकुलं गत्वाह—कुरु शब्दान् प्रयोक्ष्य इति । तावत्येवार्थमुपादाय शब्दान् प्रयुञ्जते । यदि तर्हि लोक एषु प्रमाणं, किं शास्त्रेण क्रियते ?**

**वा.—लोकतोऽर्थप्रयुक्ते शब्दप्रयोगे शास्त्रेण धर्मनियमः ।**

**भा.—लोकतोऽर्थप्रयुक्ते शब्दप्रयोगे शास्त्रेण धर्मनियमः क्रियते। किमिदं धर्मनियम इति ? धर्माय नियमो धर्मनियमः ; धर्मार्थो वा नियमो धर्मनियमः ; धर्मप्रयोजनो वा नियमो धर्मनियमः ।**

**वा.—यथा लौकिकवैदिकेषु ।**

**भा.—प्रियतद्धिता दाक्षिणात्याः । यथा लोके वेदे चेति प्रयोक्तव्ये यथा लौकिकवैदिकेष्विति प्रयुञ्जते । अथवा युक्त एवात्र तद्धितार्थः ; यथा लौकिकेषु वैदिकेषु च कृतान्तेषु । लोके तावत् 'अभक्ष्यो ग्राम्यकुक्कुटः ; अभक्ष्यो ग्राम्यसूकरः' इत्युच्यते । भक्ष्यं च नाम क्षुत्प्रतिघातार्थमुपादीयते । शक्यं चानेन श्वमांसादिभिरपि क्षुत्प्रतिहन्तुम् । तत्र नियमः क्रियते—इदं भक्ष्यमिदमभक्ष्यमिति । तथा—खेदात् स्त्रीषु प्रवृत्तिर्भवति । समानश्च खेदविगमो**

**गम्यायां चागम्यायां च। तत्र नियमः क्रियते—इयं गम्येयमगम्येति। वेदे खल्वपि "पयोव्रतो ब्राह्मणो यवागूव्रतो राजन्य आमिक्षाव्रतो वैश्यः" इत्युच्यते। व्रतं च नामाभ्यवहारार्थमुपादीयते। शक्यं चानेन शालिमांसादीन्यपि व्रतयितुम्। तत्र नियमः क्रियते। तथा "बैल्वः खादिरो वा यूपः स्याद्" इत्युच्यते। यूपश्च नाम पश्वनुबन्धार्थमुपादीयते। शक्यं चानेन यत् किंचिदेव काष्ठमुच्छ्रित्यानुच्छ्रित्य वा पशुरनुबन्धुम्। तत्र नियमः क्रियते। तथा अग्नौ कपालान्यधिश्रित्याभिमन्त्रयते—"भृगूणामङ्गिरसां धर्मस्य तपसा तप्यध्वम्" इति। अन्तरेणापि मन्त्रमग्निर्दहनकर्मा कपालानि संतापयति। तत्र च नियमः क्रियते—एवं क्रियमाणमभ्युदयकारि भवतीति। एवमिहापि समानायामर्थावगतौ शब्देन चापशब्देन च धर्मनियमः क्रियते—शब्देनैवार्थोऽभिधेयो नापशब्देनेति। एवं क्रियमाणमभ्युदयकारि भवतीति।**

प्र॰—लोकत इति; अन्यथा कार्येषु वस्तुषु लोकव्यवहारोऽन्यथा नित्येषु। शब्दश्च व्यवहारोऽनादिवृद्धव्यवहारपरम्पराव्युत्पत्तिपूर्वक इति शब्दादीनां नित्यत्वम्। घटादयस्त्वर्थक्रियार्थिभिरन्यत आनीयन्ते, उत्पादविनाशयुक्ताश्चोपलभ्यन्ते। नैवं शब्दादयः। तावत्येवार्थमिति; बुद्ध्या वस्तु निरूप्येत्यर्थः। अत्र भाष्यकारेण संभवन्तीमप्येकवाक्यतामनाश्रित्य वाक्यत्रयं व्यवस्थापितम्—सिद्धे शब्दार्थसंबन्धे शास्त्रं प्रवृत्तमित्येकं वाक्यम्। कथं ज्ञायत इति प्रश्ने लोकतो ज्ञायते इति द्वितीयम्। लोकत इत्यस्यानुवृत्त्या लोकतोऽर्थप्रयुक्त इत्यादि तृतीयम्। शब्दप्रयोग इति; प्रयोगग्रहणेन 'प्रयोगाद्धर्मो न तु ज्ञानमात्रात्' इत्युक्तं भवति। अर्थेनात्मप्रत्यायनाय प्रयुक्तोऽर्थप्रयुक्तः। धर्माय नियम इति; चतुर्थ्या तादर्थ्यं प्रतिपाद्यते। संबन्धसामान्ये तु षष्ठीं विधाय समासः कर्तव्यः, चतुर्थीसमासस्य प्रकृतिविकारभाव एव विधानात्। धर्मार्थ इति; धर्मार्थत्वान्नियम एव धर्मशब्देनाभिधीयत इति कर्मधारयः समासः। धर्मप्रयोजन इति; लिङादिविषयेण नियोगाख्येन धर्मेण प्रयुक्त इत्यर्थः। प्रियतद्धिता इति; नायमपशब्दः; किंतु लोकवेदयोर्भवा अवयवास्ते लोकवेदशब्दाभ्यामभिधातुं शक्यन्ते। आधाराधेयभावकल्पनया तु तद्धितप्रयोगः प्रियतद्धितत्वनिमित्तः। यथा

कश्चिद्वनस्पतय इति प्रयुङ्क्ते ; कश्चिद्वानस्पत्यमिति समूहप्रत्ययान्तम् । अथवेति ; नात्रावयवावयविविभागः ; किं तर्हि? लोकवेदव्यतिरिक्तसिद्धान्तशब्दार्थोभयरूप इत्यर्थः । लौकिकः स्मृत्युपनिबद्धः । वैदिकः श्रुत्युपनिबद्धः । शक्यं चानेनेति ; शकेः कर्मसामान्ये लिङ्गसर्वनामनपुंसकयुक्ते कृत्यप्रत्ययः । ततः पदान्तरसंबन्धादुपजायमानमपि स्त्रीत्वं बहिरङ्गत्वादन्तरङ्गसंस्कारं न बाधत इति शक्यं क्षुदित्युक्तम् । यदा तु पूर्वमेव विशेषविवक्षा तदा शक्या क्षुदिति भवत्येव । यदा तु प्रतिघातस्यैव क्षुत्कर्म शकेस्तु प्रतिघातस्तदा क्षुधं प्रतिहन्तुं शक्यमिति भवति । खेदादिति ; खेदयतीति खेदो रागः, इन्द्रियनियमासामर्थ्यं वा खेदः । पयोव्रत इति ; सत्यामर्थितायां पय एव व्रतयतीति नियमोऽयं न तु विधिः, अर्थित्वाभावे कारणाभावात् । समानायामिति ; यद्यपि साक्षादपभ्रंशा न वाचकास्तथापि स्मर्यमाणसाधुशब्दव्यवधानेनार्थं प्रत्याययन्ति । केचिच्चापभ्रंशाः परम्परया निरूढिमागताः साधुशब्दानस्मारयन्त एवार्थं प्रत्याययन्ति । अन्ये तु मन्यन्ते— साधुशब्दवदपभ्रंशा अपि साक्षादर्थस्य वाचका इति ।

उ.—यथाश्रुतभाष्यं तावद् व्याचष्टे—अन्यथेति । तमेव प्रकारभेदं दर्शयति—शब्द इति । व्युत्पत्तीति ; तथाच पूर्ववृद्धव्यवहारसिद्धशब्दा एव व्यवहारकाले पुनःपुनरुच्चार्यन्त इति नित्यत्वमित्यर्थः । घटादयस्त्विति ; पूर्वसिद्धानामेवोपादानमिति न नियमः, किंतु [1] नूतनघटान्तरोपादानाच्छब्दव्यवहारवैलक्षण्यमित्यर्थः । ननु व्युत्पत्तिसापेक्षत्वमात्रेण शब्दानां नित्यत्वं न सिध्यति, व्युत्पन्नसजातीयशब्दानां स्वाधीनोच्चारणत्वेन वैयाकरणकुलमगत्वापि स्वयमेवोत्पादनसंभवात् ; घटादौ तु स्वानुत्पाद्येऽन्यत उपादानं युक्तम् ; अत एव घटार्थी कुलालो न कुलालान्तरं गच्छति, स्वयमेव करोति ; इत्यत आह—उत्पादेति । नैवमिति ; शब्दे उत्पादविनाशप्रत्ययस्य व्यञ्जकविषयत्वादिति भावः । भाष्ये—प्रयुयुक्षमाण इति ; "पूर्ववत्सनः" इत्यात्मनेपदम् । शब्दप्रयोगकाले अर्थोपादानाभावादाह—बुध्वेति ; अर्थं बुध्वेति यावत् ।

"सिद्धे शब्दार्थसम्बन्धे लोकतोऽर्थप्रयुक्ते शब्दप्रयोगे शास्त्रेण धर्मनियमो यथा लौकिकवैदिकेषु" इति वार्तिकस्य 'प्रयुक्तानामन्वाख्यानमिदं शास्त्रम् ; तेन प्रयोगादेव शब्दज्ञानसंभवात् शास्त्रं व्यर्थम्' इत्याशङ्कानिरासकत्वेनैकवाक्यत्वे संभवति वाक्यभेदेन व्याख्यानं किमर्थम्? अत आह— अत्रेति । उक्तशङ्कायाः 'शास्त्रेण धर्मनियमः' इत्येतावतैव निरासात् 'सिद्धे' इत्यादेर्वैयर्थ्यपरिहाराय वाक्यत्रयकरणमिति भावः । 'लोकतोऽर्थप्रयुक्ते' इति भाष्यदर्शनात् अनुवृत्त्येत्युक्तम् । वार्तिके प्रयोगशब्दस्य प्रयोजनमाह—प्रयोगग्रहणेनेति ।

---

[1] G omits नूतन

शुकादिन्यायेन माणवकादीनां साधुशब्दप्रयोगान्न धर्म इति सूचनायार्थप्रयुक्त इति विशेषणमित्याशयेनाह— अर्थेनेति। ज्ञानपूर्वकप्रयोगे धर्म इत्याशयः। धर्मस्य नियम इति समासः; षष्ठ्यर्थश्च तादर्थ्यरूपसंबन्ध इत्याशयेन धर्मायेत्युक्तमित्याह—धर्मायेति। चतुर्थीसमास एव किं न स्यादत आह—चतुर्थीति; तादर्थ्येत्यादिः। ननु धर्मार्थ इति कः समासः? अत आह— धर्मार्थत्वादिति; लक्षणया धर्मार्थपरो धर्मशब्द इति भावः। धर्मार्थ इत्यनेन पौनरुक्त्यं परिहर्तुमाह—लिङादीति। विषयेण; प्रतिपाद्येन। प्रयोजनशब्दः कर्मणि ल्युडन्तः। धर्मशब्देन वृत्तौ धर्मप्रयोजनाभिधानात् पूर्वपदलापि कर्मधारयः। ननु तद्धितार्थाभावेऽपि तद्धितप्रयोगेऽपशब्दत्वं स्यादत आह—नायमिति। तत्र लोकशब्देन स्मृतिर्विवक्षिता; स्मृत्येकदेशे वेदैकदेशे च नियमः श्रूयते, न सर्वत्रेति लोकवेदशब्दौ तदवयवपरौ; तथाच भाष्ये लोकवेदयोरिति वक्तव्ये इत्यस्यावयविवाचकस्यावयवपरत्वेनैवोपपत्तावित्यर्थः। अवयवावयविनोराधाराधेयभावविवक्षया भवार्थे तद्धितप्रयोगः प्रियतद्धितत्वनिमित्तक इति नापशब्दत्वमिति समुदायार्थः। तद्धितसत्त्वासत्त्वाभ्यां विवक्षितार्थसिद्धिमुदाहरति—यथेति। समूह्यतिरिक्तसमूहाभावादार्थभेदाभावेऽपि प्रियतद्धितत्वनिमित्तः समूहतद्धितान्तप्रयोग इत्यर्थः। पूर्वव्याख्यानेऽपि तद्धितार्थसद्भावात् ततो विशेषमाह—नात्रेति। विभागः; विवक्षित इति शेषः। सिद्धान्तः; प्रामाणिकः। शब्देति; "एकः शब्दः सुप्रयुक्तः" इत्यादौ शब्दोऽन्यार्थः। अत्र श्रुतिस्मृतिप्रतिपाद्योऽर्थो गृह्यत इत्याह— लौकिक इति। तत्प्रतिपाद्यस्यापि तत्प्रभवत्वमङ्गीकृत्य तद्धितोत्पत्तिर्ज्ञेया। भाष्ये कृतान्तेषु; अर्थेषु। ननु कर्मणि कृत्ये क्षुत्सामानाधिकरण्येन शक्येति स्यात्; न तु शक्यमित्यत आह—शकेरिति। लिङ्गेति; विशेष्यलिङ्गसर्वशब्दानां सामान्यविवक्षायां नपुंसकलिङ्गत्वमिति न्यायार्थः। ननु सामान्यविवक्षायां नपुंसकत्वेऽपि क्षुत्सामानाधिकरण्ये स्त्रीत्वात् टाप् स्यादत आह—तत इति। अन्तरङ्गत्वं पदान्तरानपेक्षत्वात्। तर्हि शक्या क्षुत् प्रतिहन्तुमिति कदापि न भवतीत्याशङ्क्य भवति प्रथममेव विशेषविवक्षायामित्याह—यदेति। एवं क्षुधः शक्तिकर्मत्वे प्रयोगद्वयमुक्त्वा तस्याः प्रतिघातकर्मत्वविवक्षायां प्रयोगान्तरमाह—यदा त्विति। रागात् स्त्रीपु प्रवृत्तिः, न खेदादत आह—खेदयतीति। ननु "पयोव्रतः" इत्यपूर्वविधिरेव, न नियम इत्याशङ्क्य व्रतं च नामेति भाष्योक्तं स्पष्टयति—सत्यामिति; रागत एव प्राप्तत्वान्नापूर्वविधिरित्यर्थः। अपूर्वविधित्वे उदकरणे वैगुण्यं स्यात्; तच्च नेष्टमित्याह—अर्थितेति; व्रतेच्छाभावे व्रतं न क्रियत एवेत्यर्थः। यद्वा अवहननादितुल्यो नायं नियमः, किंत्विच्छायां सत्यामयं नियम इत्याह—सत्यामिति। अर्थितेति; व्रत्यमानं पयो न जीर्यतीति शङ्कायां पयो न व्रतयितव्यं तथा सति यजमानस्य रोगप्रसङ्गेन क्रतुविलोपप्रसङ्गादिति "अनर्थकं त्वनित्यं स्यात्" इति षष्ठोपान्त्याधिकरणे स्थितत्वादिति भावः। ननु समानायामिति न युक्तं, गवादीनां शक्त्यार्थप्रत्यायकत्वात् गाव्यादीनां गवादिस्मरणद्वारा प्रत्यायकत्वेन साम्यासंभवात्; तथाहि—"अन्यायश्चानेकशब्दत्वम्" इतिन्यायेनैकैव शक्तिर्न सर्वेषु; सा च संस्कृतेष्वेव, तेषां सर्वदेशेष्वेकरूपत्वात्; भाषाणां प्रतिदेशं भिन्नत्वेनानन्तशक्तिकल्पनानुपपत्तेः। एवं च केनचित् गोशब्दे प्रयोक्तव्ये प्रमादात् गावीशब्दे प्रयुक्ते श्रोता तेन गोशब्दं प्रतीत्यार्थं प्रत्येति। तदुक्तम्—

"अम्बाम्बेति यदा बालः शिक्षमाणः प्रभाषते ।
अव्यक्तं तद्विदां तेन व्यक्ते भवति निर्णयः ॥"

इति । तथाच केवलगाव्यादिप्रयोगे शक्तिभ्रमादर्थप्रत्ययोपपत्तिः । तदुक्तम्—

"अनिदंप्रथमाः शब्दाः साधवः परिकीर्तिताः ।
तदेव शक्तिवैकल्ये प्रमादालसतादिभिः ।
अन्यथोच्चारिताः पुंभिरपशब्दा इतीरिताः ।
स्मारयन्तश्च ते साधूनर्थधीहेतवः स्मृताः ॥"

इति । शक्तिवैकल्यमुच्चारणसामर्थ्याभावः । पुंभिर्मनुष्यैः । तस्मात् समानायामित्ययुक्तमिति शङ्कते—यद्यपीति । वाचकाः ; अर्थप्रतिपादकाः । साक्षान्नार्थप्रत्यायकाः, न वाचका इति यावत् । कथं तर्हि तेभ्योऽर्थबोध इत्यत आह—तथापीति । वाचकत्वावाचकत्वविशेषेऽप्यर्थप्रत्यायकत्वाविशेषेण समानायामित्युक्तमिति भावः । केवलगाव्यादीनामपि व्यवहारदर्शनान्न साधुशब्दव्यवधाननियमोऽत आह—केचिदिति । परंपरया ; शक्तिभ्रमेण । ननु भाषाशब्दानामपि वाचकत्वमेव, हस्तकरादिवद्विनिगमकाभावात् । न च सर्वदेशैकरूप्यं विनिगमकम् ; तत्किं सर्वेषु देशेषु संस्कृतव्यवहारसत्त्वं वा, यत्र व्यवहारस्तत्रैकरूप्यं वा, नियतदेशव्यवहाराभावो वा । नाद्यः, क्वचिन्म्लेच्छदेशे संस्कृतगन्धाभावात् । द्वितीयस्य भाषासाधारण्यात् । न तृतीयः, "शवतिर्गतिकर्मा" इत्यादि भाष्यविरोधात् । नापि शिष्टप्रयुक्तत्वं विनिगमकं, भाषासाधारण्यात् । वस्तुत ईश्वरेण सृष्ट्यादावर्थविशेषवच्छब्दविशेषा अपि सृष्टा एव, "नामरूपे व्याकरोत्" इति श्रुतेः। न हि तदानीं संस्कृतमेव सृष्टं न भाषान्तरमित्यत्र मानमस्ति। तत्तद्यवनादिसृष्टौ तदीयभाषाया अपि तदानीमेव सृष्टत्वात् । न हि तेषामपि प्रथमं संस्कृतेनैव व्यवहारः, पश्चादपभ्रंशरूपभाषाप्रवृत्तिरिति कल्पनायां मानमस्ति । न चैवं सर्वेषां वाचकत्वे साध्वसाधुविभागानुपपत्तिः, व्याकरणव्युत्पाद्यत्वस्य साधुत्वात् । न च साधुशब्दान्वाख्यानं व्याकरणं, तद्व्युत्पाद्यत्वं साधुत्वमित्यन्योन्याश्रयः ; वेदाङ्गव्याकरणपरंपराया अनादित्वेन पूर्वपूर्वव्याकरणं दृष्ट्वोत्तरोत्तरव्याकरणप्रवृत्तिसंभवादित्यन्यत्र विस्तरः । तस्माद्भाषाशब्दानामपि वाचकत्वात् समानायामिति भाष्यं यथाश्रुतं साध्वित्यभिप्रेत्याह—अन्ये त्विति । अपभ्रंशा अपीत्यपिना भाषाशब्दसमुच्चयः । अत एव वक्ष्यति—"अनेकशक्तेः शब्दस्य" इति ।

## वा.— अस्त्यप्रयुक्तः ।

**भा.—सन्ति वै शब्दा अप्रयुक्ताः । तद्यथा—ऊष, तेर, चक्र, पेचेति । किमतो यत्सन्त्यप्रयुक्ताः ? प्रयोगाद्धि भवान् शब्दानां साधुत्वमध्यवस्यति । य इदानीमप्रयुक्ता नामी साधवः स्युः । इदं तावद्विप्रतिषिद्धं यदुच्यते 'सन्ति वै शब्दा अप्रयुक्ताः' इति । यदि सन्ति नाप्रयुक्ताः, अथाप्रयुक्ता न सन्ति । सन्ति चाप्रयुक्ताश्चेति विप्रतिषिद्धम् । प्रयुञ्जान एव खलु**

भवानाह—सन्ति शब्दा अप्रयुक्ता इति। कश्चेदानीमन्यो भवज्जातीयकः पुरुषः शब्दानां प्रयोगे साधुः स्यात्?

नैतद्विप्रतिषिद्धम्। सन्तीति तावद् ब्रूमः, यदेतान् शास्त्रविदः शास्त्रेणानुविदधते। अप्रयुक्ता इति ब्रूमः, यल्लोकेऽप्रयुक्ता इति। यदप्युच्यते—कश्चेदानीमन्यो भवज्जातीयकः पुरुषः शब्दानां प्रयोगे साधुः स्यादिति। न ब्रूमोऽस्माभिरप्रयुक्ता इति। किं तर्हि? लोकेऽप्रयुक्ता इति। ननु च भवानप्यभ्यन्तरो लोके। अभ्यन्तरोऽहं लोके, न त्वहं लोकः।

वा.—अस्त्यप्रक्त इति चेन्नार्थे शब्दप्रयोगात्।

भा.—अस्त्यप्रयुक्त इति चेत्, तन्न। किं कारणम्? अर्थे शब्दप्रयोगात्। अर्थे शब्दाः प्रयुज्यन्ते। सन्ति चैषां शब्दानामर्था येष्वर्थेषु प्रयुज्यन्ते।

वा.—अप्रयोगः प्रयोगान्यत्वात्।

भा.—अप्रयोगः खल्वप्येषां शब्दानां न्याय्यः। कुतः? प्रयोगान्यत्वात्। यदेषां शब्दानामर्थेऽन्यान् शब्दान् प्रयुञ्जते। तद्यथा—ऊषेत्यस्य शब्दस्यार्थे—क्व यूयमुषिताः, तेरेत्यस्यार्थे—क्व यूयं तीर्णाः, चक्रेत्यस्यार्थे—क्व यूयं कृतवन्तः, पेचेत्यस्यार्थे—क्व यूयं पक्ववन्त इति।

वा.—अप्रयुक्ते दीर्घसत्रवत्।

भा.—यद्यप्यप्रयुक्ता अवश्यं दीर्घसत्रवल्लक्षणेनानुविधेयाः। तद्यथा दीर्घसत्राणि वार्षशतिकानि वार्षसहस्रिकाणि च। न चाद्यत्वे कश्चिदप्याहरति। केवलमृषिसंप्रदायो धर्म इति कृत्वा याज्ञिकाः शास्त्रेणानुविदधते।

वा.—सर्वे देशान्तरे।

भा.—सर्वे खल्वप्येते शब्दा देशान्तरेषु प्रयुज्यन्ते। न चैवोपलभ्यन्ते। उपलब्धौ यत्नः क्रियताम्। महान् शब्दस्य

प्रयोगविषयः। सप्तद्वीपा वसुमती त्रयो लोकाश्चत्वारो वेदाः साङ्गाः सरहस्या बहुधा भिन्ना एकशतमध्वर्युशाखाः सहस्रवर्त्मा सामवेद एकविंशतिधा बाह्वृच्यं नवधाथर्वणो वेदो वाकोवाक्यमितिहासः पुराणं वैद्यकमित्येतावान् शब्दस्य प्रयोगविषयः। एतावन्तं शब्दस्य प्रयोगविषयमननुनिशम्य सन्त्यप्रयुक्ता इति वचनं केवलं साहसमात्रमेव। एतस्मिंश्चातिमहति शब्दस्य प्रयोगविषये ते ते शब्दास्तत्र तत्र नियतविषया दृश्यन्ते। तद्यथा—शवतिर्गतिकर्मा कम्बोजेष्वेव भाषितो भवति; विकार एनमार्या भाषन्ते शव इति। हम्मतिः सुराष्ट्रेषु, रंहतिः प्राच्यमध्येषु, गमिमेव त्वार्याः प्रयुञ्जते। दातिर्लवनार्थे प्राच्येषु, दात्रमुदीच्येषु। ये चाप्येते भवतोऽप्रयुक्ता अभिमताः शब्दा एतेषामपि प्रयोगो दृश्यते। क्व? वेदे। तद्यथा—"सप्तास्ये रेवतीरेवदूष, यद्वो रेवती रेवत्यां तमूष, यन्मे नरः श्रुत्यं ब्रह्म चक्र, यत्रा नश्चक्राजरसं तनूनाम्" इति।

प्र.—अस्त्यप्रयुक्त इति। प्रयोगमूलत्वादस्याः स्मृतेरप्रयुक्तानामन्वाख्यानस्याप्रामाण्यमाशङ्कते। यथा घटादीनां विनाप्यर्थक्रियया सत्त्वं गम्यते नैवं शब्दानां, ते हि सर्वदा व्यवहाराय प्रयुज्यमानाः सन्तः सत्त्वेनावसीयन्त इत्याह— इदमिति। कश्चेदानीमिति; उपहासपरम्। उत्तरं तु शास्त्रदृष्ट्या प्रकृतिप्रत्ययादिलिङ्गावादनुमितिसत्त्वात्, व्यवहारे तु न दृश्यन्त इत्युक्तम्। न त्वहं लोक इति; यथा लोकोऽर्थावगमाय शब्दान् प्रयुङ्क्ते नैवं मयैतेऽर्थे प्रयुक्ताः, अपितु स्वरूपपदार्थका इत्यर्थः। अर्थे शब्दप्रयोगादिति; अर्थसद्भावः शब्दप्रयोगे लिङ्गम्; न हि विना शब्देनार्थप्रत्यायनमुपपद्यते। इतरोऽन्यथासिद्धतामाह—अप्रयोग इति। यातोऽन्ये तेषामर्थानां सन्ति वाचकास्ततो नैषामनुमानमुपपद्यते। यद्यप्यूषेत्यस्य उषिता इति समानार्थो न भवति, परोक्षतादेर्विशेषस्यानवगमात्; तथापि तत्प्रत्यायनाय पदान्तरसहितः प्रयुज्यते। संप्रत्यप्रयुज्यमानानामपि पूर्वं प्रयुक्तत्वादनुशासनं कर्तव्यमित्याह—अप्रयुक्त इति। ऋषिसंप्रदाय इति; वेदाध्ययनमित्यर्थः। सर्व इति। इदमत्र तात्पर्यम्—

यस्य कस्यचिद्वचनात्प्रयोगाप्रयोगौ न व्यवतिष्ठेते, अपितु शिष्टानामेव वचनात्। वाकोवाक्यमिति ; वाकोवाक्यशब्देनोक्तिप्रत्युक्तिरूपो ग्रन्थ उच्यते— यथा "किं स्विदावपनं महत्? भूमिरावपनं महत्" इति। पूर्वचरितसंकीर्तनमितिहासः। वंशाद्यनुकीर्तनं पुराणम्। विकार इति; जीवतो मृतावस्था विकारः; तत्रेत्यर्थः।

अस्त्यप्रयुक्त इत्यादेः प्रकृतानुपयोगं परिहरति—प्रयोगमूलत्वादिति। अप्रामाण्यमिति ; प्रयोगमूलत्वेन प्रामाण्यं मूलभूतप्रयोगाभावे न संभवतीत्यर्थः। ऊषेत्यादिचतुष्टयं लिटि मध्यमपुरुषबहुवचनान्तम्। किमत इत्यादिभाष्यं मूलाभावादप्रामाण्यप्रकटनपरम्। नन्वर्थक्रियामकुर्वतोऽपि घटादेः सत्त्वदर्शनादप्रयुक्तशब्दानामपि सत्त्वमविरुद्धमिति 'इदम्' इत्यादिभाष्यायोगमाशङ्क्य तात्पर्यमाह—यथेति। इत्याह; इत्यभिप्रेत्याह। 'मम माता वन्ध्या इत्यादिवत् ऊषेत्यादिकमप्रयुक्तमिति वचनं व्याहतमित्याह भाष्ये—प्रयुञ्जान एवेति। कश्चेदानीमित्यस्यानुपयोगं परिहरति—उपहासेति। परीक्षकप्रयोगो न प्रमाणं, किंतु पामरप्रयोग एवेति शङ्का उपहासेन निरस्यत इति भावः। नैतदित्यादिसमाधानतात्पर्यमाह—उत्तरमिति। व्यवहारे त्विति; अर्थप्रत्यायनार्थं प्रयोगो नास्तीत्यर्थः। लोकाभ्यन्तरस्यालोकत्वं विरुद्धम्; अत आह— यथा हीति। "अर्थप्रयुक्ते" इति वार्तिकेऽर्थप्रत्यायनार्थप्रयोगस्यैव साधुत्वप्रयोजकत्वोक्तेः ऊषेत्यादेरस्माभिरर्थप्रत्यायनार्थमप्रयोगाल्लक्षणत एतेऽपि शब्दाः सन्तीत्युक्तिमात्रेण न साधुत्वमायातीत्यर्थः। ननु विद्यमानस्य शब्दस्यार्थे प्रयोगः, नासत्कल्पस्य; तथा चार्थसद्भावमात्रेण कथमूषेत्यादीनां प्रयुक्तत्वसिद्धिः? अत आह—अर्थसद्भाव इति। अन्यत्राह्रियमाणस्यार्थस्वभावादसाधारणशब्दं विना व्यभिचारासंभवादूषेत्यादीनामर्थे तेषां प्रयोगः क्वचिदस्तीति निश्चीयत इत्यर्थः। यद्यपीक्षुक्षीरमाधुर्यादीनामसाधारणवाचकशब्दो नास्ति, तथाप्याख्यातार्थेऽयं नियम इति भावः। इतरः; अस्त्यप्रयुक्त इति वादी। अन्यथेति; 'उषितवन्तः' इत्यादिभिरपि तदर्थप्रत्यायनसंभवादूषेत्यादीनां प्रयोगानुमानं न संभवतीत्यर्थः। अन्यथासिद्धिमेवाह—यत इति। अनन्यथासिद्धिं शङ्कते—यद्यपीति। परोक्षत्वादीत्यादिना अनद्यतनत्वग्रहः। पदान्तरेति; परोक्षानद्यतनकाले उषितवन्त इत्यादिना तदर्थप्रत्यायनं संभवतीत्यर्थः। तत्; उषितवन्त इत्यादिकम्। "अप्रयुक्ते दीर्घसत्रवत्" इति समाधानमयुक्तम्, मूलाभावेनाप्रामाण्यप्रसङ्गात्; अत आह—संप्रतीति; पाणिनिव्याकरणप्रणयनकाल इत्यर्थः। न च संप्रत्यप्रयुक्तानां पूर्वं प्रयोग इत्यत्र किं मानमिति वाच्यम्, इदानींतनव्याकरणेन तत्सत्त्वानुमानात्। न चैवमन्तिपरवचेरपि पूर्वप्रयोगानुमानप्रसङ्गः, तस्यासाधुत्वेन पूर्वमपि प्रयोगानर्हत्वात्। न च तदन्वाख्यानात् प्रामाण्यमाशङ्कनीयम्, 'वचिरन्तिपरो न' इत्युपसंख्यातव्यत्वादिति भावः। भाष्ये—वार्षसहस्रिकाणीति; यद्यपि सहस्रसंवत्सराधिकरणे संवत्सरपदस्याहःपरत्वं निर्णीतम्, तथाऽपि सत्राणामिदानीमनुष्ठानाभावे तात्पर्यम्। भाष्ये—आहरति ; अनुतिष्ठति। ननु ऋषिभिः संप्रदीयत इति ऋषिसंप्रदायः; तथाच वसिष्ठादिभि

सत्राणां संप्रदीयमानत्वे मात्राश्रवादपि संप्रदाय इत्ययुक्तम्; अत आह—वेदेति। तथाचाधीतवेदस्याननुष्ठानलक्षणाप्रामाण्यपरिहाराय कदाचित्सत्राणामनुष्ठानमावश्यकमिति तत्प्रयोगोऽप्यापस्तम्बादिभिर्निबद्ध इति भाष्यार्थोऽनेनोक्तः। भाष्ये—धर्मः; निष्कारणो धर्मः, नित्य इति यावत्। वेदाध्ययनं नित्यमिति कृत्वा याज्ञिका आपस्तम्बादयः सत्रप्रयोगमपि शास्त्रेण सूत्रेणानुविदधतीति योजना। ननु देशान्तरप्रयोगस्य निश्चेतुमशक्यत्वादमूलत्वशङ्काया अपरिहारात् सर्व इत्ययुक्तम्; अत आह—इदन्त्वेति। यस्य कस्यचिदिति; पामरस्येति यावत्। शिष्टानामिति—सर्ववैयाकरणैरनुशिष्टानां शब्दानां क्वचित् प्रयोगोऽस्त्येवेति भावः। भाष्ये—महान् हि इत्यादिना अप्रयुक्तनिश्चयाभावः प्रतिपाद्यते। प्रयोगानिश्चयश्चानुशासनबलादेवेति भावः। ननु विकारशब्दस्य परिणामवाचकत्वात् मृतशरीरस्य जीवच्छरीरपरिणामत्वाभावाद्विकार इत्ययुक्तम्; अत आह—जीवत इति। अन्यथाभावमात्रे विकारशब्दः; सोऽपि विशेषपर इत्यर्थः।

**भा—किं पुनः शब्दज्ञाने धर्मः, आहोस्वित् प्रयोगे? कश्चात्र विशेषः?**

**वा—ज्ञाने धर्म इति चेत् तथाऽधर्मः।**

**भा—ज्ञाने धर्म इति चेत् तथाऽधर्मोऽपि प्राप्नोति। यो हि शब्दान् जानात्यपशब्दानप्यसौ जानाति। यथैव शब्दज्ञाने धर्मः, एवमपशब्दज्ञानेऽप्यधर्मः। अथवा भूयानधर्मः प्राप्नोति। भूयांसो ह्यपशब्दाः, अल्पीयांसः शब्दाः। एकैकस्य शब्दस्य बहवोऽपभ्रंशाः। तद्यथा—गौरित्यस्य गावी गोणी गोता गोपोतलिकेत्येवमादयोऽपभ्रंशाः।**

**वा—आचारे नियमः।**

**भा—आचारे पुनः ऋषिर्नियमं वेदयते—तेऽसुरा हेलयो हेलय इति कुर्वन्तः पराबभूवुरिति। अस्तु तर्हि प्रयोगे।**

**वा—प्रयोगे सर्वलोकस्य।**

**भा—यदि प्रयोगे धर्मः, सर्वो लोकोऽभ्युदयेन युज्येत। कश्चेदानीं भवतो मत्सरो यदि सर्वो लोकोऽभ्युदयेन युज्येत? न खलु कश्चिन्मत्सरः। प्रयत्नानर्थक्यं तु भवति। फलवता च नाम प्रयत्नेन भवितव्यम्। न च प्रयत्नः फलाद्व्यतिरेच्यः। ननु च ये**

कृतप्रयत्नास्ते साधीयःशब्दान् प्रयोक्ष्यन्ते, त एव साधीयोऽभ्युदयेन योक्ष्यन्ते। व्यतिरेकोऽपि वै लक्ष्यते। दृश्यन्ते हि कृतप्रयत्नाश्चा- प्रवीणाः, अकृतप्रयत्नाश्च प्रवीणाः। तत्र फलव्यतिरेकोऽपि स्यात्। एवं तर्हि नापि ज्ञान एव धर्मो नापि प्रयोग एव। किं तर्हि?

वा—शास्त्रपूर्वके प्रयोगेऽभ्युदयः, तत् तुल्यं वेदशब्देन।

भा—शास्त्रपूर्वकं यः शब्दान् प्रयुङ्क्ते सोऽभ्युदयेन युज्यते। तत् तुल्यं वेदशब्देन। वेदशब्दा अप्येवमभिवदन्ति—"योऽग्नि- ष्टोमेन यजते, य उ चैनमेवं वेद" "योऽग्निं नाचिकेतं चिनुते, य उ चैनमेवं वेद"। अपर आह—तत् तुल्यं वेदशब्देनेति। यथा वेदशब्दा नियमपूर्वमधीताः फलवन्तो भवन्ति, एवं यः शास्त्रपूर्वकं शब्दान् प्रयुङ्क्ते सोऽभ्युदयेन युज्यत इति। अथवा पुनरस्तु ज्ञान एव धर्म इति। ननु चोक्तम्—ज्ञाने धर्म इति चेत् तथाऽधर्म इति। नैष दोषः। शब्दप्रमाणका वयम्; यच्छब्द आह तदस्माकं प्रमाणम्। शब्दश्च शब्दज्ञाने धर्ममाह, नापशब्दज्ञानेऽधर्मम्। यच्च पुनरशिष्टाप्रतिषिद्धं, नैव तद् दोषाय भवति, नाभ्युदयाय। तद्यथा हिक्कितहसित- कण्डूयितानि नैव दोषाय भवन्ति, नाभ्युदयाय। अथवा- भ्युपाय एवापशब्दज्ञानं शब्दज्ञाने। यो ह्यपशब्दान् जानाति शब्दानप्यसौ जानाति। तदेवं ज्ञाने धर्म इति ब्रुवतोऽर्थादापन्नं भवति—अपशब्दज्ञानपूर्वके शब्दज्ञाने धर्म इति। अथवा कूपखानकवदेतद्भविष्यति। तद्यथा—कूपखा- नकः कूपं खनन् यद्यपि मृदा पांसुभिश्चावकीर्णो भवति, सोऽ- प्सु संजातासु तत एव तं गुणमासादयति येन च स दोषो निर्हण्यते, भूयसा चाभ्युदयेन योगो भवति। एवमिहापि यद्य- प्यपशब्दज्ञानेऽधर्मः, तथापि यस्त्वसौ शब्दज्ञाने धर्मस्तेन च स दोषो निर्घानिष्यते भूयसा चाभ्युदयेन योगो भविष्यति। यदप्युच्यते आचारे नियम इति, याज्ञे कर्मणि स नियमोऽन्यत्रानियमः। एवं हि श्रूयते—यर्वाणस्तर्वाणो नाम ऋषयो बभूवुः प्रत्यक्षधर्माणः परा-

**परज्ञा विदितवेदितव्या अधिगतयाथातथ्याः । ते तत्रभवन्तो यद्वा नस्तद्वा न इति प्रयोक्तव्ये यर्वाणस्तर्वाण इति प्रयुञ्जते । याज्ञे पुनः कर्मणि नापभाषन्ते । तैः पुनरसुरैर्याज्ञे कर्मण्यपभाषितम् । ततस्ते पराभूताः ।**

प्र.—किंपुनरिति । "एकः शब्दः सम्यग् ज्ञातः शास्त्रान्वितः सुप्रयुक्तः स्वर्गे लोके कामधुग् भवति" इति श्रुतिः । तत्र किं सम्यग् ज्ञातः कामधुग् भवति, सुप्रयोगात्तु सम्यग्ज्ञातत्वानुमानमित्यर्थः ; आहोस्वित् सुप्रयुक्तः कामधुग् भवति , सुप्रयुक्तत्वं तु सम्यग्ज्ञानादित्यर्थ इति प्रश्नः । ज्ञाने धर्म इति चेदिति । यथा श्लेष्मणः प्रकोपः स्नेहद्रव्यं रूक्षं तु वायो-स्तथेहापि प्राप्तमिति भावः । आचारे ; प्रयोगे । ऋषिर्वेदः ; न च प्रयत्न इति । यदि प्रयत्नेन विना फलं स्यात् प्रयत्नवैयर्थ्य-मापद्येतेत्यर्थः । व्यतिरेक इति ; परिहासः । तत्तुल्यमिति । वेदः शब्दो यस्यार्थस्य स वेदशब्दः । तस्य यथा ज्ञात्वानुष्ठानं तथा शब्दानामपि प्रकृत्यादिविभागज्ञानपूर्वकः प्रयोग इत्यर्थः । अपर आहेति ; वेदश्चासौ शब्दश्च वेदशब्द इति कर्मधारयः । अथवेति ; अपशब्द-ज्ञाननान्तरीयकत्वाच्छब्दज्ञानस्य पृथक् फलमपशब्दज्ञानस्य नास्तीत्यर्थः । दोष इति ; उत्कृष्टधर्मफलावाप्तौ स्वल्पमधर्मफलमुत्पन्नमप्यनुत्पन्नकल्पं भवतीत्यर्थः । प्रत्यक्षधर्माण इति ; योगजप्रत्यक्षेण सर्वं विदितवन्तः । परापरज्ञा इति ; विद्याविद्याविभागज्ञाः ।

उ.—"अर्थप्रयुक्ते शब्दप्रयोगे" इत्येतदुपपाद्य "शास्त्रेण धर्मनियमः" इत्येतदुपपाद-नाय किंपुनरित्यादि भाष्यम् । तत्र द्वयोरपि फलसाधनत्वसंभवाद्विकल्पायोगमाशङ्क्य प्रत्यु-दाहरणपूर्वकं तात्पर्यमाह—एक इति । वाक्यभेदप्रसङ्गेन द्वयोरेकेन वाक्येन फलसाधनत्व-बोधासंभवाद्वाक्यभेदे च मानाभावेन एकस्य फलसाधनत्वे इतरस्य तत्तावकत्वेनान्वयात् विकल्पोपपत्तिरित्यर्थः । अनुमानं ; स्तुतिः । सम्यक्प्रयोगसाधनत्वात् ज्ञानं प्रशस्तमिति यथाश्रुते ज्ञानात् फलसिद्धावनुमानस्यानुपयोगादिति ध्येयम् । सम्यग्ज्ञानादिति—सम्य-ग्ज्ञानपूर्वकत्वात् प्रयोगः प्रशस्त इत्यर्थः । नन्वेकस्य फलसाधनत्वे तद्विरुद्धस्य तद्विरुद्धफल-साधनत्वे मानाभावात् शब्दज्ञानस्य धर्महेतुत्वेऽप्यपशब्दज्ञानस्याधर्महेतुत्वं कथम्? अत आह—यथेति । तथा च स्नेहरूक्षादिदृष्टान्तावष्टम्भेनेदमुक्तमित्यर्थः । ननु शब्दज्ञाने व्याकरणं हेतुः ; अपशब्दज्ञाने हेत्वभावात् कथमधर्मप्रसक्तिः? अत आह भाष्ये—यो हीति । शब्दभिज्ञानां

व्यवहारे दृष्टानां गाव्यादीनामपशब्दत्वज्ञानं व्याकरणाननुगतत्वेन स्वत एव ज्ञायत इति भावः। साधुशब्दप्रयोगस्य धर्महेतुत्वबोधकश्रुत्यन्तरविरोधादपि ज्ञानस्य न धर्मसाधनत्वमित्याह भाष्ये—आचार इति। आचारशब्दस्यानुष्ठानपरतां वारयति—प्रयोग इति। भाष्ये 'नियमः' इत्यनन्तरं 'श्रूयते' इति शेषः। अपिशब्दस्य वासिष्ठादिपरत्वं वारयति—वेद इति। तेऽसुरा इति; अनेनापशब्दप्रयोगनिषेधेन सुशब्दप्रयोगं नियम्यत इति भावः। भाष्ये सर्वलोकेति; व्याकरणानभिज्ञोऽपि साधुशब्दप्रयोगात् फलं लभेतैवेत्यर्थः। भाष्ये—प्रयत्नानर्थक्यम्; व्याकरणाध्ययनप्रयासवैफल्यम्। प्रयत्नानर्थक्यमुपपादयति—यदीति। व्याकरणाध्ययनं विनाऽपि साधुशब्दप्रयोगात् फलसिद्धौ तद्वैयर्थ्यं दुर्वारमित्यर्थः। भाष्ये—साधीयः; सम्यक्। व्यतिरेकोऽपीत्यपिना शङ्कावादिन एव युक्त्यन्तरमिति प्रतीयते; तन्निरासार्थमाह—परिहार इति। अधीतव्याकरणानां साधुशब्दज्ञानेऽपि प्रयोगेऽसामर्थ्यस्य बहुलमुपलब्धेः प्रयत्नानर्थक्यं दुर्वारमिति परिहारभाष्यार्थः। 'वेदशब्देन' इत्यस्य वेदार्थेनेत्यर्थं बहुव्रीहिणाह—वेद इति। शब्दः; प्रतिपादकः। ज्ञात्वा; अध्ययनगृहीतवेदेन ज्ञात्वा। 'तत्तुल्यम्' इत्यस्य प्रदीपोक्त एवार्थः। 'वेदशब्दाः' अपीति भाष्यं तदुपष्टम्भककथनपरम्; न तु तद्व्याख्यानं, प्रदीपविरोधात् अपिशब्दास्वारस्याच्च। शब्दपदं स्वरूपकथनार्थम्। वेदोऽपि ज्ञानपूर्वकानुष्ठानात् फलमिति वदतीति तदर्थः। यद्वा वेदशब्दा वेदार्था अप्येवमेव वदन्ति, एवमेव प्रतीयन्त इति तत्तुल्यमित्येतद्व्याख्यानपरतयैव योज्यम्। ज्ञानपूर्वकानुष्ठानात् फलमित्यत्र "ज्योतिष्टोमेन" इत्यादिकं प्रमाणमुपन्यस्तम्। बहुव्रीहिपक्षे यथा वेदशब्दा इति व्याख्यानासंगतिमाशङ्क्याह—वेदश्चासाविति। भाष्ये—शब्दप्रमाणका इति; अलौकिकार्थस्य वेदैकगम्यत्वादित्यर्थः। अलौकिकार्थस्य मानान्तरगम्यत्वमभ्युपेत्याह भाष्ये—अथवा अभ्युपाय एवेति। ननु व्याकरणेन निरपेक्षेण सुशब्दज्ञानसंभवादपशब्दज्ञानं न तदुपाय इत्याशङ्क्य तात्पर्यमाह—अपशब्दज्ञानेति। अनुपायस्याप्यपशब्दज्ञानस्य सुशब्दज्ञानाधीनत्वादनुनिष्पादित्वेन न तस्य फलान्तरं कल्प्यम्, अप्रयोजकत्वादिति भावः। अपशब्दज्ञानात् पापमङ्गीकृत्याह भाष्ये—अथवा कूपेति। ननु कूपखानके मालिन्यनिवृत्तिरद्भिः प्रत्यक्षगम्या; अपशब्दज्ञानजन्यपापस्य शब्दज्ञानजन्यधर्मेण नाशे किं मानम्; अत आह—उत्कृष्टेति। 'धर्मफल' 'अधर्मफल' इति कर्मधारयौ; "धर्मेण पापमपनुदति" इति श्रुतेर्धर्मात् पापनाशः संभवतीत्यर्थः। यद्वा षष्ठीतत्पुरुषौ; धर्मफलस्योत्कृष्टसुखस्यानुभवसमये अल्पदुःखमुत्पन्नमप्यनुत्पन्नकल्पमित्यर्थः। अत्र 'वचनप्रमाणकाः' इति समाधानमेव सम्यगिति ध्येयम्। धर्मस्यातीन्द्रियस्य कथं प्रत्यक्षत्वम्? अत आह—योगेति। परापरशब्दयोर्वैशेषिकाभिमतपरत्वापरत्वाश्रयपरत्वशङ्कां वारयति—विद्येति। पामरप्रयोगशङ्कां वारयति भाष्ये—तत्रभवन्त इति। अत्र ज्ञाने धर्म इत्यभ्युपेत्यवादमात्रम्; न तु युक्तम्, अन्यानर्थक्यन्यायेन 'द्रव्यसंस्कारकर्मसु' इति न्यायेन च फलश्रुतेरर्थवादत्वात्। यदि शब्दज्ञाने धर्मः सिध्येत्, तदा ताल्वोष्ठपुटव्यापारायासखेदं कोऽनुभवेत्? तथा च "योऽश्वमेधेन यजते, य उचैनमेवं वेद" इत्यादिवदर्थवादः। तथा शब्दस्य पुरुषस्य वा ज्ञानं संस्कार इति "तीर्थे स्नाति, तीर्थमेव समानानां भवति" इत्यादिवत् फलश्रुतिरर्थवाद इति भट्टाचार्याः।

नवीनास्तु—"सम्यग्ज्ञातः" इति प्रथमश्रुतज्ञानस्यैव फलसंबन्धो बोध्यते, न प्रयोगस्य। अत एव स्वभ्यस्तव्याकरणस्य मूकस्यालसस्य वा शब्दप्रयोगाभावेऽपि धर्मो भवति। न चान्यानर्थक्यम्, अज्ञात्वाऽनुष्ठानासंभवात्; ज्ञानात् फललाभेऽनुष्ठानवैयर्थ्यात्। अश्वमेधविधायकवेदाप्रामाण्यप्रसङ्गादर्थवादत्वं युक्तम्, [illegible] तु ज्ञानस्य फलसाधनत्वे प्रयोगस्य [illegible] तदभावे ऽनर्थक्यस्येष्टत्वात्। याज्ञे कर्मणीति; सुवाग्भिकवादि। तेऽसुरा इत्यादि श्रुत्या "तस्माद्धियं व्याकृता" इति श्रुत्या च शब्दप्रयोगस्य नियमः। लोके त्वर्थप्रत्यायनार्थं शब्दापशब्दयोरनियमः, "यर्वाणः" इत्यादिदर्शनात्। अत एव 'शब्दप्रयोगायासं कोऽनुभवेत्' इति निरस्तम्, शब्दं विनाऽर्थप्रत्यायनासंभवेन शब्दापशब्दयोरन्यतरोच्चारणस्यावश्यकत्वात्। न च ज्ञानस्य संस्कारत्वनियमः, स्नानस्यापि संस्कारत्वनियमे गङ्गास्नानादेः पापनिवर्तकत्वं न स्यात्। वचनात् तत्र तथात्वे शब्दज्ञानेऽपि तुल्यम्; सेतुदर्शनदेवतादर्शनादेः पापनिवर्तकत्वसंप्रतिपत्तेश्च। एतेन—

"सर्वत्रैव हि विज्ञानं संस्कारत्वेन गम्यते।
पराङ्गं चात्मविज्ञानादन्यत्रेत्यवधारणात्॥"

इति वार्तिकं चिन्त्यम्। तस्मात् भगवन्मतं निर्दुष्टमेवेति।

**भा—अथ व्याकरणमित्यस्य कः पदार्थः? सूत्रम्।**

**वा—सूत्रे व्याकरणे षष्ठ्यर्थोऽनुपपन्नः।**

**भा—सूत्रे व्याकरणे षष्ठ्यर्थो नोपपद्यते—व्याकरणस्य सूत्रमिति। किं तर्हि तदन्यत् सूत्राद् व्याकरणम्, यस्यादः सूत्रं स्यात्?**

**वा—शब्दाप्रतिपत्तिः।**

**भा—शब्दानां चाप्रतिपत्तिः प्राप्नोति—व्याकरणाच्छब्दान् प्रतिपद्यामह इति। न हि सूत्रत एव शब्दान् प्रतिपद्यन्ते। किं तर्हि? व्याख्यानतश्च। ननु च तदेव सूत्रं विगृहीतं व्याख्यानं भवति। न केवलानि चर्चापदानि व्याख्यानम्—वृद्धिः आत्, ऐच्, इति। किं तर्हि? उदाहरणं प्रत्युदाहरणं वाक्याध्याहार इत्येतत् समुदितं व्याख्यानं भवति।**

**एवं तर्हि शब्दः।**

**वा—शब्दे ल्युडर्थः।**

भा—यदि शब्दो व्याकरणं ल्युडर्थो नोपपद्यते—व्याक्रियन्ते शब्दा अनेनेति व्याकरणम्। न हि शब्देन किंचिद् व्याक्रियते। केन तर्हि? सूत्रेण।

वा—भवे च तद्धितः।

भा भवे च तद्धितो नोपपद्यते—व्याकरणे भवो योगो वैयाकरण इति। न हि शब्दे भवो योगः। क तर्हि? सूत्रे।

वा—प्रोक्तादयश्च तद्धिताः।

भा—प्रोक्तादयश्च तद्धिता नोपपद्यन्ते—पाणिनिना प्रोक्तं पाणिनीयम्; आपिशलं; काशकृत्स्नमिति। न हि पाणिनिना शब्दाः प्रोक्ताः। किं तर्हि? सूत्रम्। किमर्थमिदमुभयमुच्यते—भवे, प्रोक्तादयश्च तद्धिता इति। न प्रोक्तादयश्च तद्धिताः इत्येव भवेऽपि तद्धितश्चोदितः स्यात्? पुरस्तादिदमाचार्येण दृष्टम्—भवे च तद्धित इति। तत् पठितम्। तत उत्तरकालमिदं दृष्टम्—प्रोक्तादयश्च तद्धिता इति। तदपि पठितम्। न चेदानीमाचार्याः सूत्राणि कृत्वा निवर्तयन्ति। अयं तावद्दोषः—यदुच्यते शब्दे ल्युडर्थ इति। नावश्यं करणाधिकरणयोरेव ल्युड् विधीयते। किं तर्हि? अन्येष्वपि कारकेषु—"कृत्यल्युटो बहुलम्" इति। तद्यथा प्रस्कन्दनं प्रपतनमिति। अथवा शब्दैरपि शब्दा व्याक्रियन्ते; तद्यथा गौरित्युक्ते सर्वे संदेहा निवर्तन्ते—नाश्वो न गर्दभ इति। अयं तर्हि दोषः—भवे प्रोक्तादयश्च तद्धिता इति। एवं तर्हि—

वा—लक्ष्यलक्षणे व्याकरणम्।

भा—लक्ष्यं च लक्षणं चैतत्समुदितं व्याकरणं भवति। किं पुनर्लक्ष्यं लक्षणं च?। शब्दो लक्ष्यः, सूत्रं लक्षणम्। एवमप्ययं दोषः—समुदाये व्याकरणशब्दः प्रवृत्तोऽवयवे नोपपद्यते। सूत्राणि चाप्यधीयान इष्यते वैयाकरण इति नैष दोषः। समुदायेषु हि शब्दाः प्रवृत्ता अवयवेष्वपि वर्तन्ते। तद्यथा—पूर्वे पञ्चालाः, उत्तरे पञ्चालाः; तैलं भुक्तं,

**घृतं भुक्तम्; शुक्लो नीलः कपिलः कृष्ण इति। एवमयं समुदाये व्याकरणशब्दः प्रवृत्तोऽवयवेष्वपि वर्तते। अथवा पुनरस्तु सूत्रम्। ननु चोक्तम्—सूत्रे व्याकरणे षष्ठ्यर्थोऽनुपपन्न इति। नैष दोषः; व्यपदेशिवद्भावेन भविष्यति। यदप्युच्यते—शब्दाप्रतिपत्तिरिति; न हि सूत्रत एव शब्दान् प्रतिपद्यन्ते; किं तर्हि? व्याख्यानतश्चेति। परिहृतमेतत्—तदेव सूत्रं विगृहीतं व्याख्यानं भवतीति। ननु चोक्तम्—न केवलानि चर्चापदानि व्याख्यानं वृद्धिः आत् ऐच् इति; किं तर्हि? उदाहरणं प्रत्युदाहरणं वाक्याध्याहार इत्येतत् समुदितं व्याख्यानं भवतीति। अविजानत एतदेवम्। सूत्रत एव हि शब्दान् प्रतिपद्यन्ते। आतश्च सूत्रत एव। यो ह्युत्सूत्रं कथयेन्नादो गृह्येत।**

प्र.—अथेति। उक्तमिदं न चान्तरेण व्याकरणमित्यादि; तत्र पक्षद्वयेऽपि दोषदर्शनात् प्रश्नः। षष्ठ्यर्थ इति; द्वाभ्यामपि शब्दाभ्यामष्टाध्याय्याः प्रतिपादनाद् व्यतिरेकाभावः। सामान्यविशेषशब्दतया तु द्वयोः सह प्रयोगो न विरुध्यते, यदा त्वष्टाध्याय्येकदेशः सूत्रशब्देनोच्यते तदा षष्ठ्यर्थोऽप्युपपद्यते। शब्दाप्रतिपत्तिरिति; न हि व्याख्यानरहितसूत्रमात्रश्रवणाच्छब्दाः प्रतीयन्ते। समुदितमिति; समुदायादेवार्थावसायोत्पादादित्यर्थः। शब्द इति; करणे ल्युट् विधीयते। शब्दश्च व्याक्रियमाणत्वात् कर्म, न तु करणमिति भावः। भवे चेति। शब्देऽप्यन्वाख्यापकत्वेन भवो योग इति चेन्मीमांसादियोगस्यापि शब्दं प्रति विचारकत्वाद्व्याकरणत्वप्रसङ्गः। न चेदानीमिति। लक्षणप्रपञ्चाभ्यां मूलसूत्रवद्वार्तिकानामुपपत्त्या दोषाभावः। प्रस्कन्दनमिति। यद्यप्ययं भीमादिः, तथापि "कृत्यल्युटो बहुलम्" इत्यस्यैव "भीमादयोऽपादाने" इत्ययं प्रपञ्च इति भावः। गौरित्युक्ते इति। सास्नादिमति यदा कंचित्प्रति 'अयं गौः' इत्युच्यते तदा तत्र वाचकान्तराणां निवृत्तिः कृता भवति। एवमेकस्मिन्नुदाहरणे उपन्यस्ते सर्वाणि तत्सदृशानि शब्दान्तराणि प्रतीयन्ते। पूर्वे पञ्चाला इति; जनपदान्तरनिवृत्तिविवक्षायामेकदेशेऽपि समुदायरूपारोपात् प्रयोगः। तैल

भा—यदि शब्दो व्याकरणं ल्युडर्थो नोपपद्यते—व्याक्रियन्ते शब्दा अनेनेति व्याकरणम्। न हि शब्देन किंचिद् व्याक्रियते। केन तर्हि? सूत्रेण।

वा—भवे च तद्धितः।

भा भवे च तद्धितो नोपपद्यते—व्याकरणे भवो योगो वैयाकरण इति। न हि शब्दे भवो योगः। क्व तर्हि? सूत्रे।

वा—प्रोक्तादयश्च तद्धिताः।

भा प्रोक्तादयश्च तद्धिता नोपपद्यन्ते—पाणिनिना प्रोक्तं पाणिनीयम्; आपिशलं; काशकृत्स्नमिति। न हि पाणिनिना शब्दाः प्रोक्ताः। किं तर्हि? सूत्रम्। किमर्थमिदमुभयमुच्यते—भवे, प्रोक्तादयश्च तद्धिता इति। न प्रोक्तादयश्च तद्धिताः इत्येव भवेऽपि तद्धितश्चोदितः स्यात्? पुरस्तादिदमाचार्येण दृष्टम्—भवे च तद्धित इति। तत् पठितम्। तत उत्तरकालमिदं दृष्टम्—प्रोक्तादयश्च तद्धिता इति। तदपि पठितम्। न चेदानीमाचार्याः सूत्राणि कृत्वा निवर्तयन्ति। अयं तावददोषः—यदुच्यते शब्दे ल्युडर्थ इति। नावश्यं करणाधिकरणयोरेव ल्युड् विधीयते। किं तर्हि? अन्येष्वपि कारकेषु—"कृत्यल्युटो बहुलम्" इति। तद्यथा प्रस्कन्दनं प्रपतनमिति। अथवा शब्दैरपि शब्दा व्याक्रियन्ते; तद्यथा गौरित्युक्ते सर्वे संदेहा निवर्तन्ते—नाश्वो न गर्दभ इति। अयं तर्हि दोषः—भवे प्रोक्तादयश्च तद्धिता इति। एवं तर्हि—

वा—लक्ष्यलक्षणे व्याकरणम्।

भा—लक्ष्यं च लक्षणं चैतत्समुदितं व्याकरणं भवति। किं पुनर्लक्ष्यं लक्षणं च?। शब्दो लक्ष्यः, सूत्रं लक्षणम्। एवमप्ययं दोषः—समुदाये व्याकरणशब्दः प्रवृत्तोऽवयवे नोपपद्यते। सूत्राणि चाप्यधीयान इष्यते वैयाकरण इति नैष दोषः। समुदायेषु हि शब्दाः प्रवृत्ता अवयवेष्वपि वर्तन्ते। तद्यथा—पूर्वे पञ्चालाः, उत्तरे पञ्चालाः; तैलं भुक्तं,

घृतं भुक्तम्; शुक्लो नीलः कपिलः कृष्ण इति। एवमयं समुदाये व्याकरणशब्दः प्रवृत्तोऽवयवेष्वपि वर्तते। अथवा पुनरस्तु सूत्रम्। ननु चोक्तम्—सूत्रे व्याकरणे षष्ठ्यर्थोऽनुपपन्न इति। नैष दोषः; व्यपदेशिवद्भावेन भविष्यति। यदप्युच्यते—शब्दाप्रतिपत्तिरिति; न हि सूत्रत एव शब्दान् प्रतिपद्यन्ते; किं तर्हि? व्याख्यानतश्चेति। परिहृतमेतत्—तदेव सूत्रं विगृहीतं व्याख्यानं भवतीति। ननु चोक्तम्—न केवलानि चर्चापदानि व्याख्यानं वृद्धिः आत् ऐच् इति; किं तर्हि? उदाहरणं प्रत्युदाहरणं वाक्याध्याहार इत्येतत् समुदितं व्याख्यानं भवतीति। अविजानत एतदेवम्। सूत्रत एव हि शब्दान् प्रतिपद्यन्ते। आतश्च सूत्रत एव। यो ह्युत्सूत्रं कथयेन्नादो गृह्येत।

प्र.—अथेति। उक्तमिदं न चान्तरेण व्याकरणमित्यादि; तत्र पक्षद्वयेऽपि दोषदर्शनात् प्रश्नः। षष्ठ्यर्थ इति; द्वाभ्यामपि शब्दाभ्यामष्टाध्याय्याः प्रतिपादनाद् व्यतिरेकाभावः। सामान्यविशेषशब्दतया तु द्वयोः सह प्रयोगो न विरुध्यते, यदा त्वष्टाध्याय्येकदेशः सूत्रशब्देनोच्यते तदा षष्ठ्यर्थोऽप्युपपद्यते। शब्दाप्रतिपत्तिरिति; न हि व्याख्यानरहितसूत्रमात्रश्रवणाच्छब्दाः प्रतीयन्ते। समुदितमिति; समुदायादेवार्थावसायोत्पादादित्यर्थः। शब्द इति; करणे ल्युट् विधीयते। शब्दश्च व्याक्रियमाणत्वात् कर्म, न तु करणमिति भावः। भवे चेति। शब्देऽप्यन्वाख्यापकत्वेन भवो योग इति चेन्मीमांसादियोगस्यापि शब्दं प्रति विचारकत्वाद्व्याकरणत्वप्रसङ्गः। न चेदानीमिति। लक्षणप्रपञ्चाभ्यां मूलसूत्रवद्वार्तिकानामुपपत्त्या दोषाभावः। प्रस्कन्दनमिति। यद्यप्ययं भीमादिः, तथापि "कृत्यल्युटो बहुलम्" इत्यस्यैव "भीमादयोऽपादाने" इत्ययं प्रपञ्च इति भावः। गौरित्युक्ते इति। सास्नादिमति यदा कंचित्प्रति 'अयंगौः' इत्युच्यते तदा तत्र वाचकान्तराणां निवृत्तिः कृता भवति। एवमेकस्मिन्नुदाहरणे उपन्यस्ते सर्वाणि तत्सदृशानि शब्दान्तराणि प्रतीयन्ते। पूर्वे पञ्चाला इति; जनपदान्तरनिवृत्तिविवक्षायामेकदेशेऽपि समुदायरूपारोपात् प्रयोगः। तैल

भा—यदि शब्दो व्याकरणं ल्युडर्थो नोपपद्यते—व्याक्रियन्ते शब्दा अनेनेति व्याकरणम्। न हि शब्देन किंचिद् व्याक्रियते। केन तर्हि? सूत्रेण।

वा—भवे च तद्धितः।

भा भवे च तद्धितो नोपपद्यते—व्याकरणे भवो योगो वैयाकरण इति। न हि शब्दे भवो योगः। क तर्हि? सूत्रे।

वा—प्रोक्तादयश्च तद्धिताः।

भा—प्रोक्तादयश्च तद्धिता नोपपद्यन्ते—पाणिनिना प्रोक्तं पाणिनीयम्; आपिशलं; काशकृत्स्नमिति। न हि पाणिनिना शब्दाः प्रोक्ताः। किं तर्हि? सूत्रम्। किमर्थमिदमुभयमुच्यते—भवे, प्रोक्तादयश्च तद्धिता इति। न प्रोक्तादयश्च तद्धिताः इत्येव भवेऽपि तद्धितश्चोदितः स्यात्? पुरस्तादिदमाचार्येण दृष्टम्—भवे च तद्धित इति। तत् पठितम्। तत उत्तरकालमिदं दृष्टम्—प्रोक्तादयश्च तद्धिता इति। तदपि पठितम्। न चेदानीमाचार्याः सूत्राणि कृत्वा निवर्तयन्ति। अयं तावददोषः—यदुच्यते शब्दे ल्युडर्थ इति। नावश्यं करणाधिकरणयोरेव ल्युड् विधीयते। किं तर्हि? अन्येष्वपि कारकेषु—"कृत्यल्युटो बहुलम्" इति। तद्यथा प्रस्कन्दनं प्रपतनमिति। अथवा शब्दैरपि शब्दा व्याक्रियन्ते; तद्यथा गौरित्युक्ते सर्वे संदेहा निवर्तन्ते—नाश्वो न गर्दभ इति। अयं तर्हि दोषः—भवे प्रोक्तादयश्च तद्धिता इति। एवं तर्हि—

वा—लक्ष्यलक्षणे व्याकरणम्।

भा—लक्ष्यं च लक्षणं चैतत्समुदितं व्याकरणं भवति। किं पुनर्लक्ष्यं लक्षणं च?। शब्दो लक्ष्यः, सूत्रं लक्षणम्। एवमप्ययं दोषः—समुदाये व्याकरणशब्दः प्रवृत्तोऽवयवे नोपपद्यते। सूत्राणि चाप्यधीयान इष्यते वैयाकरण इति नैष दोषः। समुदायेषु हि शब्दाः प्रवृत्ता अवयवेष्वपि वर्तन्ते। तद्यथा—पूर्वे पञ्चालाः, उत्तरे पञ्चालाः; तैलं भुक्तं,

**घृतं भुक्तम्; शुक्लो नीलः कपिलः कृष्ण इति। एवमयं समुदाये व्याकरणशब्दः प्रवृत्तोऽवयवेष्वपि वर्तते। अथवा पुनरस्तु सूत्रम्। ननु चोक्तम्—सूत्रे व्याकरणे षष्ठ्यर्थोऽनुपपन्न इति। नैष दोषः; व्यपदेशिवद्भावेन भविष्यति। यदप्युच्यते—शब्दाप्रतिपत्तिरिति; न हि सूत्रत एव शब्दान् प्रतिपद्यन्ते; किं तर्हि? व्याख्यानतश्चेति। परिहृतमेतत्—तदेव सूत्रं विगृहीतं व्याख्यानं भवतीति। ननु चोक्तम्—न केवलानि चर्चापदानि व्याख्यानं वृद्धिः आत् ऐच् इति; किं तर्हि? उदाहरणं प्रत्युदाहरणं वाक्याध्याहार इत्येतत् समुदितं व्याख्यानं भवतीति। अविजानत एतदेवम्। सूत्रत एव हि शब्दान् प्रतिपद्यन्ते। आतश्च सूत्रत एव। यो ह्युत्सूत्रं कथयेन्नादो गृह्येत।**

प्र.—अथेति। उक्तमिदं न चान्तरेण व्याकरणमित्यादि; तत्र पक्षद्वयेऽपि दोषदर्शनात् प्रश्नः। षष्ठ्यर्थ इति; द्वाभ्यामपि शब्दाभ्यामष्टाध्याय्याः प्रतिपादनाद् व्यतिरेकाभावः। सामान्यविशेषशब्दतया तु द्वयोः सह प्रयोगो न विरुध्यते, यदा त्वष्टाध्याय्येकदेशः सूत्रशब्देनोच्यते तदा षष्ठ्यर्थोऽप्युपपद्यते। शब्दाप्रतिपत्तिरिति; न हि व्याख्यानरहितसूत्रमात्रश्रवणाच्छब्दाः प्रतीयन्ते। समुदितमिति; समुदायादेवार्थावसायोत्पादादित्यर्थः। शब्द इति; करणे ल्युट् विधीयते। शब्दश्च व्याक्रियमाणत्वात् कर्म, न तु करणमिति भावः। भवे चेति। शब्देऽप्यन्वाख्यापकत्वेन भवो योग इति चेन्मीमांसादियोगस्यापि शब्दं प्रति विचारकत्वाद्व्याकरणत्वप्रसङ्गः। न चेदानीमिति। लक्षणप्रपञ्चाभ्यां मूलसूत्रवद्वार्तिकानामुपपत्त्या दोषाभावः। प्रस्कन्दनमिति। यद्यप्ययं भीमादिः, तथापि "कृत्यल्युटो बहुलम्" इत्यस्यैव "भीमादयोऽपादाने" इत्ययं प्रपञ्च इति भावः। गौरित्युक्ते इति। सास्नादिमति यदा कंचित्प्रति 'अयं गौः' इत्युच्यते तदा तत्र वाचकान्तराणां निवृत्तिः कृता भवति। एवमेकस्मिन्नुदाहरणे उपन्यस्ते सर्वाणि तत्सदृशानि शब्दान्तराणि प्रतीयन्ते। पूर्वे पञ्चाला इति; जनपदान्तरानिवृत्तिविवक्षायामेकदेशेऽपि समुदायरूपारोपात् प्रयोगः। तैल

मिति ; यदौषधसंस्कृता घृततैलमात्रा भवति तदेदमुदाहरणम् । आकृतिवाचित्वे तु घृततैलशब्दयोः संस्थानप्रमाणनिरपेक्षा सर्वत्र मुख्या वृत्तिः । शुक्ल इति ; अशुक्लेऽप्यवयवेऽवयवान्तरस्य शौक्ल्यात् समुदायस्य शुक्लत्वे सत्यारोपात् प्रयोगः । व्यपदेशिवद्भावेनेति ; यथा 'राहोः शिरः' इत्येकस्मिन्नपि वस्तुनि शब्दार्थभेदाद्भेदव्यवहारः एवमिहापि व्याकरणशब्देन शास्त्रस्य व्याकृतिक्रियायां करणरूपत्वमुच्यते ; सूत्रशब्देन तु समुदायरूपतेति भेदव्यवहार उपपद्यते । सूत्रत एवेति ; पदच्छेदादिभिः सूत्रार्थस्यैवाभिव्यञ्जनात् । आत इति निपातः ; अतश्च हेतोरित्यर्थः । नाद इति ; नैतदित्यर्थः । अथवा नादोऽर्थरहितत्वाद् घोषमात्रमेवेत्यर्थः ।

उ.—व्याकरणपदार्थविचारस्य प्रकृतासंगतिं परिहरति—उक्तमिति । प्रसङ्गादेतन्निरूपणमिति भावः । इत्यादीत्यादिना "म्लेच्छा मा भूमेत्यध्येयं व्याकरणम्" इत्यादिषु व्याकरणशब्दोऽभ्यस्तो गृह्यते । तत्र ; व्याकरणशब्दे । काकदन्तविचारतुल्यतां निरस्यति—पक्षद्वय इति । द्वाभ्याम् ; व्याकरणसूत्रशब्दाभ्याम् । व्यतिरेकाभाव इति ; षष्ठ्यर्थस्य भेदगर्भत्वादभेदे साऽनुपपन्नेत्यर्थः । ननु 'घटः कलशः' इतिवत् व्याकरणं सूत्रमिति सहप्रयोगानुपपत्तिदोषः कथं नोक्तोऽत आह—सामान्येति । सूत्रशब्दो जैमिन्यादिसूत्रसाधारण्यात् सामान्यशब्दः ; पाणिनिसूत्रमात्रे व्याकरणशब्दो विशेषपरः । सहप्रयोगवत् षष्ठ्यर्थोऽपि समर्थयितुं शक्यत इति तदनुपपत्तिरपि नास्तीत्याह—यदा त्विति । ननु पृषोदरादीनां सूत्रादेव साधुत्वप्रतीतेः 'शब्दाप्रतिपत्तिः' इत्ययुक्तम् ; अत आह—न हीति । सूत्रमात्रान्न सर्वशब्दप्रतीतिः ; "पृषोदरादीनि यथोपदिष्टम्" इत्यत्रापि यथाप्रयोगमेतानि साधूनीति व्याख्यानं विना न साधुत्वज्ञानहेतुत्वमिति भावः । भाष्ये—चर्चापदानीति ; चर्चा अभ्यासः ; यथा वेदे अभ्यासार्थं विभक्तानि पदान्युच्यन्ते तद्वदुक्तानीत्यर्थः । भाष्ये—वाक्याध्याहार इति ; आदैच् वृद्धिसंज्ञो भवतीति वाक्यशेषाध्याहार इत्यर्थः । ननु विगृहीतसूत्रमेव व्याख्यानम् ; प्रत्युदाहरणादिकं तु तत्सहकारिमात्रं, न तु व्याख्यानपदवाच्यम् ; अत आह—समुदायादेवेति ; विवक्षितार्थप्रतीतिजनकवाक्यस्यैव व्याख्यानत्वादित्यर्थः । ननु कर्मणि ल्युटि शब्दस्यापि करणत्वेन वा ल्युडर्थः शब्देऽपि संभवति; अत आह—करण इति ; "करणाधिकरणयोश्च" इत्यनेन । कर्मणि च विशेषविधानं नास्तीत्यर्थः । ननु यथा समुदायसमुदायिसंबन्धमात्रेण व्याकरणे भवो योगः, तथान्वाख्यानान्वाख्येयसंबन्धेन शब्देऽपि भवोऽस्तु ; अत आह—शब्दे इति । प्रकृते न संबन्धमात्रं भवार्थः, किंतु समुदायसमुदायिभाव एव ; स च न शब्दे ; अन्यथा शब्देन सह विचार्यविचारकभावसंबन्धसत्त्वाज्जैमिनिसूत्रस्यापि वैयाकरणत्वं स्यादित्यर्थः । ननु न चेदानीमित्यनेन पौनरुक्त्यं न परिहृतम् ; अत आह—लक्षणेति ; संक्षेपेत्यर्थः । यथा "कृत्यल्युटो बहुलम्" इत्यादेः "भीमादयोऽपादाने" इत्यादिः प्रपञ्चस्तथा

“प्रोक्तादयश्च तद्धिताः” इत्यस्य “भवे” इति प्रपञ्च इति न पौनरुक्त्यदोषः; वार्तिकस्यापि सूत्रतुल्यत्वादित्यर्थः। “शब्दे ल्युडर्थः” इति दोषमुद्धरति भाष्ये—अयमिति। भाष्ये—प्रस्कन्दनमिति; प्रस्कन्दत्यस्मात् प्रपतत्यस्मादित्यपादाने यथा बहुलग्रहणात् ल्युट् तथा कर्मण्यपीत्यर्थः। ननु प्रस्कन्दनमित्यस्य भीमादिपाठात् “भीमादयोऽपादाने” इत्यनेनापादाने ल्युट्, न तु “कृत्यल्युटः” इत्यनेनेत्याशङ्क्य तात्पर्यमाह—यद्यपीति। करणे ल्युडपि शब्दे संभवतीत्याह भाष्ये—अथवेति। ननु गौरित्यनेन न कोऽपि शब्दो व्याक्रियते; अत आह—साक्षादिमतीति। वाचकान्तराणाम्; अश्वादिशब्दानाम्। एकस्मिन्निति; यथा “गोतो णित्” इति सूत्रस्य गौरित्युदाहरणे उक्ते, ओकारान्ताः सर्वे ज्ञाता भवन्तीत्यर्थः। ल्युडर्थानुपपत्त्यभावेऽपि दोषान्तरमपरिहार्यमित्याह भाष्ये—अयमिति। ननु जनपदसमुदायवाचकस्य पञ्चालशब्दस्यावैकदेशपरत्वे किं मानम्? अत आह—जनपदान्तरेति; पूर्वोत्तरपदसामानाधिकरण्येन पञ्चालैकदेशनिवृत्तिप्रतीतेरेकदेशपरत्वनिश्चय इत्यर्थः। तर्हि पञ्चालशब्दस्यैकदेशेऽपि शक्तिः स्यात्; अत आह—समुदायेति; लक्षणया प्रयोगोपपत्तौ न शक्तिः कल्प्यते; ‘गङ्गायां घोषः’ इत्यत्रापि घोषे गङ्गात्वारोपात् प्रयोग इति मुख्यार्थारोप एव लक्षणेति भावः। ननु तैलघृतशब्दयोर्जातिवाचित्वेनाल्पे महति च मुख्यत्वात् कथमत्र लक्षणा? अत आह—यदेति। प्रस्थादिपरिमितस्य संस्कृतस्य तैलादिशब्दवाच्यत्वात् तदेकदेशस्य भक्षितत्वात् तत्र लक्षणेत्यर्थः। मात्रशब्दः प्रस्थादिपरिच्छिन्नपरः। व्याख्यानबीजं स्वयमेवाह—आकृतीति। संस्थानमवयवसंनिवेशविशेषः। प्रमाणं प्रस्थादिकम्। यद्यप्याकृतेः प्रतिव्यक्ति पर्यवसानवत् संस्कारोऽपि प्रत्यवयवपर्यवसायीति जातिशब्दतुल्यता, तथापि वैद्यके परिमाणविशेषपुरस्कारेण संस्कारविधानात् परिमाणविशेषविशिष्टस्यैव वाच्यत्वं, नैकदेशस्य। अत एवोक्तं—प्रमाणनिरपेक्षेतीति ध्येयम्। नन्वेकदेशशुक्ले शुक्लशब्दस्य कथं समुदायारोपात् प्रवृत्तिः? अत आह—समुदायस्येति; अवयवानां परस्परं भेदेऽप्यवयविनः समुदायस्याभेदात् क्वचित् प्रदेशे शुक्लत्वेऽपि समुदायस्य शुक्लत्वात् तत्र मुख्यस्याशुक्लावयवेऽप्यारोपात् प्रयोग इत्यर्थः। एतेन अशुक्लावयवे ‘शुक्लः कपोतः’ इति यदा प्रयोगस्तदेदमुदाहरणमित्युक्तं भवति। केचित्तु—सर्वशुक्ले मुख्यस्य एकदेशशुक्ले तदारोपात् प्रवृत्तिरिह विवक्षिता। तथाच ‘समुदायस्य शुक्लत्वे सति’ इत्यस्य कृत्स्नशुक्लस्य समुदायस्य शुक्लशब्दवाच्यत्वे सतीत्यर्थः। तथाच ‘शुक्लः कपोतः’ इति यथाश्रुतमेव संगच्छत इति व्याचक्षते। व्याकरणशब्दस्य सूत्रसंदर्भ एव प्रयोगः, न तु लक्ष्यलक्षणसमुदाये; व्यवहारस्यापर्यनुयोज्यत्वात्; अत आह—अथवेति भाष्यं। अत्र शास्त्रीयव्यपदेशिवद्भावासंभवादभेदेऽपि भेदव्यपदेशवान् व्यपदेशी, तद्वदत्रापि। इममर्थं दृष्टान्तेनोपपादयति—यथेति। शब्दार्थभेदादिति; राहुशब्दस्य भोगायतनशरीरविशेषोऽर्थः, शिरःशब्दस्याङ्गविशेषः; तयोः प्रवृत्तिनिमित्तभेदादर्थभेदः। प्रकृतेऽपि प्रवृत्तिनिमित्तभेदमाह—तद्वदिति। समुदायरूपता; अष्टाध्यायीरूपता। प्रदीपे षष्ठ्यर्थानुपपत्तिः प्रागेव परिहृता। भाष्ये—अविजानतः; अनुवृत्त्यादिकमित्यादिः। ननु व्याख्यानसापेक्षत्वात् सूत्रत एवेत्ययुक्तम्; अत आह—पदेति; आदिनोदाहरणादिग्रहः। नन्वात इति निपातसमुदायस्य न कश्चिदर्थः; अत आह—निपात इति। सोऽपि हेत्वर्थक इत्याह—अतश्च हेतोरिति; इतोऽपि

हेतोरित्यर्थः । नाद इति पदद्वयमङ्गीकृत्याह—<u>नैतदिति ।</u> ध्वनिपर्यायं नादशब्द-मङ्गीकृत्याह—<u>अथवेति ।</u>

भा—अथ किमर्थो वर्णानामुपदेशः ?

वा— वृत्तिसमवायार्थ उपदेशः ।

भा—वृत्तिसमवायार्थो वर्णानामुपदेशः । किमिदं वृत्तिसमवायार्थ इति ? वृत्तये समवायो वृत्तिसमवायः । वृत्त्यर्थो वा समवायो वृत्तिसमवायः । वृत्तिप्रयोजनो वा समवायो वृत्तिसमवायः । का पुनर्वृत्तिः ? शास्त्रप्रवृत्तिः । अथ कः समवायः ? वर्णानामानुपूर्व्येण संनिवेशः । अथ क उपदेशः ? उच्चारणम् । कुत एतत् ? दिशिरुच्चारणक्रियः । उच्चार्य हि वर्णानाह—उपदिष्टा इमे वर्णा इति ।

वा— अनुबन्धकरणार्थश्च ।

भा—अनुबन्धकरणार्थश्च वर्णानामुपदेशः—अनुबन्धानासङ्क्ष्यामीति । न ह्यनुपदिश्य वर्णाननुबन्धाः शक्या आसङ्क्तुम् । स एष वर्णानामुपदेशो वृत्तिसमवायार्थोऽनुबन्धकरणार्थश्च । वृत्तिसमवायश्चानुबन्धकरणं च प्रत्याहारार्थम् । प्रत्याहारो वृत्त्यर्थः ।

वा—इष्टबुद्ध्यर्थश्च ।

भा—इष्टबुद्ध्यर्थश्च वर्णानामुपदेशः । इष्टान् वर्णान् भोत्स्यामह इति । न ह्यनुपदिश्य वर्णानिष्टा वर्णाः शक्या विज्ञातुम् ।

वा—इष्टबुद्ध्यर्थश्चेति चेत् उदात्तानुदात्तस्वरितानुनासिकदीर्घप्लुतानामप्युपदेशः ।

भा—इष्टबुद्ध्यर्थश्चेति चेत् उदात्तानुदात्तस्वरितानुनासिकदीर्घप्लुतानामप्युपदेशः कर्तव्यः । एवंगुणा अपि हि वर्णा इष्यन्ते ।

वा—आकृत्युपदेशात् सिद्धम् ।

भा—अवर्णाकृतिरुपदिष्टा सर्वमवर्णकुलं ग्रहीष्यति । तथेवर्णाकृतिस्तथोवर्णाकृतिः ।

वा—आकृत्युपदेशात् सिद्धमिति चेत् संवृतादीनां प्रतिषेधः ।

भा—आकृत्युपदेशात् सिद्धमिति चेत् संवृतादीनां प्रतिषेधो वक्तव्यः । के पुनः संवृतादयः ? संवृतः कलो ध्मात एणीकृतोऽम्बूकृतोऽर्धको ग्रस्तो निरस्तः प्रगीत उपगीतः क्ष्विण्णो रोमश इति । अपर आह—

"ग्रस्तं निरस्तमवलम्बितं द्रुत-
मम्बूकृतं ध्मातमथो विकम्पितम् ।
संदष्टमेणीकृतमर्धकं द्रुतं
विकीर्णमेताः स्वरदोषभावनाः ॥"

इति । अतोऽन्ये व्यञ्जनदोषाः । नैष दोषः ।

वा—गर्गादिबिदादिपाठात् संवृतादीनां निवृत्तिः ।

भा—गर्गादिबिदादिपाठात् संवृतादीनां निवृत्तिर्भविष्यति । अस्त्यन्यद् गर्गादिबिदादिपाठे प्रयोजनम् । किम् ? समुदायानां साधुत्वं यथा स्यादिति । एवं तर्ह्यष्टादशधा भिन्नां निवृत्तकलादिकामवर्णस्य प्रत्यापत्तिं वक्ष्यामि । सा तर्हि वक्तव्या ।

वा—लिङ्गार्था तु प्रत्यापत्तिः ।

भा—लिङ्गार्था सा तर्हि भवति । तत् तर्हि वक्तव्यम् । यद्यप्येतदुच्यते । अथवैतर्हि अनेकमनुबन्धशतं नोच्चार्यमित्संज्ञा च न वक्तव्या, लोपश्च न वक्तव्यः । यदनुबन्धैः क्रियते तत् कलादिभिः करिष्यते । सिध्यत्येवम्; अपाणिनीयं तु भवति । यथान्यासमेवास्तु । ननु चोक्तम्—आकृत्युपदेशात् सिद्धमितिचेत संवृतादीनां प्रतिषेध इति । परिहृतमेतत्—गर्गादि

बिदादिपाठात् संवृतादीनां निवृत्तिर्भविष्यतीति। ननु चान्यद् गर्गादिबिदादिपाठे प्रयोजनमुक्तम्। किम्? समुदायानां साधुत्वं यथा स्यादिति। एवं तर्ह्युभयमनेन क्रियते—पाठश्चैव विशेष्यते; कलादयश्च निवर्त्यन्ते। कथं पुनरेकेन यत्नेनोभयं लभ्यम्? लभ्यमित्याह। कथम्? द्विगता अपि हेतवो भवन्ति। तद्यथा—आम्राश्च सिक्ताः पितरश्च प्रीणीता इति। तथा वाक्यानि द्विष्ठानि भवन्ति—श्वेतो धावति, अलंबुसानां यातेति।

अथवा इदं तावदयं प्रष्टव्यः—क्वेमे संवृतादयः श्रूयेरन्निति?

आगमेषु।

आगमाः शुद्धाः पठ्यन्ते।

विकारेषु तर्हि।

विकारा अपि शुद्धाः पठ्यन्ते।

प्रत्ययेषु तर्हि।

प्रत्यया अपि शुद्धाः पठ्यन्ते।

धातुषु तर्हि।

धातवोऽपि शुद्धाः पठ्यन्ते।

प्रातिपदिकेषु तर्हि।

प्रातिपदिकान्यपि शुद्धानि पठ्यन्ते।

यानि तर्ह्यग्रहणानि प्रातिपदिकानि।

एतेषामपि स्वरवर्णानुपूर्वीज्ञानार्थ उपदेशः कर्तव्यः। शशः षष इति मा भूत्; पलाशः पलाष इति मा भूत्; मञ्चको मञ्जक इति मा भूत्।

आगमाश्च विकाराश्च प्रत्ययाः सह धातुभिः।

उच्चार्यन्ते ततस्तेषु नेमे प्राप्ताः कलादयः॥

## इति श्रीमद्भगवत्पतञ्जलिविरचिते महाभाष्ये प्रथमस्याध्यायस्य प्रथमे पादे प्रथममाह्निकम् ।

---

प्र.—किमर्थ इति ; न हि वर्णोपदेशेन कस्यचित् साधुशब्दस्यानुशासनमिति भावः । वृत्तिसमवायार्थ इति ; लाघवेन शास्त्रप्रवृत्त्यर्थ इत्यर्थः । धर्मनियमवत् समासः । वृत्त्यर्थ इति ; शास्त्रप्रवृत्तिप्रत्यासन्नत्वं समवायस्य दर्शयति । "इग्यणः" इत्यादौ यथासंख्यशास्त्रं वर्णसन्निवेशमात्रादेवावतिष्ठते । वृत्तिप्रयोजन इति । पारम्पर्येण शास्त्रप्रवृत्तावस्याङ्गत्वम् । सति हि समवाये इत्संज्ञा । ततः "आदिरन्त्येन" इति प्रत्याहारः । ततो "ढ्रलोपे" इत्यादिशास्त्रप्रवृत्तिः । प्रत्याहारार्थमिति ; प्रत्याहारशब्देनाणादिकाः संज्ञा उच्यन्ते । इष्टबुद्ध्यर्थश्चेति ; सति ह्युपदेशे कलादिदोषरहिता ये वर्णा निर्दिष्टास्तथैव प्रयोक्तव्या इत्युक्तम् । एकश्रुत्या हि सूत्राणां पाठात् सर्वेषामुदात्तादीनामुपदेशः कर्तव्य इत्याह—इष्टबुद्ध्यर्थश्चेति चेदिति । आकृत्युपदेशादिति । उपात्तोऽपि विशेषो नान्तरीयकत्वाज्जातिप्राधान्यविवक्षायां न विवक्ष्यत इत्यर्थः । संवृतादीनामिति । एकारादीनां संवृतत्वं दोषः ; न त्वकारस्य, तस्य संवृतगुणत्वात् । तत्र संध्यक्षरेषु विवृततमेषूच्चार्येषु संवृतत्वं दोषः । कलः स्थानान्तरनिष्पन्नः काकलीत्वेन प्रसिद्धः । ध्मातः श्वासभूयिष्ठतया ह्रस्वोऽपि दीर्घ इव लक्ष्यते । एणीकृतोऽविशिष्टः, किमयमोकारः? अथौकार इति यत्र संदेहः । अम्बूकृतो यो व्यक्तोऽप्यन्तर्मुख इव श्रूयते । अर्धको दीर्घोऽपि ह्रस्व इव । ग्रस्तो जिह्वामूले निगृहीतः, अव्यक्त इत्यपरे । निरस्तो निष्ठुरः । प्रगीतः सामवदुच्चारितः । उपगीतः समीपवर्णान्तरगीत्यनुरक्तः । क्ष्विण्णः कम्पमान इव । रोमशो गम्भीरः । अविलम्बितो वर्णान्तरसंभिन्नः । हतो रूक्षः । संदष्टो वर्धित इव । विकीर्णो वर्णान्तरे प्रसृतः ; एकोऽप्यनेकनिर्भासीत्यपरे । स्वरदोषभावना इति ; स्वरदोषगात्राणि । अनन्ता

हि दोषा अशक्तिप्रमादकृताः । अस्त्यन्यदिति ; गर्ग इत्यादिनैव सन्निवेशेन गर्गादीनां साधुत्वं यथा स्यात्, गार्ग्य इत्यादीनां मा भूत् । ततश्च तद्गतानामेवाकारादीनां दोषनिवृत्तिः कृता स्यात्, न तु समुदायान्तरस्थानाम् । यद्यपि प्रत्ययविध्यर्थो गर्गादीनां पाठस्तथापि प्रसङ्गात् समुदायसाधुत्वार्थोऽपि भवति । निवृत्तकलादिकामिति ; अकारस्य संवृतत्वान्निवृत्तसंवृतत्वादिकामिति नोक्तम् । अकारस्य निदर्शनार्थत्वात् सर्ववर्णानां शास्त्रान्तरे प्रत्यापत्तिरित्यर्थः । यदनुबन्धैरिति ; यथा स्वरितत्वमधिकारार्थम्, एवमात्मनेपदाद्यर्थं कलादिकं प्रतिज्ञाय कलादात्मनेपदमित्यादि करिष्यते, न त्वनुदात्तङित इत्यादि । ननु चानुबन्धाभावे कथमणादिकाः संज्ञा उपपद्यन्ते? "आदिरन्त्येन" इत्यत्रादिः कलैः सहेत्युक्त्वा अउइत्यादिकाः संज्ञाः करिष्यन्ते । स्वरसन्धिश्चासन्देहाय न करिष्यत इत्यदोषः । उभयमिति ; यथाभूता गर्गादिस्था अकारादयस्तथाभूता एव सर्वत्र प्रयोक्तव्या इति प्रतिपाद्यत इत्यर्थः । द्विगता इति ; द्वावर्थौ गताः प्रयोजनद्वयसंपादका इत्यर्थः । तथा वाक्यान्यपीति ; शब्दस्याप्यर्थवत् द्विगतत्वमित्यर्थः । अथवेति ; केवलानां वर्णानां लोके प्रयोगाभावाद्धात्वादीनां च शुद्धानां पाठात् तत्स्थत्वाच्च वर्णानां न कश्चिद् दोषः । यानि तर्हीति ; डित्थादीनि । एतेषामपीति ; शिष्टप्रयुक्तत्वेनोणादीनां पृषोदरादीनां च साधुत्वाभ्यनुज्ञानात् सर्वेषामत्र संग्रहः सिद्धः ।

इत्युपाध्यायजैयटपुत्रकैयटकृते महाभाष्यप्रदीपे
प्रथमस्याध्यायस्य प्रथमे पादे प्रथममाह्निकम् ।

उ.—एवं प्रयोजनसद्भावाच्छास्त्रारम्भमुपपाद्य चतुर्दशसूत्रप्रयोजनकथनार्थम्—अथेत्यादि भाष्यम्। तत्र "इको यणचि" इत्यादिप्रत्याहारप्रयोजनस्य स्पष्टत्वादाक्षेपायोगं परिहरति—न हीति। "अथ शब्दानुशासनम्" इति प्रतिज्ञाबहिर्भावात् तदुपदेशानर्थक्यमित्यर्थः। समाधानतात्पर्यमाह—लाघवेनेति। परंपरया साधुशब्दान्वाख्यानप्रयोजनकत्वाच्छास्त्रसंगतिरिति भावः। ननु 'वृत्त्यर्थं समवायः' इति विग्रहो न युक्तः, तादर्थ्यचतुर्थ्याः प्रकृतिविकारभाव एव समासाङ्गीकारात्; अत आह—धर्मनियमवदिति। चतुर्थ्या तादर्थ्यं प्रतिपाद्यते। संबन्धसामान्यषष्ठीसमासः। ननु 'वृत्त्यर्थो वृत्तिप्रयोजनः' इति पुनरुक्तम्; अत आह—शास्त्रेति। चतुर्थ्या सामान्येन तादर्थ्यं प्रदर्श्य तत् क्वचित् साक्षात् क्वचित् परंपरयेति प्रदर्श्यत इति न पौनरुक्त्यमित्यर्थः। प्रत्यासन्नत्वं साक्षादुपयोगित्वम्; तदुदाहरति—इग्यण इति; संप्रसारणसंज्ञया यणः स्थाने विधीयमानिगुदाहरणम्; तत्संज्ञाविधायकम् "इग्यणः संप्रसारणम्" इति सूत्रमिग्यण इत्युक्तम्। न त्वेतत्सूत्रस्थमुदाहरणम्, तत्र यण्स्थानिकेगुद्देशेन संज्ञाविधानात्। अनुवादेऽपि यथासंख्यसूत्रप्रवृत्त्यङ्गीकारे तदप्युदाहरणम्। आदिना "इको यणचि" इत्यादिग्रहः। यद्यपि "स्थानेऽन्तरतमः" इत्यनेनापि तत् सिध्यति, तथाऽपि परत्वादनेनापि तन्नियम इति भावः। मात्रादित्यनेन प्रत्याहारानैरपेक्ष्यमुक्तम्। पारंपर्यमुपपादयति—सति हीति। उक्तद्वयोपसंहारो भाष्ये—स एष इति। समवायस्य वृत्त्यर्थत्वं परंपरयेत्याह भाष्ये—समवायश्चेति। योगशास्त्रसिद्धप्रत्याहारस्य प्रकृतानुपयोगः, वृध्यादिसूत्राभिधानेऽनुबन्धानां तादर्थ्याभाव इत्याशङ्क्याह—प्रत्याहारशब्देनेति; प्रत्याह्रियन्ते संक्षिप्यन्ते वर्णा अत्रेति, प्रतिकार्यमाह्रियन्ते उपस्थाप्यन्ते वर्णा अनेनेति वा व्युत्पत्त्येत्यर्थः। "अकर्तरि च कारके" इति करणेऽधिकरणे वा घञ्। नन्वत्र निर्दुष्टवर्णोच्चारणेऽपि प्रयोगे तन्नियमे किं मानम्? अत आह—सति हीति; निर्दुष्टवर्णोपदेशस्य प्रयोगे तन्नियम एव प्रयोजनमिति भावः। ननूदात्तादित्रयस्योपदेशः कर्तव्य इति कथं चोद्यते? अन्यतमेनोच्चारणे द्वयोपदेशस्यैव कर्तव्यत्वात्; अत आह—एकश्रुत्येति। आकृत्युपदेशे उदात्तादिविशेषोपादानं व्यर्थं स्यात्; अत आह—उदात्तादीति; अतद्गुणसंविज्ञानबहुव्रीहिणा एकश्रुतेरनुनासिकादीनां चा ग्रहः। नान्तरीयकत्वादिति; स्वरादिहीनोच्चारणासंभवादित्यर्थः। ननु संवृतत्वमकारगुणस्तत्र दोषः, इत्यत आह—अकारादीनामिति। कलादिस्वरूपमसंकीर्णं दर्शयति—कलः स्थानान्तरेति। अपर आहेत्यत्र पूर्वानुक्तानार्थमाह—अविलम्बित इति। भावनाशब्दार्थमाह—गात्राणीति; गात्रवत् प्रधानभूतानि; यथा शरीरस्यानेकविधावयवाः, तद्वत् तेषामप्यनेकभेदाः सन्तीत्यर्थः। कीदृशसमुदायस्य साधुत्वं पाठप्रयोजनम्? अत आह—गर्ग इत्यादिनैवेति; न्यूनाधिकवर्णत्वे क्रमान्यत्वे च साधुत्वं मा भूदित्यर्थः। ननु गर्गादिषु निर्दुष्टनामकादीनामन्यत्वेऽपि तत्त्वं स्यात्; अत आह—तत्रश्चेति; तेषां प्रतिसमुदायं भेद इति भावः। समुदायसाधुत्वासंभवमाशङ्क्य समाधत्ते—यद्यपीति। ननु निवृत्तसंवृतादिकामिति वक्तव्ये किमिति कलादिकामित्युक्तम्? अत आह—अकारस्येति। नन्वकारस्य प्रत्यापत्त्या इकारादीनां कलादिनिवृत्तिः कथम्? अत आह—अकारस्येति। निदर्शनार्थत्वात्; उपलक्षणार्थत्वात्। भाष्ये—लिङ्गार्थेति; कलादीनामात्मनेपदलिङ्गत्वसिद्ध्यर्थमित्यर्थः। तदेव व्यनक्ति भाष्ये—यद्यपीति; यदीत्यर्थः। भाष्ये—अथवैतर्हि; एवं

हि दोषा अशक्तिप्रमादकृताः । अस्त्यन्यदिति ; गर्ग इत्यादिनैव सन्निवेशेन गर्गादीनां साधुत्वं यथा स्यात् , गार्ग्य इत्यादीनां मा भूत् । ततश्च तद्गतानामेवाकारादीनां दोषनिवृत्तिः कृता स्यात्, न तु समुदायान्तरस्थानाम् । यद्यपि प्रत्ययविध्यर्थो गर्गादीनां पाठस्तथापि प्रसङ्गात् समुदायसाधुत्वार्थोऽपि भवति ; निवृत्तकलादिकामिति ; अकारस्य संवृतत्वान्निवृत्तसंवृतत्वादिकामिति नोक्तम् । अकारस्य निदर्शनार्थत्वात् सर्ववर्णानां शास्त्रान्तरे प्रत्यापत्तिरित्यर्थः । यदनुबन्धैरिति ; यथा स्वरितत्वमधिकारार्थम्, एवमात्मनेपदाद्यर्थं कलादिकं प्रतिज्ञाय कलादात्मनेपदमित्यादि करिष्यते, न त्वनुदात्तङित इत्यादि । ननु चानुबन्धाभावे कथमणादिकाः संज्ञा उपपद्यन्ते? "आदिरन्त्येन" इत्यत्रादिः कलैः सहेत्युक्त्वा अउइत्यादिकाः संज्ञाः करिष्यन्ते । स्वरसन्धिश्चासन्देहाय न करिष्यत इत्यदोषः । उभयमिति ; यथाभूता गर्गादिस्था अकारादयस्तथाभूता एव सर्वत्र प्रयोक्तव्या इति प्रतिपाद्यत इत्यर्थः । द्विगता इति ; द्वावर्थौ गताः प्रयोजनद्वयसंपादका इत्यर्थः । तथा वाक्यान्यपीति ; शब्दस्याप्यर्थवत् द्विगतत्वमित्यर्थः । अथवेति ; केवलानां वर्णानां लोके प्रयोगाभावाद्धात्वादीनां च शुद्धानां पाठात् तत्स्थत्वाच्च वर्णानां न कश्चिद् दोषः । यानि तर्हीति ; डित्थादीनि । एतेषामपीति ; शिष्टप्रयुक्तत्वेनोणादीनां पृषोदरादीनां च साधुत्वाभ्यनुज्ञानात् सर्वेषामत्र संग्रहः सिद्धः ।

इत्युपाध्यायजैयटपुत्रकैयटकृते महाभाष्यप्रदीपे
प्रथमस्याध्यायस्य प्रथमे पादे प्रथममाह्निकम् ।

---

उ.—एवं प्रयोजनसद्भावाच्छास्त्रारम्भमुपपाद्य चतुर्दशसूत्रप्रयोजनकथनार्थम्—अथेत्यादि भाष्यम्। तत्र "इको यणचि" इत्यादिप्रत्याहारप्रयोजनस्य स्पष्टत्वादाक्षेपायोगं परिहरति—न हीति। "अथ शब्दानुशासनम्" इति प्रतिज्ञाबहिर्भावात् तदुपदेशानर्थक्यमित्यर्थः। समाधानतात्पर्यमाह—लाघवेनेति। परंपरया साधुशब्दान्वाख्यानप्रयोजनकत्वान्नासंगतिरिति भावः। ननु 'वृत्त्यर्थं समवायः' इति विग्रहो न युक्तः, तादर्थ्यचतुर्थ्याः प्रकृतिविकारभाव एव समासाङ्गीकारात्; अत आह—धर्मनियमवदिति। चतुर्थ्या तादर्थ्यं प्रतिपाद्यते। संबन्धसामान्यषष्ठीसमासः। ननु 'वृत्त्यर्थो वृत्तिप्रयोजनः' इति पुनरुक्तम्; अत आह—शास्त्रेति। चतुर्थ्या सामान्येन तादर्थ्यं प्रदर्श्य तत् क्वचित् साक्षात् क्वचित् परंपरयेति प्रदर्श्यत इति न पौनरुक्त्यमित्यर्थः। प्रत्यासन्नत्वं साक्षादुपयोगित्वम्; तदुदाहरति—इग्यण इति; संप्रसारणसंज्ञया यणः स्थाने विधीयमानिगुदाहरणम्; तत्संज्ञाविधायकम् "इग्यणः संप्रसारणम्" इति सूत्रमिग्यण इत्युक्तम्। न त्वेतत्सूत्रस्थमुदाहरणम्, तत्र यण्स्थानिकेगुद्देशेन संज्ञाविधानात्। अनुवादेऽपि यथासंख्यसूत्रप्रवृत्त्यङ्गीकारे तदप्युदाहरणम्। आदिना "इको यणचि" इत्यादिग्रहः। यद्यपि "स्थानेऽन्तरतमः" इत्यनेनापि तत् सिध्यति, तथाऽपि परत्वादनेनापि तन्नियम इति भावः। मात्रादित्यनेन प्रत्याहारनैरपेक्ष्यमुक्तम्। पारंपर्यमुपपादयति—सति हीति। उक्तद्वयोपसंहारो भाष्ये—स एष इति। समवायस्य वृत्त्यर्थत्वं परंपरयेत्याह भाष्ये—समवायश्चेति। योगशास्त्रसिद्धप्रत्याहारस्य प्रकृतानुपयोगः, वृध्यादिसूत्राभिधानेऽनुबन्धानां तादर्थ्याभाव इत्याशङ्क्याह—प्रत्याहारशब्देनेति; प्रत्याह्रियन्ते संक्षिप्यन्ते वर्णा अत्रेति, प्रतिकार्यमाह्रियन्ते उपस्थाप्यन्ते वर्णा अनेनेति वा व्युत्पत्त्येत्यर्थः। "अकर्तरि च कारके" इति करणेऽधिकरणे वा घञ्। नन्वत्र निर्दुष्टवर्णोच्चारणेऽपि प्रयोगे तन्नियमे किं मानम्? अत आह—सति हीति; निर्दुष्टवर्णोपदेशस्य प्रयोगे तन्नियम एव प्रयोजनमिति भावः। ननूदात्तादित्रयस्योपदेशः कर्तव्य इति कथं चोद्यते? अन्यतमेनोच्चारणे द्वयोपदेशस्यैव कर्तव्यत्वात्; अत आह—एकश्रुत्येति। आकृत्युपदेशे उदात्तादिविशेषोपादानं व्यर्थं स्यात्; अत आह—उदात्तादीति; अतद्गुणसंविज्ञानबहुव्रीहिणा एकश्रुतेरनुनासिकादीनां च ग्रहः। नान्तरीयकत्वादिति; स्वरादिहीनोच्चारणासंभवादित्यर्थः। ननु संवृतत्वमकारगुणस्तन्न दोषः, इत्यत आह—अकारादीनामिति। कलादिस्वरूपमसंकीर्णं दर्शयति—कलः स्थानान्तरेति। अपर आहेत्यत्र पूर्वानुक्तानामर्थमाह—अविलम्बित इति। भावनाशब्दार्थमाह—गात्राणीति; गात्रवत् प्रधानभूतानि; यथा शरीरस्यानेकविधा अवयवाः, तद्वत् तेषामप्यनेकभेदाः सन्तीत्यर्थः। कीदृशसमुदायस्य साधुत्वं पाठप्रयोजनम्? अत आह—गर्ग इत्यादिनैवेति; न्यूनाधिकवर्णत्वे क्रमान्यत्वे च साधुत्वं मा भूदित्यर्थः। ननु गर्गादिषु निर्दुष्टतामकारादीनामन्यत्रापि तत्त्वं स्यात्; अत आह—ततश्चेति; तेषां प्रतिसमुदायं भेद इति भावः। समुदायसाधुत्वासंभवमाशङ्क्य समाधत्ते—यद्यपीति। ननु निवृत्तसंवृतादिकामिति वक्तव्ये किमिति कलादिकामित्युक्तम्? अत आह—अकारस्येति। नन्वकारस्य प्रत्यापत्त्या इकारादीनां कलादिनिवृत्तिः कथम्? अत आह—अकारस्येति। निदर्शनार्थत्वात्; उपलक्षणार्थत्वात्। भाष्ये—लिङ्गार्थेति; कलादीनामात्मनेपदलिङ्गत्वसिध्यर्थमित्यर्थः। तदेव व्यनक्ति भाष्ये—यद्यपीति; यदीत्यर्थः। भाष्ये—अथवैतर्हि; एवं

तर्हि ; अनुबन्धकार्यस्य कलादिसिद्धिप्रकारमाह—यथेति । यथा "स्वरितेनाधिकारः" इति सूत्रेण यस्य स्वरितत्वप्रतिज्ञा तस्यानुवृत्तिर्नान्यस्य, तथा 'कलादात्मनेपदम्' इति सूत्रेण यस्य धातोः कलयोगस्तस्मादात्मनेपदमिति व्यवस्था सिध्यतीत्यर्थः। कलादिकं प्रतिज्ञायेत्यस्य यत्र तत्प्रतिज्ञा तत्रैवात्मनेपदमित्यभिप्रेतम् ; न तु सूत्रान्तरकरणम्, अनुपयोगात् । यद्यपि स्वरितत्ववत्कलादेराकृतिग्रहणेन संग्रहेऽपि 'कलादात्मनेपदम्' इत्यादि सिध्यतीति प्रत्यापत्तिरनुपयुक्ता, तथाप्यपाणिनीयत्वमेव समाधानमिति भावः। अनुबन्धाभावे प्रत्याहारानुपपत्तिं शङ्कते—नन्विति । तत्रापि प्रकारान्तरेण प्रत्याहारसिद्धिमाह—आदिरिति । अणादिप्रत्याहारसंग्राह्यवर्णत्रयम् अउप्रत्याहारेण गृह्यते । एवं तत्तदनुबन्धात् पूर्ववर्णेन सहोच्चारित आदिस्तत्प्रत्याहारस्थानीयः । न चैवं कलासक्तिं विनाऽपि आदिरन्त्येन वर्णेनेति सूत्रकरणे अउ इत्यादिप्रत्याहारसिद्धिरित्यनुबन्धवैयर्थ्यमिति वाच्यम्, तत्राप्यपाणिनीयत्वस्यापरिहारादिति भावः । ननु अउ इत्यत्र गुणे कृते ओ इति प्रत्याहारः स्यात् ; तत्र 'ढ्रलोपे पूर्वस्य दीर्घ ओः' इत्युक्ते ओकारस्वरूपग्रहणं प्रत्याहारग्रहणं वेति संदेहः स्यात् ; अत आह—स्वरसंधिरिति । तद्गतानामेवेत्युक्तदोषं परिहरति—यथाभूता इति ; पौरुषेयवाक्यानां विवक्षापरतन्त्रतया वाक्यदोषो न दोषायेति भावः । ननु द्विगतशब्दस्य द्वितीयासमासेन द्विसंबन्धित्वमात्रं प्रतीयते ; न त्वेकस्य प्रयोजनद्वयहेतुत्वमत आह—द्वावर्थाविति । सामान्यशब्दो विशेषपर इत्यर्थः । अर्थशब्दस्याभिधेयपरत्वशङ्कां वारयति—प्रयोजनेति । भाष्ये—आम्रा इति ; आम्रमूले तर्पणे कृते प्रयोजनद्वयं निष्पद्यते । नन्वर्थधर्मोऽयं न शब्दधर्म इति नेष्टसिद्धिः, अत आह—शब्दस्यापीति । भाष्ये—श्वेत इति ; 'को धावति? कीदृशो धावति?' इति प्रश्नद्वयस्यैकमुत्तरम्—'श्वा इतः' इति पदच्छेदेनाद्यस्योत्तरम् ; श्वेतो व्याधिविशेषयुक्तो निर्णेजक इति द्वितीयस्य । 'कं जनपदं गन्ता ?, को वा समर्थः ?' इति प्रश्नद्वयस्य अलमित्युत्तरम् ; आद्ये अलम्बुसानां जनपदविशेषाणां, द्वितीये बुसानां पलालचूर्णानां गन्ता अलं समर्थ इत्यर्थः । सति संभवे वाक्यभेदो न युक्त इत्याशयेनाह भाष्ये—अथवेति । ननु प्रत्येकवर्णेषु कलादिराहित्यार्थं संवृतादिप्रतिषेधः कर्तव्यः ; अत आह—केवलानामिति । नन्वनिदंप्रथमानां सर्वेषामन्वाख्यानादग्रहणानीत्यनुपपन्नम् ; अत आह—डित्थादीनीति ; धात्वादिष्वपठितान्यग्रहणान्यभिमतानीत्यर्थः । ननूपदेशः कर्तव्य इत्युक्त्या सूत्रकारेणानुपदिष्टत्वावगतेः सर्वेषामुपदेशाङ्गीकारे प्रतिपदपाठप्रसङ्गात् परिहारानुपपत्तिः ; अत आह—शिष्टप्रयुक्तत्वेनेति । "उणादयो बहुलम्" इति उणादीनां साधुत्वाभ्यनुज्ञानात् पृषोदरादेश्चाकृतिगणत्वात् डित्थादीनां संग्रहः । अत्र व्याकरणे "कृतं कुर्यात्" इत्यादिस्मृतेः "स्वेच्छया संज्ञाकरणं नास्ति" इत्यागमाच्चेति भाष्यभाव इति केचित् ; तच्चिन्त्यम् ; वृद्धिसूत्रे संज्ञानामपि साधुत्वस्य वक्ष्यमाणत्वात् । तस्माच्छिष्टप्रयुक्तत्वेनैव सर्वसंग्रह इति ।

अत्र विषयप्रयोजनाभावाच्छास्त्रानारम्भशङ्का तत्कथनेन, प्रतिपदपाठेनान्यथासिध्या तदनारम्भशङ्का तदशक्तिकथनेन, जातिव्यक्त्योरन्यतरस्य शब्दार्थत्वे शास्त्रस्याव्यापकत्वदोषेणानारम्भशङ्का उभयार्थत्वकथनेन, शब्दार्थसंबन्धानित्यत्वे अन्योन्याश्रयादिदुष्टतया अनारम्भशङ्का सिद्ध इत्यादिना तन्नित्यत्वकथनेन च निरस्तेत्युपोद्घातत्वेनेदमाह्निकं चतुर्दशसूत्र्या अपि

शास्त्रप्रवृत्त्यर्थत्वात् तत्समर्थनमप्युपोद्घात एव । अत एवेदं पस्पशाह्निकमित्युच्यते । शास्त्रारम्भसमर्थकोपोद्घातग्रन्थसन्दर्भस्य पस्पशशब्देन वृद्धैर्व्यवहारात् ।

शास्त्रस्यारम्भको ग्रन्थ उपोद्घात इतीरितः ।
स एव ग्रन्थसन्दर्भः पस्पशः कथितो बुधैः ॥

---

इति श्रीमहामहोपाध्यायाद्वैतविद्याचार्यवर्यराघवसोमयाजिकुलावतंस-
श्रीमत्तिरुमलाचार्यवर्यसूनोः अन्नंभट्टस्य कृतौ महाभाष्य-
प्रदीपोद्द्योतने प्रथमास्याध्यायस्य प्रथमपादे
प्रथममाह्निकम् ॥

---

## अथ द्वितीयं प्रत्याहाराह्निकम् ॥

### सू—अइउण् ॥ १ ॥

**वा.—अकारस्य विवृतोपदेश आकारग्रहणार्थः ।**

**भा.—**अकारस्य विवृतोपदेशः कर्तव्यः । किं प्रयोजनम् ? आकारग्रहणार्थः । अकारः सवर्णग्रहणेन आकारमपि यथा गृह्णीयात् । किंच कारणं न गृह्णीयात् ? विवारभेदात् । किमुच्यते विवारभेदादिति ; न पुनः कालभेदादपि ? यथैव ह्ययं विवारभिन्नः, एवं कालभिन्नोऽपि । सत्यमेवैतत् । वक्ष्यति "तुल्यास्यप्रयत्नं सवर्णम्" इत्यत्र आस्यग्रहणस्य प्रयोजनम्—आस्ये येषां तुल्यो देशः प्रयत्नश्च ते सवर्णसंज्ञा भवन्तीति । बाह्यश्च पुनरास्यात् कालः । तेन स्यादेव कालभिन्नस्य ग्रहणम्, न पुनर्विवारभिन्नस्य ।

प्र.—सर्ववर्णानविशेषेण विचार्य विशेषेणात्र विचारः क्रियते—अकारस्येति । अत्राकारादीनां स्वरूपेणानुकार्येण वा सतोऽप्यर्थवत्त्वस्याविवक्षितत्वात् विभक्त्यनुत्पत्तिः । स्वरसंधिस्तु न प्रवर्तते, वर्णोपदेश-

कालेऽजादिसंज्ञानामनिष्पादात् । तत्राकारस्य संवृतत्वात् दीर्घप्लुतयोर्विवृतत्वात् प्रयत्नभेदात् सवर्णसंज्ञाया अप्रसङ्गात् प्रदेशेष्वकारेण दीर्घप्लुतयोर्ग्रहणं न प्राप्नोतीति विवृतत्वमस्योपदिश्यते। विवृतस्य गुणस्योपदेशो विवृतोपदेशः। अत्र गुणस्य नित्यसापेक्षत्वादकारापेक्षत्वेऽपि समासः ; यथा 'देवदत्तस्य गुरुकुलम्' इति । आकारग्रहणार्थ इति ; विवृतोपदेश आकारग्रहणार्थ इति सामानाधिकरण्येन निर्देशादाकारग्रहणं विवृतोपदेशस्य प्रयोजनमिति सामर्थ्यादवगमाच्चोद्यानुरूपमुत्तरं न भवतीति न चोदनीयम्। सवर्णग्रहणेनेति ; येन शास्त्रेण "अणुदित्सवर्णस्य" इत्यनेन सवर्णा गृह्यन्ते तेन करणेनेत्यर्थः। किंच कारणमिति ; आकृतिपक्षाश्रयेण ग्रहणकशास्त्रस्य प्रत्याख्यानादाकारस्याप्यत्वजातिसद्भावात् सिद्धं ग्रहणमिति भावः। अत्र च "निमित्तकारणहेतुषु सर्वासां प्रायदर्शनम्" इति प्रथमा कृता। तेन कस्मात् कारणादित्यर्थः संपद्यते । विवारभेदात् इत्यत्र तु कारणशब्दप्रयोगाभावात् प्रायग्रहणादसर्वनाम्नो वा प्रथमाद्वितीययोरभावात् "विभाषा गुणेऽस्त्रियाम्" इति पञ्चमी विहिता। विवारयति विकासयति आस्यमिति विवारः प्रयत्नः । व्यक्तिपक्षे ग्रहणकशास्त्रारम्भात् दोषापत्तिः। व्यक्तिपक्षे भेदान्तरसद्भावादाह—किमुच्यत इति । बाह्यश्चेति ; प्रयत्नाभिनिर्वृत्तत्वात् कालस्य प्रयत्नत्वमभ्युपगम्य बाह्यत्वेन परिहारः। प्रसिद्धपरिमाणवस्त्वन्तरगतपरिच्छेदकक्रियान्तरापेक्षणात् कालव्यवहारस्य बाह्यत्वं कालस्य। यथा व्रीहेः प्रस्थादिव्यवहारः परिमाणद्रव्यकृतः, एवमत्रापि मात्रादिव्यपदेशो निमेषादिक्रियाभेदकृतः। अथवा नाभिप्रदेश एव विशिष्टप्रयत्नारम्भात् दीर्घादिनिष्पत्त्या नाभेश्चास्यात् बाह्यत्वात् कालस्य बाह्यत्वम्। विवृतत्वादीनां चास्यवर्तिप्रयत्ननिष्पाद्यत्वादाभ्यन्तरत्वम्। द्रुतादिवृत्तयस्तु यथा न भेदिकास्तथा तपरसूत्रे वक्ष्यते ।

उ.—ननु "अथ किमर्थो वर्णानामुपदेशः" इत्यादिना वर्णोपदेशप्रयोजनस्य विचारितत्वादाह्निकान्तरारम्भो व्यर्थ इत्यत आह—सर्ववर्णानिति। "अथ किमर्थो वर्णानाम्" इति बहुवचनस्य संकोचकाभावेन सर्वविषयत्वमभिप्रेत्य सर्ववर्णानित्युक्तम्। विवृतत्वादिविचारो विशेषविचारः। सामान्यविचारस्य विशेषविचारहेतुत्वं विचार्येत्यनेन सूचितम्। अत्र ; अस्मिन्नाह्निके। अत्र विशेषविचार इति कथमवसीयत इत्याशङ्कानिरासाय अकारस्येति वार्तिकप्रतीकोपादानम्। ननु "अस्य च्वौ" इत्यादाविव स्वरूपेणानुकार्येण वाऽर्थवत्त्वात्

विभक्त्या भवितव्यम्; अत आह—अकारादीनामिति। स्वरूपस्वरूपिणोरनुकार्यानुकरणयोर्वा अभेदविवक्षयाऽर्थवत्त्वाद्यविवक्षा। नन्वेवमपि गुणायादेशयोः 'अयुण्' इति भवितव्यम्; अत आह—स्व सन्धिरिति। "आदिरन्त्येन" इत्यस्य वर्णोपदेशानन्तरभावित्वात् तत्समये तदप्रवृत्तेः संज्ञानामनिष्पत्तौ तदधीनगुणादिकं न प्रवर्तेत इत्यर्थः। एतच्च प्रौढ्योक्तम्, एवं सति सवर्णसंज्ञाविधानात् प्राक् तदाश्रितदीर्घाभावे "तुल्यास्यप्रयत्नं सवर्णम्" "नाज्झलौ" इति निर्देशानुपपत्तेः; तस्मात् सौत्रत्वान्निर्देशस्य संहिताया अविवक्षितत्वाद्वा सन्ध्यभाव इत्याहुः। वार्तिकस्य तात्पर्यमाह—तत्रेति; प्रयोग इत्यर्थः। प्रदेशेषु; "अस्य च्वौ" इत्यादिषु। विवृतशब्दस्य धर्मिपरत्वे अकारस्योपदिष्टत्वात् तदुपदेशप्रयोजनस्योक्तत्वाच्च वार्तिकानारम्भप्रसङ्गः समासानुपपत्तिश्च; गुणविशिष्टधर्मिपरत्वेऽपि समासानुपपत्तिर्धर्मिपरत्ववैयर्थ्यं च; अत आह—विवृतस्येति। गुणपरत्वे समासानुपपत्तिमाह—अत्रेति; वार्तिके समास इत्यन्वयः। 'कस्य गुरुः' इतिवत् 'कस्य विवृतत्वं गुणः' इति जिज्ञासादर्शनात् ससंबन्धिकत्वेन नित्यसापेक्षत्वं ज्ञेयम्। प्रयोजने पृष्टे प्रयोजनस्यानभिधानं व्यधिकरणम्; अत आह—सामानाधिकरण्येनेति; बहुव्रीहिरित्यर्थः। 'गोः किं लक्षणम्?' इति प्रश्ने 'सास्नादिमती गौः' इति प्रतिवचनस्यापि साधुत्वमिति ज्ञापनाय वक्रोक्तिरिति भावः। नन्वाकारग्रहणमपि सवर्णग्रहणमेवेत्यभेदात्मकमिति आकारग्रहणे न सवर्णग्रहणस्य करणत्वम्; अत आह—येनेति। असति विवृतोपदेशेऽसावर्ण्येनाग्रहणस्य स्पष्टत्वात् किंचेति प्रश्नानुपपत्तिमाशङ्क्याह—आकृतीति। नन्वत्वात्वजात्योरत्वेत्त्वयोरिव भिन्नत्वम्; अत आह—आकारस्यापीति। केवलकण्ठ्यत्वे सति स्वरत्वमत्वजातेर्व्यञ्जकम्; तच्च दीर्घप्लुतयोरपि समानमिति भावः। प्रातिपदिकार्थव्यतिरिक्तहेतुप्रश्नः प्रथमान्तेन न संभवतीत्यत आह—अत्रेति; किंकारणशब्दयोरित्यर्थः। ननु प्रश्नानुरोधादुत्तरमपि प्रथमया भाव्यम्; अत आह—विवारभेदादित्यत्रेति। प्रश्नगतकारणशब्दानुपङ्गोपपत्तेस्तदप्रयोगेऽपि तदर्थे गम्यमाने विभक्तिविधानोपपत्तेर्वा आह—प्रायग्रहणादिति। तर्हि हेतौ तृतीयया भाव्यम्; अत आह—विभाषेति। विवारशब्दस्य विवरणपरत्वशङ्कां वारयति—विवारयतीति; ण्यन्तात्पचाद्यच्। नन्वाकृतिपक्षे प्रयत्नभेदेऽपि ग्रहणं स्यात्; अत आह—व्यक्तीति; सूत्रारम्भपक्षे एतद्दोषाभिधानमित्यर्थः। ननु कालभेदे बाह्यत्वेन समाधानमयुक्तम्; अत आह—प्रयत्नेति। कालस्य; मात्रादिकालस्य। ननु प्रयत्नानुनिष्पाद्यक्रियाविशेषरूपकालस्याप्यास्यात् बाह्यत्वमयुक्तम्; अत आह—प्रसिद्धेति। वर्णेभ्यो वस्त्वन्तरमक्ष्यादिकं प्रसिद्धपरिमाणं, वस्त्वन्तरगतं यत् परिच्छेदक्रियान्तरं निमेषादि तदवेक्षणादिति विग्रहः। नन्वक्ष्यादिगतनिमेषादिकालस्य कथं वर्णसंबन्धित्वेन व्यपदेश इत्याशङ्क्योपपादयति—यथेति। 'इदमिदानीम्' इति प्रतीत्या निमेषादिकालसंबन्धः सर्वेषामस्तीति भावः। ननु तुल्यास्यसूत्रे मुख्यप्रयत्नग्रहणात् कालभिन्नग्रहणं स्यात्; अत आह—अथवेति। केचित्तु निमेषादेरनिच्छापूर्वकत्वेनाप्रयत्ननिष्पाद्यत्वात् गौणोऽपि प्रयत्नशब्दस्तत्र न संभवति; अतोऽथवेतीत्याहुः; तच्चिन्त्यम्, क्रियात्वेन वा साध्यत्वेन वा गौणप्रयोगसंभवात्। कालस्य; प्रयत्नरूपकालस्य। ननु द्रुतादीनामास्यप्रयत्नसाध्यानां भेदकं कुतो निरस्तम्; अत आह—द्रुतादीति। वक्ष्यते; "स्फोटस्तावदनेन" इत्यत्र

भा.—किं पुनरिदं विवृतस्योपदिश्यमानस्य प्रयोजनमन्वाख्यायते ? आहोस्वित् संवृतस्योपदिश्यमानस्य विवृतोपदेशश्चोद्यते ? विवृतस्योपदिश्यमानस्य प्रयोजनमन्वाख्यायते। कथं ज्ञायते? यदयम् "अ अ" इत्यकारस्य विवृतस्य संवृतताप्रत्यापत्तिं शास्ति। नैतदस्ति ज्ञापकम्। अस्ति ह्यन्यदेतस्य वचने प्रयोजनम्। किम्? 'अतिखट्वः, अतिमालः' इत्यत्रान्तर्यतो विवृतस्य विवृतः प्राप्नोति; संवृतः स्यादित्येवमर्था प्रत्यापत्तिः। नैतदस्ति। नैव लोके न च वेदेऽकारो विवृतोऽस्ति। कस्तर्हि? संवृतः। योऽस्ति स भविष्यति। तदेतत् प्रत्यापत्तिवचनं ज्ञापकमेव भविष्यति—विवृतस्योपदिश्यमानस्य प्रयोजनमन्वाख्यायत इति। कः पुनरत्र विशेषः—विवृतस्योपदिश्यमानस्य प्रयोजनमन्वाख्यायेत, संवृतस्योपदिश्यमानस्य वा विवृतोपदेशश्चोद्येतेति? न खलु कश्चिद्विशेषः। आहोपुरुषिकामात्रं तु; भवानाह—संवृतस्योपदिश्यमानस्य विवृतोपदेशश्चोद्यत इति; वयं तु ब्रूमः—विवृतस्योपदिश्यमानस्य प्रयोजनमन्वाख्यायत इति।

प्र.—किं पुनरिति; किं सूत्रकारेणैव विवृतोपदेशः कृतो वार्तिककारेण तु तस्य प्रयोजनमुक्तम्, अथाकृत एव विवृतोपदेशो वार्तिककृता चोद्यत्वेनोपन्यस्त इति प्रश्नः। दुरवधारणत्वादुपदिष्टोऽपि विवृतो व्याख्यानेन विना न शक्यते ज्ञातुमिति प्रत्यक्षेऽप्यकारे प्रश्नोऽयं नासमञ्जसः। तत्र प्रत्यापत्त्या पूर्वः पक्ष आश्रितः। अन्यथा शास्त्रान्ते प्रत्यापत्तिवचनमनर्थकं स्यात्, स्वरूपप्रच्यवाभावात्। अस्ति ह्यन्यदिति; प्रयोग एव प्राप्ते विवृतत्वे संवृतत्वप्रत्यापत्तिः स्यादित्यज्ञापकमेतादित्यर्थः। नन्विहासति विवृतोपदेशे सावर्ण्याभावादकारेणाकारस्याग्रहणादच्त्वाभावात् कथम् 'अतिखट्वः' इति ह्रस्वः? नैष दोषः; "उदीचामातः स्थाने" इति ज्ञापकाद्भवत्याकारस्य ह्रस्वः। नैव लोक इति; प्रयुक्तानामनुशासनात् प्रयोगे च विवृतस्याकारस्यासंभवात् संवृत एव भविष्यतीति प्रत्यापत्तिर्ज्ञापिकैव। कः पुनरिति; विवृतोपदेश इत्यत्र कृत इति वा कर्तव्य

इति वा वाक्यशेषाध्याहारे न कश्चिद्विशेष इत्यर्थः। आहोपुरुषिकेति; 'अहो अहं पुरुषः' इत्यहंकारवानहोपुरुषः; तस्य भाव इति मनोज्ञादित्वाद्वुञ्; अहंकारवत्त्वमित्यर्थः।

उ.—एतद्वार्तिकं सूत्रस्य व्याख्यानमुपसंख्यानं वेति प्रश्नपरं किंपुनरित्यादि भाष्यमित्याह—किं सूत्रेति; श्रोतॄणां सुखप्रवृत्त्यर्थमयं विचार इत्यर्थः। वर्णवत् वर्णधर्मस्यापि श्रोत्रप्रत्यक्षत्वात् प्रश्नानुदयमाशङ्क्याह—दुरवधारणत्वादिति; धर्मिणोऽध्यक्षत्वेऽपि गुरुत्वादिवद्धर्मस्य नाध्यक्षत्वनियम इति भावः। दुरवधारणत्वे कुतो निर्णयः? अत आह—तत्रेति; पक्षद्वयमध्य इत्यर्थः। पूर्वः पक्षः; व्याख्यानपक्षः। प्रत्यापत्तेर्निश्चायकत्वमुपपादयति—अन्यथेति; अत्र विवृतोपदेशाभावे सतीत्यर्थः। तत्र हेतुमाह—स्वरूपेति। स्वरूपाद्धि प्रच्युतस्य पुनः स्वरूपेऽवस्थापनं प्रत्यापत्तिः। अत्र विवृतोपदेशे सति प्रयोगेऽपि तत्प्रसङ्गात् स्वरूपप्रच्यवे सति प्रयोगे संवृत एव प्रयोक्तव्य इति व्यवस्थापनात् प्रत्यापत्तिः संभवतीत्यर्थः। आद्यो विवृतः। द्वितीयः संवृतः। यः शास्त्रादौ विवृत उपदिष्टः स प्रयोगे संवृतः प्रयोक्तव्य इत्यस्य सूत्रस्यार्थः। न च तस्य प्रत्यापत्तित्वे मानाभावः। "इदमो मः" इत्यादौ मकारस्य मकारविधानवदकारस्याकारविधाने प्रयोजनाभावात् व्याख्यानतश्च प्रत्यापत्तित्वनिश्चय इति भावः। ननु तत्सूत्रे विशेषानुपादानात् प्रयोगवत् सूत्रेऽपि प्रत्यापत्तिः स्यात्; अत आह—प्रयोग एवेति। प्रयुक्तानामन्वाख्यानाद्विशेषानुपादानेऽपि प्रयोग एव शास्त्रं व्यवतिष्ठत इत्यर्थः। अत्र विवृतोपदेशाभावे 'अतिखट्वः' इत्यादौ ह्रस्वाप्राप्तिं शङ्कते—नन्विति। अच्त्वाभावादिति; "अचश्च" इति सूत्रेण ह्रस्वादीनामच्स्थानिकत्वनियमादित्यर्थः। ज्ञापकादाकारस्य ह्रस्व इत्याह—उदीचामिति। आकारस्थानिकस्याकारस्येत्वविधानमाकारस्यानच्त्वेऽपि ह्रस्वो भवतीति ज्ञापयतीत्यर्थः। प्रमादादिना लोकवेदयोरपि विवृतस्य संभवान्नैव लोक इत्ययुक्तम्; अत आह—प्रयुक्तानामिति। अनादिशिष्टप्रयुक्तानामिदमन्वाख्यानं, न तु प्रमादप्रयुक्तानाम्; तेषामसाधुत्वेन शास्त्राविषयत्वादिति भावः। ननु व्याख्यानपक्षे अपूर्वोपदेश इति विशेषसद्भावादेव प्रश्नोऽनुपपन्नः; अत आह—विवृतेति; वाक्यशेषाध्याहारे लाघवगौरवविशेषो नास्तीत्यर्थः।

**वा.—तस्य विवृतोपदेशादन्यत्रापि विवृतोपदेशः सवर्णग्रहणार्थः।**

**भा.—तस्यैतस्याक्षरसमाम्नायिकस्य विवृतोपदेशादन्यत्रापि विवृतोपदेशः कर्तव्यः। कान्यत्र? धातुप्रातिपदिकप्रत्ययनिपातस्थस्य। किं प्रयोजनम्? सवर्णग्रहणार्थः। आक्षरसमाम्नायिकेनास्य ग्रहणं यथा स्यात्। किंच कारणं न स्यात्? विवारभेदादेव।**

आचार्यप्रवृत्तिर्ज्ञापयति—भवत्याक्षरसमाम्नायिकेन धात्वादिस्थस्य ग्रहणमिति, यदयम् "अकः सवर्णे दीर्घः" इति प्रत्याहारेऽको ग्रहणं करोति। कथं कृत्वा ज्ञापकम्? न हि द्वयोराक्षरसमाम्नायिकयोर्युगपत् समवस्थानमस्ति। नैतदस्ति ज्ञापकम्। अस्ति ह्यन्यदेतस्य वचने प्रयोजनम्। किम्? यक्ष्याक्षरसमाम्नायिकेन ग्रहणमस्ति तदर्थमेतत् स्यात्—खट्वाढकं, मालाढकमिति। सति प्रयोजने न ज्ञापकं भवति। तस्माद्विवृतोपदेशः कर्तव्यः। क एष यत्नश्चोद्यते विवृतोपदेशो नाम? विवृतो वोपदिश्येत, संवृतो वा; को न्वत्र विशेषः? स एष सर्व एवमर्थो यत्नः क्रियते यान्येतानि प्रातिपदिकान्यग्रहणानि तेषामेतेनाभ्युपायेनोपदेशश्चोद्यते। तद् गुरु भवति। तस्माद्वक्तव्यम्—धात्वादिस्थश्च विवृत इति।

वा.—दीर्घप्लुतवचने च संवृतनिवृत्त्यर्थः।

भा.—दीर्घप्लुतवचने च संवृतनिवृत्त्यर्थो विवृतोपदेशः कर्तव्यः; दीर्घप्लुतौ संवृतौ मा भूतामिति – वृक्षाभ्याम्, देवदत्ता ३ इति। नैव लोके न च वेदे दीर्घप्लुतौ संवृतौ स्तः। कौ तर्हि? विवृतौ। यौ स्तस्तौ भविष्यतः। स्थानी प्रकल्पयेदेतावनुस्वारो यथा यणम्। संवृतः स्थानी संवृतौ दीर्घप्लुतौ प्रकल्पयेत्। अनुस्वारो यथा यणम्। तद्यथा—सय्यँन्ता सवँ्वत्सरः, यल्ँलोकं तल्ँलोकमिति। अनुस्वारः स्थानी यणमनुनासिकं प्रकल्पपयति। विषम उपन्यासः। युक्तं यत्सतस्तत्र प्रक्लृप्तिर्भवति। सन्ति हि यणः सानुनासिका निरनुनासिकाश्च। दीर्घप्लुतौ पुनर्नैव लोके न च वेदे संवृतौ स्तः। कौ तर्हि? विवृतौ। यौ स्तस्तौ भविष्यतः। एवमपि कुत एतत्—तुल्यस्थानौ प्रयत्नभिन्नौ भविष्यतः, न पुनस्तुल्यप्रयत्नौ स्थानभिन्नौ स्याताम् ईकार ऊकारो वेति? वक्ष्यति "स्थानेऽन्तरतमः" इत्यत्र स्थान इत्यनुवर्तमाने पुनः स्थानेग्रहणस्य प्रयोजनम् "यत्रानेकविधमान्तर्यं तत्र स्थानत आन्तर्यं बलीयो भवति" इति।

प्र.—यदा प्रत्याहारे विवृतोऽकार उपदिष्टस्तदा प्रयत्नभेदात् तत्र संवृतस्याकारस्य ग्रहणाभावादचूकार्यं न स्यादिति तत्सिद्धये सर्वस्याकारस्य विवृतत्वं कर्तव्यमित्यर्थः। तेन शाम्यतीत्यादौ दीर्घादि सिध्यति। ननु च सर्वेषामकाराणां यत् सामान्यं तदनुकरणमत्राकारः। तस्य च विवृतत्वे प्रतिज्ञायमाने सर्वेषां तत् प्रतिज्ञातं भवतीति किमुच्यते—तस्य विवृतोपदेशादिति? एवं तर्हि यदा कस्यचिदेवाकारस्येदमनुकरणं स्वरूपपदार्थको वा अकारस्तदेदमुच्यत इत्यदोषः। यदयमिति; अत्र हि ककारेण चिह्नेन प्रत्याहारस्थो विवृतो निर्दिष्टः। तेन च संवृतस्याग्रहणे 'इकः सवर्णे' इति वक्तव्यम्। न हि द्वयोरिति; यद्यप्येकोऽपि विवृतो नास्ति, तथापि व्यधिष्ठानत्वादेकादेशस्य द्वयोरित्युक्तम्। नैतदिति; अक इत्यकारेण विवृतेन दीर्घस्य विवृतस्य ग्रहणादज्ञापकमेतदित्यर्थः। क एष यत्न इति; धात्वादयः पठिताः। तत्राकारो विवृतः पठ्यताम्। न हि किंचिद् गौरवं भवति। तत्किमुच्यते—अन्यत्रापि विवृतोपदेशः कर्तव्य इतीति प्रश्नः। यानीति; प्रतिपदपाठस्याशक्यत्वात् तस्य विवृतोपदेशादित्यनेन सर्वस्याकारस्य विवृतोपदेशः कार्यतया चोद्यत इत्यर्थः। धात्वादिस्थ इति; अग्रहणप्रादिपादिकार्थे विवृतत्वेऽवश्यचोदनीये धात्वादिस्थस्यापि संवृतस्यैव पठितस्य कार्यार्थं विवृतत्वं प्रतिज्ञेयम्। अन्यथा दोषरूपविवृतोच्चारणप्रयत्नस्य गौरवं स्यात्। विवृतत्वप्रतिज्ञाने प्रयोजनान्तरमाह—दीर्घेति; असति विवृतत्वप्रतिज्ञाने संवृतस्याकारस्य स्थाने सावर्ण्यात् संवृतयोरेव दीर्घप्लुतयोः प्रसङ्ग इत्यर्थः। नैव लोक इति; असत्यपि सावर्ण्ये लिङ्गादकारस्य संवृतस्य विवृतौ दीर्घप्लुतौ भविष्यतः; यदयम् "अतो दीर्घो यञि" "अतो रोरप्लुतादप्लुते" इत्याहेति भावः। सतस्तत्रेति; अशक्यत्वाद् दीर्घप्लुतयोः संवृतयोरुच्चारणस्येत्यर्थः। एवमपीति; असति विवृतत्वप्रतिज्ञाने संवृतस्याकारस्य संवृतावेवेकारोकारौ प्राप्नुतः "एवृतः संवृता अन्यत्राभेवसाम्नः" इति कैश्चिदीकारोकारयोः संवृतत्वस्याभ्युपगमात्।

उ.—यद्यपि भाष्ये कर्तव्य इत्यध्याहृतं, तथापि अनास्थावादे "वयं तु" इत्यादिना कृत इत्यध्याहारस्यैवाङ्गीकारात् सुखग्रहणार्थं वार्तिकार्थमाह—यदेति। यदा तदेत्यनेन हेतौ

पञ्चमी व्याख्याता। ह्रस्वस्याचं कार्यमुदाहरति—तेनेति; अन्यत्र विवृतोपदेशेनेत्यर्थः। दीर्घ इति—"शमामष्टानाम्" इति विधीयमानो दीर्घः स्थानिनोऽच्त्वे सति सिध्यति, नान्यथेत्यर्थः। आदिना प्लुतग्रहः। व्यक्तिपक्ष एव वार्तिकमाक्षिप्य समाधत्ते—नन्वित्यादिना। यत् सामान्यमिति—अत्वे सत्येकमात्रत्वं सामान्यम्। तेन रूपेण सर्वव्यक्त्यनुकरणमिति यावत्। विनिगमकाभावात् सर्वानुकरणप्रसक्तावाह—स्वरूपेति। प्रयोगस्थाकारात्तुल्य-व्यक्त्यन्तरमात्रं स्वरूपेण निर्दिष्टमित्यर्थः। ननु प्रयोगार्थत्वात् शास्त्रस्य 'अकः' इति प्रयोगस्थस्यैवानुकरणमित्यज्ञापकम्; अत आह—अत्र हीति। ककारेणेति; "आदिरन्त्येन" इति शास्त्रादित्यर्थः; तेनाग्रहणेऽपि इवर्णाद्यर्थत्वादक इत्यस्य ज्ञापकत्वम्; अत आह—तेनेति। स्पष्टप्रतिपत्त्यर्थम् 'इकः सवर्णे' इत्येवोच्यतामित्यर्थः। ननु प्रयोगार्थं शास्त्रम्; प्रयोगे चैको विवृताकारो नास्तीति द्वयोरिति व्यर्थम्; अत आह— यद्यपीति। अकारस्य दीर्घग्राहकत्वात् न ज्ञापकत्वमित्याह—अक इति। संवृताद्विवृतस्य करणविशेषजन्यत्वेन स्वरूपविशेषयोगात् प्रश्नायोगमाशङ्क्याह—धात्वादय इति। प्रत्याहारवत् तत्रापि विवृत एव पठ्यतामिति क इत्यादिभाष्यार्थ इत्यर्थः। न किंचिदिति; दीर्घप्लुतवदुच्चारणेऽपि गौरवं नास्तीत्यर्थः। "तद् गुरु भवति" इत्यस्य तात्पर्यमाह—प्रतिपदपाठस्येति। नन्वग्रहणप्रातिपदिकस्थ इति वक्तव्यम्; न तु धात्वादिस्थ इति, तत्र विवृतपाठेनापीष्टसिद्धेः; अत आह—अग्रहणेति। विवृतपाठे गौरवम्; अत आह—अन्यथेति। वार्तिकार्थमाह—असतीति। ननु धात्वादिस्थस्या-सति विवृतत्वे प्रत्याहारस्थेनासावर्ण्येनानच्त्वेन "अचश्च" इति परिभाषया दीर्घप्लुतयोरप्राप्तेः "तौ भविष्यतः" इत्ययुक्तम्; अत आह—असत्यपीति। लिङ्गात्; ज्ञापकात्। तदेवाह—यदयमिति। कार्यशब्ददर्शने असन्तावपि संवृतौ दीर्घप्लुतौ निर्वर्त्येयाताम्; अत आह—अशक्यत्वादिति।

**वा.—तत्रानुवृत्तिनिर्देशे सवर्णाग्रहणमनणुत्वात्।**

**भा.**—तत्रानुवृत्तिनिर्देशे सवर्णानां ग्रहणं न प्राप्नोति—"अस्य च्वौ" "यस्येति च"। किं कारणम्? अनणुत्वात्। न ह्येतेऽणः, येऽनुवृत्तौ। के तर्हि? येऽक्षरसमाम्नाये उपदिश्यन्ते।

**वा.—एकत्वादकारस्य सिद्धम्।**

**भा.**—एकोऽयमकारो यश्चाक्षरसमाम्नाये यश्चानुवृत्तौ यश्च धात्वादिस्थः।

**वा.—अनुबन्धसंकरस्तु।**

**भा.**—अनुबन्धसंकरस्तु प्राप्नोति। "कर्मण्यण्" "आतोऽनुप-सर्गे कः" इति केऽपि णित्कृतं प्राप्नोति।

**वा.—एकाजनेकाज्ग्रहणेषु चानुपपत्तिः ।**

**भा.—एकाजनेकाज्ग्रहणेषु चानुपपत्तिर्भवति । तत्र को दोषः ? 'किरिणा, गिरिणा' इत्येकाज्लक्षणमन्तोदात्तत्वं प्राप्नोति । इह च 'घटेन तरति घटिकः' इति द्व्यज्लक्षणष्ठन् न प्राप्नोति ।**

**वा.—द्रव्यवच्चोपचाराः ।**

**भा.—द्रव्यवच्चोपचाराः प्राप्नुवन्ति । तद्यथा द्रव्येषु नैकेन घटेनाऽनेको युगपत् कार्यं करोति, एवमिममकारं नानेको युगपदुच्चारयेत् ।**

प्र.—तत्रानुवृत्तिनिर्देश इति ; "अकः सवर्णे दीर्घः" इत्यादावयमेवाकारोऽनुकृत इति ककारादिना चिह्नेन ज्ञायते । ततश्चाणुत्वात् तस्य ग्राहकत्वमस्तु । "अस्य च्वौ" इत्यादौ त्वकारस्यानणुत्वाद् ग्राहकत्वं न प्राप्नोतीत्यर्थः । वृत्तिः शास्त्रस्य लक्ष्ये प्रवृत्तिः ; तदनुगतो निर्देशोऽनुवृत्तिनिर्देशः । एकत्वादकारस्येति ; एकैवाकारव्यक्तिः ; उदात्तादिभेदप्रतिभासस्तु व्यञ्जकध्वनिकृतः, खड्गतैलादर्शादिभेदे प्रतिबिम्बप्रतिभासभेदवत् । अकारस्य निदर्शनार्थत्वादिकारादीनामप्यैक्यं बोद्धव्यम् । अनुबन्धसंस्कर इति ; एकत्वे काण्ठादीनां भेदाभावात् गोदादौ ङीबादिः प्राप्नोति । किरिणेति ; "न गोश्वन्साववर्ण" इति प्रतिषेधादकारो नोदात्तः । घटेनेति ; एक एवाकारो द्विरुच्चार्यत इति द्व्यच्त्वाभावः । ठंस्तु बाहुकादिषु कृतार्थः । द्रव्यवदिति ; उपचारो व्यवहारः । यथैकेन घटेनोदकाहरणादिक्रियां युगपदनेको न करोति तथैकमकारं युगपदनेको नोच्चारयेदित्यर्थः ।

उ.—"अकः सवर्णे" इत्यादि त्यक्त्वा "अस्य च्वौ" इत्याद्युपादानस्य तात्पर्यमाह—अक इति । अनणुत्वादिति ; हेतुसामर्थ्यात् विशेषपरत्वनिश्चय इति भावः । "अकः सवर्णे" इत्यादिसंग्रहाय प्रवेश इति वक्तव्येऽनुवृत्तिनिर्देश इति विशेषोपादानमयुक्तम् ; अत आह—अक इतीति केचित् । तच्चिन्त्यम्, प्रदीपोक्तव्युत्पत्त्या अक इत्यादेरनुवृत्तिनिर्देशशब्दवाच्यत्वात् ।

लक्ष्ये प्रवृत्तिः ; लक्ष्यबोधनव्यापारः । ननूदात्तादीनां भेदकत्वादैक्यमयुक्तम् ; अत आह—उदात्तादीति । औपाधिकभेदप्रतिभासो नैक्यविरोधीत्यत्र दृष्टान्तमाह—खड्गेति । ननु "यस्येति च" इत्यत्रेकारस्य सवर्णग्राहकत्वं न स्यात् ; इत्यत आह—अकारस्येति । ननु ककारणकारयोर्भेदात् कथं सांकर्यमित्याशङ्क्य कार्यसांकर्यं विवक्षितमित्याशयेनाह—एकत्व इति । गोद इति कान्तस्योदाहरणम् ; तत्राण्कृतमुदाहरति—डीबादय इति । ननु प्रस्तुतत्वादाद्यत्वाच्चाकारः किमिति नोदाहृतः ? अत आह—न गोश्वन्निति । अवर्णान्तत्वात् "एकाचः" इति प्राप्ते प्रतिषेधादित्यर्थः । शब्दव्यवायादकारभेदमाशङ्क्याह—एक एवेति । उच्चारणस्य व्यवायो न वर्णस्येति भावः । वचनबलात् गौणं व्यचत्वं गृह्यते ; अत आह—ठंस्त्विति । बाहुकेति ; बाहुभ्यां तरतीत्यर्थे "नौद्व्यचष्ठन्" । अत्राकारोकारभेदान्मुख्यमेव व्यच्त्वम् । उपचारशब्दस्य पूजापरत्वशङ्कां निराह—व्यवहार इति । एकस्मिन्नपि घटेऽनेककर्तृकदर्शनस्पर्शनयौगपद्यदर्शनात् दृष्टान्तासिद्धिमाशङ्क्य कार्यशब्देन क्रियाविशेषो विवक्षित इति दृष्टान्तसिद्धिमुपपादयति—यथेति । "इममकारम्" इत्यत्रेदंशब्दवैयर्थ्यं निराह—एकमिति ।

वा.—विषयेण तु नानालिङ्गकरणात् सिद्धम् ।

भा.—यदयं विषये विषये नानालिङ्गमकारं करोति "कर्मण्यण्" आतोऽनुपसर्गे कः" इति, तेन ज्ञायते नानुबन्धसंकरोऽस्तीति । यदि हि स्यात् नानालिङ्गकरणमनर्थकं स्यात् । एकमेवायं सर्वगुणमुच्चारयेत् । नैतदस्ति ज्ञापकम् । इत्संज्ञाप्रक्लृप्त्यर्थमेतत् स्यात् । न ह्ययमनुबन्धैः शल्यकवच्छक्य उपचेतुम् । इत्संज्ञायां हि दोषः स्यात् । आद्यस्य हि द्वयोरित्संज्ञा स्यात् । कयोः ? आद्यन्तयोः । एवं तर्हि—विषयेण [तु] पुनर्लिङ्गकरणात् सिद्धम् । यदयं विषये विषये पुनर्लिङ्गमकारं करोति—"प्राग्दीव्यतोऽण्" "शिवादिभ्योऽण्" इति, तेन ज्ञायते—नानुबन्धसंकरोऽस्तीति । यदि हि स्यात् पुनर्लिङ्गकरणमनर्थकं स्यात् । अथवा पुनरस्तु 'विषयेण तु नानालिङ्गकरणात् सिद्धम्' इत्येव । ननु चोक्तम्—इत्संज्ञाप्रक्लृप्त्यर्थमेतत् स्यादिति । नैष दोषः । लोकत एतत् सिद्धम् । तद्यथा—लोके कश्चित् देवदत्तमाह 'इह मुण्डो भव, इह जटिलो भव, इह शिखी भव' इति । यल्लिङ्गो यत्रोच्यते तल्लिङ्गस्तत्रोपतिष्ठते । एवमयमकारो यल्लिङ्गो यत्रोच्यते तल्लिङ्गस्तत्रोपस्थास्यते । यदप्युच्यते 'एकाजनेकाज्ग्रहणेषु चानुपपत्तिः' इति,

**वा.—एकाजनेकाज्ग्रहणेषु चावृत्तिसंख्यानात् ।**

**भा.—एकाजनेकाज्ग्रहणेषु चावृत्तेः सङ्ख्यानादनेकाच्त्वं भविष्यति। तद्यथा—“ सप्तदश सामिधेन्यो भवन्ति ” इति “ त्रिः प्रथमामन्वाह त्रिरुत्तमाम् ” इत्यावृत्तितः सप्तदशत्वं भवति; एवमिहाप्यावृत्तितोऽनेकाच्त्वं भविष्यति। भवेदावृत्तितः कार्यं परिहृतम्। इह तु खलु ‘ किरिणा, गिरिणा ’ इत्येकाज्लक्षण-मन्तोदात्तत्वं प्राप्नोत्येव। एतदपि सिद्धम्। कथम्? लोकतः। तद्यथा—ऋषिसहस्रमेकां कपिलामेकैकशः सहस्रकृत्वो दत्त्वा तया सर्वे ते सहस्रदक्षिणाः संपन्नाः, एवमिहाप्यनेकाच्त्वं भविष्यति। यदप्युच्यते—द्रव्यवच्चोपचाराः प्राप्नुवन्तीति। भवेद् यदसंभवि कार्यं तन्नानेको युगपत् कुर्यात्। यत्तु खलु संभवि कार्यमनेकोऽपि तद्युगपत् करोति; तद्यथा घटस्य दर्शनं स्पर्शनं वा। संभवि चेदं कार्यमकारस्योच्चारणं नाम। अनेकोऽपि तद्युगपत् करिष्यति।**

प्र.—विषयेणेति; वार्तिककारेण करणत्वेन सामान्यरूपतया चाभेदेन विषयो निर्दिष्टः। भाष्यकारस्त्वधिकरणत्वं व्यक्तिभेदाद्वीप्सां च प्रतिपादयति—विषये विषय इति। सर्वगुणमिति; गुणा अनुबन्धाः, कार्यायाश्रितत्वात् उपकारकत्वात्। तत्र ‘ कर्मणि कण्टू ’ इति ब्रूयादित्यर्थः। शल्यकवदिति; शल्यकः प्राणिविशेष। स यथा कण्टकतुल्यैः पक्षैर्व्याप्यते, नैवं सर्वानुबन्धयुक्तोऽकारः शक्यो निर्देष्टुम् आद्यन्तयोरेवेत्संज्ञाविधानात् मध्यपातिनां श्रवणप्रसङ्गात्। इत्संज्ञैवायच्छते व्याम्रियत इत्येककर्तृकत्वात् आयम्येत्युक्तम्। एवं तर्हीति; विषयेणेत्येतदन्यथा व्याचष्टे नानाशब्दमपनीय पुनःशब्दं पठित्वा। यद्यनुबन्धसंस्करः स्यात् अकारमेव शिवादिभ्यो विदध्यात्। अथोच्येत—णित्कृतमेव यथा स्यात्, ञित्कृतं मा भूदिति नियमार्थमेतत् स्यात्; तन्न, नियमाद्विधेर्बलीयस्त्वात्। अथवेति; न ब्रूमः सर्वगुणमुच्चारयेदिति; किंतु-यथा लोके ‘ इह मुण्डो भव, इह नग्नो भव ’ इति यद्गुणको यत्रोच्यते तद्गुण एव तत्र भवति, एवमिहापि याभ्यः प्रकृतिभ्यो यदनुबन्धविशिष्टो विधीयते तासु तदनुबन्धनिमित्तमेव कार्यं संपादयति। आवृत्तिसंख्यानादिति; यथा

विकृतियागे त्रयोदश सामिधेन्यः प्रथमोत्तमयोस्त्रिरावृत्त्या सप्तदश संपद्यन्ते, तथा घटेन तरतीति द्व्यज्लक्षणष्ठन् भवति। ननु मुख्ये विषये कृतार्थत्वाद्वचनस्य गौणं द्व्यच्त्वं कथं कार्यस्य निमित्तम्? उच्यते—"गोद्व्यचः" इत्यत्राश्वशब्दप्रतिषेधाल्लिङ्गादावृत्तिभेदेनापि भेदाश्रयकार्यप्रवृत्तिः। भवेदिति; 'गिरिणा' इत्यादावावृत्तिभेदेऽपि मुख्यमेकाच्त्वं न निवर्तत इति भावः। एतदपीति; लोके पूर्वा संख्या संख्यान्तरेण मुख्येन गौणेन च बाध्यत इत्यर्थः। ऋषिसहस्रमिति; वित्तेन क्रीत्वा प्रत्येकं दत्वा सहस्रदक्षिणा ऋषयः संपन्ना इत्यर्थः। सहस्रमृषयः ऋषिसहस्रमिति कर्मधारये संपन्ना इत्यस्य साक्षादृषिभिः संबन्धः। षष्ठीसमासे तु सामर्थ्यलक्षणः संबन्धः, यथा ब्राह्मणशतं भोज्यतामिति भुजेर्ब्राह्मणैः। संभवि चेति; एकस्यैवाकारस्य युगपत् स्थानकरणनिष्पन्नध्वनिव्यङ्ग्यत्वात् सर्वैरुच्चारणं शक्यमित्यर्थः।

भाष्यस्य वार्तिकाननुगुणतामाशङ्क्य 'स्थाल्या पचति, स्थाल्यां पचति' इतिवद्विवक्षाभेदमात्रं न तात्पर्यभेद इत्याह—वार्तिककारेणेति। सामान्यरूपतयेत्यनेन वीप्सार्थे तात्पर्यमुक्तम्। तद्वचनार्थं भाष्ये वीप्सेति भावः। गुणशब्दस्य शुक्लादिपरत्वे प्रकृतानुपयोगादाह—गुणा अनुबन्धा इति। पारार्थ्यलक्षणगुणत्वमनुबन्धेष्वपि संभवतीत्याह—कार्यार्थमिति। नन्वकुण् अण्क् इति वोच्चारणे अनन्त्यत्वेनेत्संज्ञाया अभावप्रसङ्गात् सर्वगुणोच्चारणमशक्यम्; अत आह—कण्ट् इति। शल्यकैरिवेत्यन्वयशङ्कां वारयितुमाह—शल्यक इति; सर्वानुबन्धोच्चारणमशक्यमेवेति भावः। आयमनभवनयोर्भिन्नकर्तृकत्वात् क्त्वानुपपत्तिः; अत आह—इत्संज्ञैवेति। वार्तिकान्तरस्थशङ्कां वारयति—विषयेणेति। अकारमेवेति; एकत्र णितः सर्वत्र णित्त्वादित्यर्थः। ननु प्राग्दीव्यतोऽकारस्य णित्त्ववत् बिदादिषु ञित्वात्तत्कार्यस्य निवृत्तये शिवादिषु ञित्वमर्थवदिति शङ्कते—अथेति। नियमादिति; परिसंख्यायास्त्रिदोषत्वात् विधिरेवायम्। अतो ज्ञापकमेवासांकर्यस्य। ज्ञापकत्वाङ्गीकरे पूर्वोक्तदोषः, न तु लोकसिद्धन्यायपरत्व इत्याह—न ब्रूम इति। "अ सांप्रतिके" इति निरनुबन्धप्रत्यये असांकर्याय नजुदाहरणम्। ननु प्रकृतौ पाञ्चदश्यमेवास्ति; तदपि प्रथमोत्तमयोस्त्रिरावृत्त्या संपद्यत इति तद्विहाय साप्तदश्यं कुत उक्तम्? अत आह—यथेति। अनारभ्याधीतसाप्तदश्यस्यापि मित्रविन्दादिगतस्य प्रथमोत्तमाभ्यासेनैव पूरणादविशेषात्तदुदाहृतमिति भावः। बाह्वादौ मुख्ये संभवति गौणाग्रहणं शङ्कते—नन्विति। लिङ्गात् गौणग्रहणमित्याह—उच्यत इति। "गोद्व्यचोऽसंख्यापरिमाणाश्वादेर्यत्" इत्यत्राश्वशब्दप्रतिषेधो लिङ्गम्। नन्वावृत्त्याऽनेकाच्त्वादेकाज्लक्षणकार्याप्रवृत्तेर्भवेदित्ययुक्तम्; अत आह—गिरिणेत्यादाविति। ननु गौणसंख्यया मुख्यसंख्यानिवृत्तिः कथम्? अत आह—लोक इति। एकेन दत्तायाः पुनरन्येन दानायोगमाशङ्क्याह—वित्तेनेति। एकैकस्मै सहस्रवारं दत्त्वा सर्वे सहस्र-

दक्षिणाः संपन्ना इत्यर्थः। ऋषिसहस्रमित्यस्य संपन्ना इत्यनेन संबन्धं समासद्वयेऽप्याह—ऋषय इति। सामर्थ्येति—संख्याया दातृत्वासंभवात् संख्याविशिष्टदातृभिः संबन्ध इत्यर्थः; उच्चारणं चोपादानम्। एकेनोच्चारितेऽन्येनोपादनायोगमाशङ्क्याह—एकस्येति।

**वा.—आन्यभाव्यं तु कालशब्दव्यवायात्।**

**भा.—आन्यभाव्यं त्वकारस्य। कुतः? कालशब्दव्यवायात्; कालव्यवायात् शब्दव्यवायाच्च। कालव्यवायात् 'दण्ड अग्रम्'। शब्दव्यवायात् 'दण्डः'। न चैकस्यात्मनो व्यवायेन भवितव्यम्। भवति चेत् भवत्यान्यभाव्यमकारस्य।**

**वा.—युगपच्च देशपृथक्त्वदर्शनात्।**

**भा.—युगपच्च देशपृथक्त्वदर्शनान्मन्यामहे—आन्यभाव्यमकारस्येति। यदयं युगपद् देशपृथक्त्वेषूपलभ्यते—'अश्वः, अर्कः, अर्थः' इति। न ह्येको देवदत्तो युगपत् स्रुघ्ने च भवति मथुरायां च। यदि पुनरिमे वर्णाः—**

**वा.—शकुनिवत् स्युः।**

**भा.—तद्यथा शकुनय आशुगामित्वात् पुरस्तादुत्पतिताः पश्चाद् दृश्यन्ते, एवमयमकारो द इत्यत्र दृष्टो ण्ड इत्यत्र दृश्यते। नैवं शक्यम्। अनित्यत्वमेवं स्यात्। नित्याश्च शब्दाः। नित्येषु च शब्देषु कूटस्थैरविचालिभिर्वर्णैर्भवितव्यमनपायोपजनविकारिभिः। यदि चायं द इत्यत्र दृष्टो ण्ड इत्यत्र दृश्येत नायं कूटस्थः स्यात्। यदि पुनरिमे वर्णाः**

**वा.—आदित्यवत् स्युः।**

**भा.—तद्यथा एक आदित्योऽनेकाधिकरणस्थो युगपद् देशपृथक्त्वेषूपलभ्यते। विषम उपन्यासः—नैको द्रष्टा आदित्यमनेकाधिकरणस्थं युगपद् देशपृथक्त्वेषूपलभते; अकारं पुनरुपलभते। अकारमपि नोपलभते। किं कारणम्? श्रोत्रोपलब्धिर्बुद्धिनिर्ग्राह्यः प्रयोगेणाभिज्वलित आकाशदेशः शब्दः। एकं च पुनराकाशम्। आकाशदेशा अपि बहवः। यावता बहवः, तस्मादान्यभाव्यमकारस्य।**

प्र.—एवं परिहृतेष्वपि दोषेषु तत्र न्यायेनाकारस्य भेदं साधयति—आन्यभाव्यमिति ; अन्यस्य भावोऽन्यभावः। ततो ब्राह्मणादिषु स्वार्थे विधानार्थात् पाठात् स्वार्थे ष्यञ्। अथवा अन्यो भावोऽन्यद्वस्तु ; तस्य भाव इति भावे ष्यञ्। इह कालशब्दाभ्यां व्यवधानं भिन्नानां दृष्टम्। यथाऽसंहितायाम् अ इ उ इत्यादीनां कालव्यवायः। दृति-रित्यादौ शब्दव्यवायः, तत्र तकारेण ऋकारेकारयोर्व्यवधानात्। एकत्वे तु व्यवधानं न दृष्टम्। यथा अ इति केवलाकार उच्चार्यते। तस्मा-दुदात्तादिगुणभेदात् कालशब्दव्यवायाच्च नानात्वमकारस्य। प्रत्यभिज्ञानं चात्वादिसामान्यनिबन्धनम्। यद्यपि शब्दव्यवायेऽपि कालव्यवायोऽस्ति, तथापि कालव्यवाय एव द्विधा दर्शितः—शब्दशून्यः शब्दवांश्च। यदि पुनरिति ; कालशब्दाभ्यां व्यञ्जकानामेव ध्वनीनां व्यवायः, न व्यङ्ग्यस्येति व्यक्तिस्फोटवादिनो भावः। यथा शकुनिः पङ्क्तेरादौ स्थित आशुसंचारात्तदन्ते भवति, एवं व्यञ्जकध्वनिसंनिधानासंनिधानाभ्यामकारस्यो-पलम्भानुपलम्भावित्यर्थः। जातिस्फोटवादी व्यक्तिस्फोटवादिनं पर्यनु-युङ्क्ते—अनित्यत्वमिति। भवता जातिस्तावन्नाभ्युपगम्यते, व्यक्तेरेवैकत्व-नित्यत्वप्रतिज्ञानात्। तच्चैकत्वं नित्यत्वं च नोपपद्यते, दण्ड इत्युदात्तानु-दात्तस्वरादिभेदेन भिन्नत्वात्। न ह्येकस्यैवोदात्तत्वपरित्यागेनानुदात्तत्वं युक्तम्, रूपान्तरपरिग्रहादनित्यत्वप्रसङ्गात्। तस्माद्भिन्ना एवानित्या एवाकाराः। प्रत्यभिज्ञा त्वाकृतिनिबन्धनेति जातिस्फोटपक्षोऽत्र व्यवस्थितः। व्यक्तिस्फोटवाद्याह—अकारमपीति। श्रोत्रोपलब्धिरिति ; श्रोत्रोपलब्ध्या आकाशदेशत्वं शब्दस्य प्रतिपादयति। आकाशप्रदेशविशेषस्य श्रोत्रत्वादि-न्द्रियाणामसंबद्धविषयाग्रहणात् श्रोत्रस्य निष्क्रियत्वात् गमनाभावादाकाश देशत्वं शब्दस्यावश्यमभ्युपेयम्। बुद्धिनिर्ग्राह्य इति ; पूर्वपूर्वध्वन्युत्पादि-ताभिव्यक्तिजनितसंस्कारपरम्पराप्राप्तपरिपाकान्त्यबुद्धिनिर्ग्राह्य इत्यर्थः। प्रयोगे-णेति ; प्रयुज्यत इति प्रयोगो ध्वनिः, तेनाभिव्यक्तः। देशभेदेन तु प्रतिभासो भिन्नदेशावस्थितपुरुषोदीरिताभिव्यञ्जकध्वनिकृतः। भेदवाद्याह—आकाशदेश इति ; यथा पृथिव्या एकत्वेऽपि स्रुघ्नमधुरादिदेशव्यवहारः, एवमाकाशस्यापि संयोगिघटादिपदार्थावच्छेदेन भेदव्यवहार इत्यर्थः।

उ.—नन्वेकत्वे प्रसक्तदोषनिरासस्यैव युक्तत्वात् कल्पान्तरानुत्थानमित्याशङ्क्य शास्त्रविरोधाभावेऽपि न्यायविरोधस्यापरिहारात् तदुत्थानमित्याह—एवमिति। अन्यभावशब्दस्य गुणवचनत्वाभावात् "गुणवचनब्राह्मणादिभ्यः" इत्यनेनाप्राप्तस्य प्रयोगादप्रामाण्यमिति भट्टाचार्योक्तं परिहर्तुमाह—अन्यस्येति। ब्राह्मणादिष्विति; "एकभावद्विभावत्रिभावान्यभाव" इति तत्र पाठात्। ननु भावस्य भावान्तराभावात् कथं ष्यञ्? तत्राह—स्वार्थेति। भावेऽपि तत्संभवादाह—अथवेति। हेतोर्व्यावृत्त्यसिद्धिं परिहर्तुमन्वयव्यतिरेकाभ्यां तामाह—इहेति। वार्तिकोक्तहेतोरुपलक्षणत्वमङ्गीकृत्य हेत्वन्तरेणोपसंहरति—तस्मादिति। 'स एवायमकारः' इति प्रत्यभिज्ञाविरोधं निराह—प्रत्यभिज्ञानं चेति। शब्दपदवैयर्थ्यमाशङ्क्य परिहरति—यद्यपीति। यदीत्यादेः प्रकृतानुमानपरत्वप्रतीत्याऽसंगतिमाशङ्क्यासिद्धिरनूद्यत इत्याह—कालशब्दाभ्यामिति। दृष्टान्तदार्ष्टान्तिकयोर्गतिमत्त्वतदभावाभ्यां वैषम्यात्तद्भानानुपपत्तिमाशङ्क्योपपादयति—यथेति। स्थितं; ज्ञातम्। भवति; ज्ञायते। तथाच उपलब्ध्यनुपलब्धी तयोः समे इति दृष्टान्तत्वोपपत्तिरित्यर्थः। व्यञ्जकेति; दण्ड इत्यत्राकारव्यञ्जकध्वनेर्णकारडकारव्यञ्जकध्वनिकाले अभावान्नोपलब्धिः; अन्त्ये च तत्सत्त्वादुपलब्धिः। अत उपलब्धेरेव कालव्यवायो न तु वर्णस्येति हेतोरसिद्धिरित्यर्थः। स्फुटयते व्यज्यते ध्वनिभिरिति जातिव्यक्त्योः स्फोटत्वम्। पदस्फोटवाक्यस्फोटौ ध्वनिव्यङ्ग्यौ। अकारव्यक्तिभेदमत्वजातिं चाङ्गीकुर्वाणो जातिस्फोटवादी। अकारव्यक्तिरेकैवेति वर्णव्यक्तिस्फोटवादी। ननु यथा जातिपक्षे व्यक्तिगतोदात्तादिकं जातावुपचर्यते, तथा जातिपक्षे नित्यत्वैकत्वयोर्व्यक्तावुपचारोऽस्तु; जातिव्यक्त्योरत्यन्तभेदाभावात्; अत आह—भवतेति। ननु नित्यैकस्यापि व्यञ्जकभेदादनेकत्वेनोपलब्धिसंभवान्नानित्यत्वादिप्रसङ्गः; अत आह—दण्ड इति। प्रत्ययस्वरेण द्वितीय उदात्तः "अनुदात्तं पदमेकवर्जम्" इत्याद्योऽनुदात्तः। स्वरितस्य वायव्यमित्याद्युदाहरणम्। ननूदात्तादीनां ध्वनिधर्मत्वान्न भेदकत्वम्? अत आह—न हीति। 'उदात्तोऽकारः' इत्यबाधितप्रतीत्या उदात्तादीनां वर्णधर्मत्वात् भेद इति भावः। रूपान्तरेति; मृत्पिण्डस्य घटशरावादिरूपान्तरयुक्तस्यानित्यत्वदर्शनादित्यर्थः। ननु य उदात्तोकारः स एवानुदात्त इति प्रत्यभिज्ञाबलादुदात्तादीनां ध्वनिधर्मत्वं कल्प्यताम्; अत आह—प्रत्यभिज्ञास्विति। अत्र; प्रत्याहारसूत्रादिषु। भाष्ये देशपृथक्त्वेषु; गौडोत्कलान्ध्रादिदेशभेदेषु। भाष्ये अकारं पुनरुपलभत इति; एक एव प्रागुदग्देशादिस्थमकारमुपलभत इत्यर्थः। शब्दस्याकाशस्थत्वादाकाशस्य चैकत्वान्नानेकदेशस्थत्वमिति शङ्कते भाष्ये—अकारमपीति। श्रोत्रोपलब्धीति विशेषणस्य प्रयोजनमाह—श्रोत्रोपलब्ध्येति। ननु दिशः श्रोत्रत्वात् कथं तदुपलब्धेराकाशदेशत्वसिद्धिः? अत आह—आकाशेति। रूपादिषु पञ्चसु मध्ये यदिन्द्रियं यं गुणं गृह्णाति तदिन्द्रियं तद्गुणयुक्तमिति व्याप्तेः शब्दगुणकं श्रोत्रमाकाशमेवेत्यर्थः। यद्वा बाह्येन्द्रियाणां भौतिकत्वनियमेन श्रोत्रस्यापि भौतिकत्वे भूतान्तरात्मकत्वे मानाभावादाकाशमेव श्रोत्रमित्यर्थः। आकाशस्य श्रोत्रत्वे तस्य विभुत्वेन काशीस्थशब्दग्रहणप्रसङ्गनिरासाय—प्रदेशविशेषस्येयुक्तम्। कर्णशष्कुल्यवच्छिन्नं नभः श्रोत्रमित्यर्थः। ननु घटगतरूपस्य तैजसचक्षुर्ग्राह्यत्ववत् अनाकाशगतस्यापि शब्दस्याकाशात्मकश्रोत्रग्राह्यत्वं किं न स्यादित्याशङ्क्य किमन्यग

शब्दमसंबद्धमेव श्रोत्रं गृह्णीयात् ? संबद्धं वा ? नाद्य इत्याह—इन्द्रियाणामिति। द्वितीये किं श्रोत्रस्य शब्ददेशगमनात् संबन्धः ? शब्दस्य श्रोत्रदेशगमनाद्वा ? नाद्य इत्याह—श्रोत्रस्येति। अत एव न द्वितीय इति भावः। आकाशादिदेशत्वमिति; तरङ्गादिन्यायेन कर्णस्थाकाशे उत्पन्नः शब्दः श्रोत्रेण गृह्यत इति श्रोत्रग्राह्यत्वेनाकाशदेशत्वसिद्धिरित्यर्थः। श्रोत्रोपलब्ध्यैव बुद्धिग्राह्यत्वसिध्द्या पौनरुक्त्यमाशङ्क्याह—पूर्वपूर्वेति। सर्वस्यापि बुद्धिग्राह्यत्वात् प्रकर्षगतिरिह विज्ञायते। तेन ध्वनिव्यावृत्त्यर्थमिदं विशेषणम्। पूर्वपूर्वैर्ध्वनिभिरुत्पादिता स्फोटस्य या अभिव्यक्तिस्तत्संस्कारपरम्पराप्राप्तः परिपाकः फलोन्मुख्यं यया सा अन्त्यबुद्धिस्तया ग्राह्य इति विग्रहः। ध्वनीनामुच्चारणजन्यतया तन्निमित्तस्फोटबुद्धिर्न सार्वकालिकीति प्रयोगेति विशेषणम्। तद्व्याचष्टे—प्रयुज्यत इति। नन्वेकदेशत्वे 'देवालयेऽयं शब्दः' 'राजमन्दिरेऽयं शब्दः' इति कथं देशभेदप्रतीतिः ? अत आह—देशभेदेन त्विति। भेदवादी; जातिस्फोटवादीति यावत्। निरवयवस्याकाशस्य कथं देशभेदः ? अत आह—यथेति। नन्वाकाशदेशानां भिन्नत्वेऽपि कर्णशष्कुल्यवच्छिन्नदेश एव शब्दस्योपलम्भात् युगपद्देशपृथक्त्वासिद्धेस्तस्मादित्युपसंहारो न युक्त इत्यत आह—एवमिति। कालव्यवायेनोदात्तादिभेदेन च भेदस्यावश्यकत्वात् व्यक्तिस्फोटपक्षो दुष्ट इत्यर्थः।

वा.—आकृतिग्रहणात् सिद्धम्।

भा.—अवर्णाकृतिरुपदिष्टा सर्वमवर्णकुलं ग्रहीष्यति। तथेवर्णाकृतिः। तथोवर्णाकृतिः।

वा.—तद्वच्च तपरकरणम्।

भा.—एवं च कृत्वा तपराः क्रियन्ते आकृतिग्रहणेनातिप्रसक्तमिति। ननु च सवर्णग्रहणेनातिप्रसक्तमिति कृत्वा तपराः क्रियेरन्। प्रत्याख्यायते तत्—"सवर्णेऽण्ग्रहणमपरिभाष्यमाकृतिग्रहणादनन्यत्वाच्च" इति।

वा.—हल्ग्रहणेषु च।

भा.—किम् ? आकृतिग्रहणात् सिद्धमित्येव। "झलो झलि" अवात्ताम्, अवात्तम्, अवात्त। यत्रैतन्नास्ति—अण् सवर्णान् गृह्णातीति।

वा.—रूपसामान्याद्वा।

भा.—रूपसामान्याद्वा सिद्धमेतत्। तद्यथा—'तानेव शाटकानाच्छादयामः, ये मथुरायाम्; तानेव शालीन् भुञ्ज्महे, ये

**मगधेषु; तदेवेदं भवतः कार्षापणं, यन्मथुरायां गृहीतम्'। अन्यस्मिंश्चान्यस्मिन् रूपसामान्यात् तदेवेदमिति भवति। एवमिहापि रूपसामान्यात् सिद्धम्।**

प्र.—एवं व्यक्तिस्फोटपक्षे निराकृते जातिस्फोटपक्ष एवाश्रीयत—आकृतिग्रहणादिति। अकारजातिः सर्वप्रदेशेषु निर्दिश्यते। नान्तरीयकस्तु व्यक्तिनिर्देश। तत्र प्रत्याहारेऽकारजातेर्निर्देशात् तस्याश्च विवृतत्वप्रतिज्ञानात् शास्त्रान्ते तस्या एव प्रत्यापत्तिविधानम्। तदेवं जातिनिर्देशादनुवृत्तिनिर्देशस्थेनाकारेण ग्रहणमाकारस्य सिद्धम्। "अष्टन आ विभक्तौ" इत्यत्र सत्यपि जातिनिर्देशे दीर्घोच्चारणसामर्थ्यात् ह्रस्वस्य ग्रहणं न भवति। अन्यथा ह्रस्वमेवोच्चारयेत्। "प्लुतश्च विषये स्मृतः" इति न्यायात् प्लुतस्याग्रहणम्। तद्वच्चेति; स आकृतिपक्षो यत्रास्ति तत् तद्वत्। अथवा वत्यन्तमेतत्; तद्वत्। तत्र न्यायेनाकृतिपक्षस्य स्थापितत्वात् तपरेष्वपि स एव पक्षः स्थित इत्यर्थः। हल्ग्रहणेषु चेति; अवश्याश्रयणीयतामाकृतिपक्षस्य दर्शयति। व्यक्तिपक्षे ह्येकस्यैव तकारस्यानुकरणं "खफछठ" इत्यत्र त इति द्वयोस्तकारयोर्झल्त्वं न स्यात्; अपित्वेकस्यैवेत्यवात्तामित्यत्र सिज्लोपो न स्यात्; अभित्था इत्यादावेव स्यात्। रूपसामान्यादिति; व्यक्तिनिर्देशेऽपि भेदापरामर्शेन लोकवदभेदव्यवहारोऽस्तीति सिद्धमिष्टम्। व्यक्तिव्यतिरिक्तं सामान्यं भवतु, मा वा भूत्; सर्वथा लोक इव शास्त्रे व्यवहार इत्यर्थः।

उ.—सर्वप्रदेशेषु; "अस्य च्वौ" इत्यादिषु। तर्हि व्यक्तिविशेषनिर्देशो व्यर्थः; अत आह—नान्तरीयक इति। अत्वमित्यादिजातिमात्रनिर्देशः। स भवन्नपि गौरवात् त्यक्त इति भावः। ननु जातेर्विवृतत्वासंभवादन्ते प्रत्यापत्तिवचनमयुक्तम्; अत आह—तत्रेति; जातिनिर्देशे सतीत्यर्थः। व्यक्तिद्वारा जातावेव तत्प्रतिज्ञानमिति भावः। जातिनिर्देशेऽपीष्टसिद्धिमाह—तदेवमिति। अनुवृत्तीति; "अकः सवर्णे" इत्यादिनिर्देशेनेत्यर्थः। सर्वत्र जातिनिर्देशे दीर्घोच्चारणेऽपि ह्रस्वप्लुतयोर्ग्रहणं वारयति—अष्टन इति। ह्रस्वमेवेति; प्रयत्नलाघवादित्यर्थः। विषये; दूराद्धूतादौ। वतिपक्षे प्रकृतानुपयोगादाह—स इति। आकृतिपक्षाश्रयणेऽपि तपरत्वं क्रियत इति वार्तिकार्थः। तत्र प्रत्याहारादौ सर्वत्र जातिग्रहणस्योक्तत्वात् हल्ग्रहणेषु चेत्यधिकमत आह—अवश्येति। व्यक्तिपक्षेण निर्वाहमाह—व्यक्तीति। इत्यत्र

यस्तकारः स एकस्यैवानुकरणमित्यन्वयः। अवात्तामिति; वसेर्लुङि तसस्तामिच्लेः सिचि "सः स्यार्धधातुके" इति सस्य तत्वे "वदव्रज" इति वृद्धौ "झलो झलि" इति सिज्लोपे च रूपम्। एवमवात्तमित्यत्र तमि रूपम्। वचनसामर्थ्यात् झल्सदृशे भविष्यति; अत आह— अभित्था इति। भिदेर्लुङि थासि रूपम्। तत्र दकारथकारयोर्द्वयोरपि प्रत्याहारस्थत्वात् झल्त्वमस्तीति भावः। रूपसामान्याद्वेत्यनेन व्यक्तिपक्षस्थापनमित्याह—व्यक्तीति। रूपसामान्यशब्देन भेदतिरोधायकसादृश्यं विवक्षितमिति भावः। ननु जातिपक्षे भेदो न ग्राह्य इति स एव सम्यक्; अत आह—व्यक्तिव्यतिरिक्तेति। सामान्यानङ्गीकारपक्षे इदं समाधानम्। तदङ्गीकारेऽपि तदभेदव्यवहारसंभवात् व्यक्तिपक्षो निर्दुष्ट इत्यर्थः। वस्तुतो जातेः संवृतत्वविवृतत्वादेरभावात् प्रत्यापत्तिरयुक्ता स्यात्। कथंचित् व्यक्तिद्वारा तत्र तत्संभवेऽपि स्थूलसूक्ष्मघटेषु घटत्ववत् संवृतविवृताकारेष्वत्वजातिसत्त्वेन तन्निर्देशेन सर्वावर्णव्यक्तिषु कार्यसिद्धेरत्वजातौ विवृतत्वप्रतिज्ञाप्रत्यापत्त्योरनुपयोगात् व्यक्तिपक्ष एवात्राभिमतः। पूर्वं व्यक्त्यैक्ये दोषाः परिहृताः। इदानीं नानात्वेऽपि तत्परिहारः कृत इति नवीनाः।

## सू.—ऋऌक् ॥ २ ॥

भा.—अथ ऌकारोपदेशः किमर्थः? किं विशेषेण ऌकारोपदेशश्चोद्यते, न पुनरन्येषामपि वर्णानामुपदेशश्चोद्यते? यदि किंचिदन्येषामपि वर्णानामुपदेशे प्रयोजनमस्ति ऌकारोपदेशस्यापि तद्भवितुमर्हति। को वा विशेषः? अयमस्ति विशेषः—अस्य हि ऌकारस्याल्पीयांश्चैव प्रयोगविषयः। यश्चापि प्रयोगविषयः सोऽपि कॢपिस्थस्यैव। कृपेश्च लत्वमसिद्धम्। तस्यासिद्धत्वादृकारस्यैवाच्कार्याणि भविष्यन्ति। नार्थ ऌकारोपदेशेन। अत उत्तरं पठति—

वा.—ऌकारोपदेशो यदृच्छाशक्तिजानुकरणप्लुत्याद्यर्थः।

भा.—ऌकारोपदेशः क्रियते यदृच्छाशब्दार्थोऽशक्तिजानुकरणार्थः प्लुत्याद्यर्थश्च। यदृच्छाशब्दार्थस्तावत्—यदृच्छया कश्चिद् ऌतको नाम। तस्मिन्नच्कार्याणि यथा स्युः—दध्य्ऌतकाय देहि; मध्व्ऌतकाय देहि; उदङ्ङ्ऌतकोऽगमत्; प्रत्यङ्ङ्ऌतकोऽगमत्। चतुष्टयी शब्दानां प्रवृत्तिः—जातिशब्दा गुणशब्दाः क्रियाशब्दा यदृच्छाशब्दाश्चतुर्थाः। अशक्तिजानुकरणार्थः—

**अशक्त्या कयाचिद् ब्राह्मण्या ऋतक इति प्रयोक्तव्ये ऌतक इति प्रयुक्तम्। तस्यानुकरणं ब्राह्मण्य् ऌतक इत्याह, कुमार्य् ऌतक इत्याहेति। प्लुत्याद्यर्थश्च। के पुनः प्लुत्यादयः? प्लुति-द्विर्वचनस्वरिताः। क्ऌ३प्तशिखः, क्ऌप्तः, प्रक्ऌप्तः। प्लुत्यादिषु कार्येषु कृपेर्लत्वं सिद्धम्। तस्य सिद्धत्वादच्कार्याणि न सिध्यन्ति। तस्मात् ऌकारोपदेशः क्रियते।**

प्र.—अल्पीयानिति; ऋकारापेक्षः प्रकर्षः। ऋकारस्याल्पः प्रयोगः। ततोऽप्यस्याल्पतर इत्यर्थः। अल्पप्रयोगस्यापि कार्यार्थ उपदेशः कर्तव्य इत्याशङ्क्याह—यश्चापीति। तत्र ऋकारावस्थाया-मेवोदात्तादिषु कृतेषु "स्थानेऽन्तरतमः" इति स्थानिसदृश ऌकारो भविष्यति। यदृच्छेति; अर्थगतं प्रवृत्तिनिमित्तमनपेक्ष्य यः शब्दः प्रयोक्त्रभि-प्रायेणैव प्रवर्तते स यदृच्छाशब्दो डित्थादिः। "ऋकारऌकारयोः सवर्णविधिः" इत्यस्य वार्तिककारवाक्यत्वात् सूत्रकारेणानाश्रितत्वादत्र ऌकारोपदेशः कृतः। अर्थवत्सूत्रारम्भाच्चाव्युत्पन्ना यदृच्छाशब्दाः सन्तीत्य-वगम्यते। गाव्यादीनां तु गवादिभिर्निर्वर्तितत्वादसाधुत्वम्। ऋतकशब्द-स्त्वर्थाश्रयेणैव विनियुक्त इति ऌतकशब्दस्यानिवर्तकः। अशक्तिजेति; अशक्तिजानुकरणस्य जातिशब्दत्वमिच्छन्ति, यस्मादनुक्रियमाणे शब्दे या जातिः समवेता तत्संबद्धमनुकार्यमनुकरणं प्रत्याययति।

उ.—अकारादीनां प्रयोगस्याल्पविषयत्वाभावात् प्रकर्षप्रत्ययानुपपत्तिमाशङ्क्याह—ऋकारापेक्ष इति। ततोऽप्यस्य इत्यनन्तरम् 'अल्पइति' इति शेषः; ततोऽल्पतर इति युक्तमित्याह—अल्पतर इति। प्रयुज्यत इति प्रयोगो धात्वादिः; ऌकारस्य विषय इत्यर्थः। अल्पतर-विषयत्वेनेतरवर्णाद्विशेषसिद्धेः पुनर्विशेषकथनवैयर्थ्यं परिहरन्नाह—अल्पेति। बहुव्रीहिरयम्। भाष्ये यश्चापीति; प्रयोगश्चासौ विषयश्च, ऌकारस्येति शेषः। कानि अच्कार्याणि? तानि कथं ऌकारे भविष्यन्तीत्यत आह— तत्रेति; ऌकार इत्यर्थः। यदृच्छापरपर्यायाभिप्राय-मन्तरेण जात्यादिशब्दस्यापि प्रयोगाभावात् कथं ततोऽस्य भेद इत्यत आह—अर्थगतमिति। संज्ञाशब्देषु संज्ञैव प्रवृत्तिनिमित्तं, 'देवदत्तः' इत्युक्ते 'देवदत्तसंज्ञकः' इति प्रतीतेः। तथा-चार्थे तत्स्वरूपनिमित्तको यदृच्छाशब्द इत्यर्थः। ननु ऋकारऌरयोः सावर्ण्यादृकारस्योक्तान्यच्-कार्याणि ऌकारस्यापि भविष्यन्त्येवेति यदृच्छाशब्दाद्यर्थं ऌकारोपदेशो व्यर्थ इत्याशङ्क्याह—ऋकारऌकारयोरिति। ननु सर्वेषां शब्दानां धातुजत्वात् संज्ञाशब्दानामपि क्रियाशब्दत्वात् न

सन्ति यदृच्छाशब्दा इत्यत आह—अर्थवदिति। अन्यथा कृदन्तत्वेनैव प्रातिपदिकसंज्ञासिद्धेरर्थवत्सूत्रं व्यर्थं स्यादित्यर्थः। डित्थादिवत् गाव्यादीनामपि शास्त्रकार्यं स्यादित्यत आह—गाव्यादीनां त्विति; तेषामेकशब्दत्वेन "अन्यायश्चानेकशब्दत्वम्" इति न्यायेन साधुतया शास्त्रविषयगवादिभिर्निवर्तितत्वान्न शास्त्रं तत्र प्रवर्तत इत्यर्थः। ऋतकशब्दोऽर्थगतप्रवृत्तिनिमित्तकः स्वरूपप्रवृत्तिनिमित्तकम् ऋतकशब्दं न निवर्तयतीत्याह—ऋतकशब्दस्त्विति। पञ्चमीं शब्दप्रवृत्तिं निरसितुमाह—अशक्तिजेति। तत्र हेतुः—यस्मादिति। अनुकार्यं कर्म। अनुकरणं कर्तृ। अनुकार्यशब्दनिष्ठजातिरेवानुकरणस्य प्रवृत्तिनिमित्तमित्यर्थः। भाष्ये उदङ्ऌतक इत्यत्र ऌकारस्याप्यच्त्वात् ङमुट् प्रयोजनम्। भाष्ये प्रक्ऌप्त इति; अत्र "गतिरनन्तरः" इति प्रकृतिस्वरेण प्रकार उदात्तः; ततः परस्य ऌकारस्याच्त्वात् स्वरितत्वसिद्धिः। भाष्ये क्ऌप्त इति; ऌकारस्याच्त्वात् पकारस्य "अनचि च" इति द्वित्वसिद्धिः।

**भा.—नैतानि सन्ति प्रयोजनानि।**

**वा.—न्याय्यभावात् कल्पनं संज्ञादिषु।**

**भा.—न्याय्यस्य ऋतकशब्दस्य भावात् कल्पनं संज्ञादिषु साधु मन्यन्ते—ऋतक एवासौ न ऌतक इति। अपर आह—न्याय्य ऋतकशब्दः शास्त्रान्वितोऽस्ति। स कल्पयितव्यः साधुः संज्ञादिषु—ऋतक एवासौ न ऌतकः। अयं तर्हि यदृच्छाशब्दोऽपरिहार्यः—ऌफिडः, ऌफिड्डश्चेति। एषोऽपि ऋफिड्डः ऋफिडश्च। कथम्? अर्तिप्रवृत्तिश्चैव हि लोके लक्ष्यते। फिडफिड्डावौणादिकौ प्रत्ययौ। त्रयी च शब्दानां प्रवृत्तिः जातिशब्दा गुणशब्दाः क्रियाशब्दा इति। न सन्ति यदृच्छाशब्दाः। अन्यथा कृत्वा प्रयोजनमुक्तम्; अन्यथा कृत्वा परिहारः। सन्ति यदृच्छाशब्दा इति कृत्वा प्रयोजनमुक्तम्; न सन्तीति परिहारः। समाने चार्थे शास्त्रान्वितोऽशास्त्रान्वितस्य निवर्तको भवति; तद्यथा देवदत्तशब्दो देवदिण्णशब्दं निवर्तयति, न गाव्यादीन्। नैष दोषः; पक्षान्तरैरपि परिहारा भवन्ति।**

प्र.—न्याय्यभावादिति; ऋतकशब्दो न्याय्यः, "कृदन्तं नाम कुर्यात्" इति स्मृतावुक्तत्वात्। ऋतिः सौत्रो धातुः; तत औणादिकः "क्वुन् शिल्पिसंज्ञयोरपूर्वस्यापि" इति क्वुन् प्रत्ययः। संज्ञादिष्विति; आदि-

शब्देनैतत् दर्शयति—जातिगुणक्रियानिमित्ता अपि शास्त्रान्विता एव प्रयोक्तव्या इति। सर्वशब्दव्युत्पत्तिपक्षे किमर्थवत्सूत्रेणेति चेत्, शिष्टप्रयुक्तानामेवाव्युत्पत्तिपक्षोऽस्तीति ज्ञापनायार्थवत्सूत्रोपादानम्; अनुकरणशब्दानामव्युत्पन्नत्वात् तदर्थं च। अपर आहेति; पूर्वमुक्तम्—ऋतक एव न्याय्यत्वात् प्रयोक्तव्यो न तु ऌतकशब्द इति; इदानीं तु ऋतकशब्दस्यैवायमपभ्रंशोऽशक्तिजत्वात् ऌतक इत्युच्यते। अयं तर्हीति; ऋतकशब्दोऽन्वाख्यातत्वाद्भवतु ऌतकशब्दस्य निवर्तकः; ऋफिड-ऋफिड्ड इत्येतौ त्वनन्वाख्याताविति कथम् ऌफिड ऌफिड्ड इत्येतयोर्निवर्तकौ स्यातामिति भावः। एषोऽपीति; "उणादयो बहुलम्" इत्येवान्वाख्याताविति भावः। अर्तिप्रवृत्तिरिति; अर्तेः प्रकृतित्वेन प्रवृत्तिरित्यर्थः। न सन्तीति; असत्त्वेऽपि यदा नाम क्रियते, तदा प्रशस्यरूपा क्रिया गुणो वाऽध्यारोप्यत इति भावः। अन्यथा कृत्वेति अव्युत्पत्तिपक्षाश्रयेणाचार्येणोपदिष्ट ऌकारः। वार्तिककारस्तु व्युत्पत्तिपक्षाश्रयेण प्रत्याचष्टे। समाने चेति; इह च भिन्नार्थत्वम्। ऌतकशब्दो हि यदा संज्ञात्वेन विनियुज्यते क्वचित्पिण्डे, तदा तच्छब्दरूपाध्यासः। ऋतके तु विपर्ययः। भिन्नस्वरूपौ चेतौ शब्दाविति भावः। पक्षान्तरैरपीति; यथा द्रव्यपक्षे "सरूपाणाम्" इत्यस्यारम्भः; जातिपक्षे तु प्रत्याख्यानम्, एवमस्यापीत्यर्थः। अव्युत्पन्नसंज्ञाशब्दपक्षेऽपि पारम्पर्यागताः शिष्टप्रयुक्ता एव संज्ञाः कर्तव्याः।

उ.—ऋतकशब्दस्य संज्ञाशब्दत्वं न्याय्यमित्यत्र हेतुमाह—कृदन्तमिति। ननूभयोरप्यविदितप्रकृतिप्रत्ययत्वात् कथमृतकशब्दः कृदन्तः? अत आह—ऋतिरिति। अनुकरणशब्दस्य जातिशब्दत्वेन न्याय्यत्वम्। वार्तिकस्थादिशब्दवैयर्थ्यं निराह—आदिशब्देनेति। संज्ञाशब्दानामपि कृदन्तत्वे अर्थवत्सूत्रवैयर्थ्यं शङ्कते—सर्वशब्देति। विद्यमानापि व्युत्पत्तिः क्वचिन्नाङ्गीक्रियत इति अर्थवत्सूत्रमित्यर्थः, "अतः कृकमिकंस" इत्यत्र कमिग्रहणेनैव सिद्धे कंसग्रहणेनास्यार्थस्य ज्ञापितत्वात् असाधारणं प्रयोजनमाह—अनुकरणेति। "अनुकरणं चानितिपरम्" इत्यादिदर्शनात् तस्य साधुत्वमिष्टमेवेति भावः। व्याख्याद्वयस्यास्पष्टं भेदं द्वितीयव्याख्याने साधुशब्दसूचितं विशदयति—पूर्वमिति। पूर्वत्र ऌतकशब्दस्य संज्ञात्वाभावात् प्रयोग एव न संभवतीत्यलक्ष्यत्वमुक्तम्। द्वितीये प्रयुक्तस्यापभ्रंशत्वादलक्ष्यत्वमिति भेद इत्यर्थः। ननु ऌफिडादेरपि ऋफिडादिना निवर्त्यत्वेन ऋतकवत्परिहारसाम्यात् शङ्कानुत्थानम्; अत आह—ऋतकशब्द

इति। शङ्काशयं निराह—उणादय इति। फिडफिड्ड्योरुणादिष्वदर्शनात् "उणादयः" इत्य- नेनान्वाख्यानं न संभवतीत्याशङ्क्य "प्रत्ययतः प्रकृतेश्च तदूह्यम्" इति वचनात् प्रकृतिदर्शनेन प्रत्ययकल्पनं युक्तमित्येतत्परं भाष्यमित्याह—अर्तिरिति। नन्वनादिदेवदत्तादिसंज्ञानां "क्तिच्क्तौ च संज्ञायाम्" इत्यादिनाऽन्वाख्यानात् गुणक्रियान्तर्भावो युक्तः; इदानींतननाम्नां तदन्तर्भावे मानाभावात् कथं न सन्तीत्युक्तम्? अत आह—अद्यत्व इति। 'देवदत्तमानय' इत्युक्ते तद्गतगुणक्रियाविशेषप्रतीतेरद्यतनानामपि गुणक्रियान्तर्भावो युक्त इत्यर्थः। वस्तुनो द्वैरूप्या- संभवात् पाणिनिकात्यायनयोरन्यतरस्याप्रामाणिकत्वमाशङ्क्याह—अव्युत्पत्तीति; यदृच्छाशब्दाना- मित्यादिः। पक्षशब्देन पक्षद्वयमप्युभयसंमतमिति सूचितम्। न्ययय्यभावादिति वार्तिकस्य समाने चार्थे इत्यनेन दोषान्तरमुक्तम्; तत् स्पष्टीकर्तुं वाक्यशेषमध्याहरति—इहेति। भाष्ये गाव्यादीनित्यनन्तरमयं शेषो द्रष्टव्य इत्यर्थः। यद्वा आर्थिकं भाष्याभिप्रेतमाह—इहेति। न गाव्यादीनित्यनेनायमभिप्रायो गम्यत इति भावः। ऋतकऌतकशब्दयोस्तदेवाह— ऌतकशब्दो हीति। विपर्ययः; अर्थगतप्रवृत्तिनिमित्तकत्वं वाच्यैक्येऽपि प्रवृत्तिनिमित्त- भेदादर्थभेदः। उभयोः संज्ञाशब्दत्वेऽपि प्रवृत्तिनिमित्तसंज्ञास्वरूपभेदाद्भिन्नार्थत्वेन निवर्त्य- निवर्तकभावानुपपत्तिरित्यभिप्रायान्तरमाह—भिन्नस्वरूपादिति। एतौ; ऋतकऌतकशब्दौ। भाष्यं दृष्टान्तोक्तिपूर्वकं योजयति—यथेति। अपिशब्दसूचितं चतुष्टयपक्षेऽपि परिहारमाह— अव्युत्पन्नेति। शिष्टप्रयुक्तसंज्ञानिवृत्तिरिति द्वितीयदोषोऽपि परिहृत इति ज्ञेयम्।

**वा.—अनुकरणं शिष्टाशिष्टाप्रतिषिद्धेषु, यथा लौकिकवैदिकेषु।**

**भा.—अनुकरणं हि शिष्टस्य वा साधु भवति; अशिष्टाप्रति- षिद्धस्य वा, नैव तद् दोषाय भवति, नाभ्युदयाय। यथा लौकिक- वैदिकेषु; यथा लौकिकेषु वैदिकेषु च कृतान्तेषु। लोके तावत्— य एवमसौ ददाति, य एवमसौ यजते, य एवमसावधीत इति तस्यानुकुर्वन् दद्याच्च यजेत चाधीयीत च, सोऽप्यभ्युदयेन युज्यते। वेदेऽपि—"य एवं विश्वसृजः सत्राण्यध्यासते" इति तेषामनु- कुर्वंस्तद्वत् सत्राण्यध्यासीत सोऽप्यभ्युदयेन युज्यते। अशिष्टाप्रति- षिद्धं यथा—य एवमसौ हिक्कति, य एवमसौ हसति, य एवमसौ कण्डूयतीति तस्यानुकुर्वन् हिक्केत्, हसेच्च कण्डूयेच्च, नैव तद् दोषाय स्यान्नाभ्युदयाय। यस्तु खलु—एवमसौ ब्राह्मणं हन्ति, एवमसौ सुरां पिबतीति तस्यानुकुर्वन् ब्राह्मणं हन्यात् सुरां वा पिबेत् सोऽपि मन्ये पतितः स्यात्। विषम उपन्यासः। यश्चैवं हन्ति, यश्चानु-**

**हन्ति, उभौ तौ हतः। यश्चापि पिबति,यश्चानुपिबति, उभौ तौ पिबतः। यस्तु खल्वेवमसौ ब्राह्मणं हन्ति, एवमसौ सुरां वा पिबतीति तस्यानुकुर्वन् स्नातानुलिप्तो माल्यगुणकण्ठः कदलीस्तम्भं छिन्द्यात्, पयो वा पिबेत्, न स मन्ये पतितः स्यात्। एवमिहापि य एवमसावपशब्दं प्रयुङ्क्ते इति तस्यानुकुर्वन्नपशब्दं प्रयुञ्जीत सोऽप्यपशब्दभाक् स्यात्।**

प्र.—प्रयोजनान्तरमपि वार्तिककारः प्रत्याचष्टे—अनुकरणमिति; अनुकार्यस्य दुष्टत्वादनुकरणस्यापि दुष्टत्वं मन्यते सुरापानानुकरणवत्। भाष्यकारस्त्वनुकरणार्थत्वं समर्थयते—विषम इति। न ह्यनुकार्यस्य दोषेणानुकरणस्य दुष्टत्वमिति दर्शयति—यश्चेति। विहितकरणाद्धर्मोत्पत्तिः, प्रतिषिद्धाचरणाच्चाधर्मोत्पत्तिः, न त्वनुमानेन धर्माधर्मयोर्व्यवस्थेति मन्यते। सुरापानादौ तु तस्या एव क्रियाया अनुष्ठानात् सादृश्याभावान्नास्त्यनुकरणत्वम्। दानादीनां स्मार्तत्वाल्लौकिकत्वमुच्यते। स्नातानुलिप्त इति; स्वस्थचित्तत्वं दर्शयति। अस्वस्थेन हि चित्तेनाकार्यं क्रियते। माल्यगुणकण्ठ इति; लोकमध्ये प्रकाशते इत्यर्थः। अकार्यं ह्यप्रकाशं क्रियते। तत्र लृतकशब्दोऽपि यदा ऋतकार्थे प्रयुज्यते तदापशब्दः; यदा त्वनुकार्यं प्रत्याययति तदा साधुरेव, अर्थभेदात्; अस्वगोण्यादिवत्।

उ.—अनुकरणस्य साधुत्वात् तदर्थं लृकारोपदेश इति वार्तिकार्थभ्रमं वारयति—प्रयोजनान्तरमिति। यस्त्वेवं ब्राह्मणमिति भाष्योक्तमभिप्रायमाह—अनुकार्यस्येति। उक्तं वार्तिकाभिप्रायं दूषयति—न हीति। धर्माधर्मयोर्विधिनिषेधगम्यत्वात् 'दुष्टं दुष्टानुकरणं दुष्टानुकरणत्वात् सुरापानानुकरणवत्' इत्यनुमानमप्रयोजकमित्यर्थः। उक्तानुमाने दृष्टान्ते साधनवैकल्यमपीत्याह—सुरापानादाविति। नास्तीति; अपितु क्षीरपानादेरेवेति भावः। एवं भाष्यभावमुक्त्वा वार्तिकस्थलौकिकपदस्य दानाद्युदाहरणानुपपत्तिं परिहरति—दानादीनामिति। विशेषणद्वयस्य प्रयोजनमाह—स्नातेति। नन्वेकस्यैव शब्दस्यानुकार्यानुकरणत्वात् कथं साधुत्वासाधुत्वव्यवस्था? अत आह—तत्रेति। शब्दस्यैकरूपत्वेऽप्यर्थभेदात् साधुत्वासाधुत्वव्यवस्था अस्वशब्दस्याधनाश्वत्वयोर्गोणीशब्दस्यावपनगोत्वयोरिव युक्तेत्यर्थः।

**भा—अयं त्वन्योऽपशब्दपदार्थकः शब्दः, यदर्थं उपदेशः कर्तव्यः। न चापशब्दपदार्थकः शब्दोऽपशब्दो भवति। अवश्यं**

चैतदेवं विज्ञेयम्। यो हि मन्यतेऽपशब्दपदार्थकः शब्दोऽपशब्दो भवतीति, अपशब्द इत्येव तस्यापशब्दः स्यात्। न चैषोऽपशब्दः। अयं खल्वपि भूयोऽनुकरणशब्दोऽपरिहार्यः, यदर्थ उपदेशः कर्तव्यः—'साधूॡकारमधीते, मधूॡकारमधीते' इति। क्वस्थस्य पुनरेतदनुकरणम्? क्लृपिस्थस्य। यदि क्लृपिस्थस्य क्लृपेश्च लत्वमसिद्धम्। तस्यासिद्धत्वादृकार एवाच्कार्याणि भविष्यन्ति। भवेत् तदर्थेन नार्थः स्यात्; अयं त्वन्यः क्लृपिस्थपदार्थकः शब्दो यदर्थ उपदेशः कर्तव्यः। न कर्तव्यः। इदमवश्यं कर्तव्यम्—"प्रकृतिवदनुकरणं भवति" इति। किं प्रयोजनम्? 'द्विः पचन्त्वित्याह'; "तिङ्ङतिङः" इति निघातो यथा स्यात्। 'अग्नी इत्याह'; "ईदूदेद् द्विवचनं प्रगृह्यसंज्ञं भवति" इति प्रगृह्यसंज्ञा यथा स्यात्। यदि प्रकृतिवदनुकरणं भवतीत्युच्यते, अपशब्द एवासौ भवति-'कुमार्यॢतक इत्याह, ब्राह्मण्यॢतक इत्याह'। अपशब्दो ह्यस्य प्रकृतिः। न चापशब्दः प्रकृतिः। *न ह्यपशब्दा उपदिश्यन्ते। न चानुपदिष्टा प्रकृतिरस्ति।

प्र.—अपशब्द इत्येवेति; अस्य हि गाव्यादयोऽपभ्रंशा वाच्याः। अयमिति; असाधोरनुकरणमित्येदप्यत्र नास्तीति भावः। भवेदिति; प्रयोगस्थस्येदमनुकरणम्। प्रयोगे च नास्ति "पूर्वत्रासिद्धम्" इति भावः। प्रकृतिवदिति; तत्र यथा क्लृपेर्लत्वस्यासिद्धत्वादृकारद्वारेण ऌकारस्याच्कार्यं, तथानुकरणस्यापीत्यर्थः। द्विरिति; पचन्तु पचन्त्विति केनचिदुक्ते द्विः पचन्त्वित्यनुकरणम्। एतच्च क्रियासाधनाद्यनभिधानात् तिङन्तं न भवति। एवमग्नी इत्यनुकरणं द्व्यर्थानभिधानान्न द्विवचनान्तम्। ननु गम्ॡ सृप्ॡ इत्यादिस्थस्य यदानुकरणं तदा कथं प्रकृतिवद्भावः? "द्युताद्यॢदितः" इति ऌकारे परतो यणादेशकरणादित्संज्ञानुवादाच्च धात्वनुबन्धस्य ऌकारस्याच्कार्याण्यनुमीयन्ते। ततस्तदनुकरणस्य सिद्धः प्रकृतिवद्भावः। न चापशब्द इति; सिद्धान्तवादी। प्रकरणाद्धि शास्त्रीया प्रकृतिराश्रीयते, शास्त्रनिबन्धनं च कार्यमतिदिश्यते। अपशब्दश्च न शास्त्रीया प्रकृतिः, अनुपदिष्टत्वात्। न शचापब्दत्वं शास्त्रीयं कार्यं,

* न चापशब्दा उच्यन्ते इत्यन्नंभट्टसम्मतः पाठः।

नापि तदतिदेष्टुं शक्यम् । न हि साधोरसाधुत्वातिदेशो युक्तिमान् । तदेवं भाष्यकारेणाशक्तिजानुकरणार्थत्वम् ऌकारोपदेशस्य स्थापितम् ।

उ.—अपशब्द इत्यस्यापशब्दपदार्थकत्वमाह—अस्येति । पूर्वस्मादस्य को विशेषः ? येनापरिहार्यः; अत आह—असाधोरिति । अपिना अनुकार्यानुकरणयोरभेदेऽपि साधुत्वमिति सूचितम् । "प्रकृतिवदनुकरणम्" इति वचनात् कार्यसिद्धिर्भवेदित्याद्ययुक्तम्; अत आह—प्रयोगस्थस्येति ; क्लृप्तिरित्यादिप्रयोगस्थस्येत्यर्थः । प्रयोगे चेति ; प्रयोगस्य लौकिकत्वेनाशास्त्रीयत्वात् शास्त्रीयस्य "प्रकृतिवदनुकरणम्" इत्यस्याप्रवृत्तेः स्थानिद्वारा प्रकृतिवदुदात्ताद्यसिद्धिरिति भावः । यथाश्रुते प्रयोगे पूर्वत्रासिद्धप्रवृत्तावपि ततो भिन्नेऽनुकरणे तदप्रवृत्तेरचूकार्यासिद्धिसंभवेन प्रयोगे पूर्वत्रासिद्धमिति नास्तीत्यस्यानुपयोगप्रसङ्गात् प्रयोगस्याशास्त्रीयत्वेऽपि प्रयोगस्थऌकारस्य शास्त्रीयत्वात् तदनुकरणे प्रकृतिवदनुकरणमित्येतत् प्रवर्तेत इत्याशयेनाह—तत्रेति इति केचित् व्याचक्षते । अन्ये तु क्लृपिस्थानुकरणे अन्यथासिद्धौ शङ्कितायामयं त्वन्य इति समाधानोक्तेः "प्रकृतिवदनुकरणम्" इति वचनेनान्यथासिद्धिर्न कर्तव्येत्यनेन शङ्क्यते, तन्न्यायस्य 'अयं त्वन्यः' इत्यत्रापकर्षे मानाभावात् प्रयोगे च पूर्वत्रासिद्धत्वमिति नास्तीत्यस्यानुपयोगानुद्धारात् प्रदीपास्वारस्याच्चान्यथा व्याचक्षते—क्लृपिस्थानुकरणे अनुकार्यानुकरणयोरभेदविवक्षया ऌत्वस्यासिद्धत्वेनान्यथासिद्धावुक्तायाम् 'अयं त्वन्यः' इति तत्परिहार उच्यते । तत्राभेदेन शङ्किते भेदेन परिहारो नातीव समञ्जस इत्याशङ्क्याभेदमङ्गीकृत्यैव व्याचष्टे—प्रयोगस्थस्येति । भाष्ये क्लृपिस्थपदार्थकः, क्लृप्तिरित्यादिप्रयोगस्थपदार्थक इत्यर्थः । न कर्तव्य इत्यादेस्तात्पर्यमाह—तत्रेति ; क्लृ३प्त इत्यादावित्यर्थः । अनुकरणस्यापीति ; प्रयोगस्थानुकरणस्यापि प्रकृतिवदिति वचनात् कार्याणि भविष्यन्तीत्यर्थः । ननु द्विरित्यस्यातिङ्त्वात् पचन्त्वित्यस्य तिङ्त्वान्निघातो भविष्यतीत्याशङ्क्य, पचन्त्वित्यस्यातिङ्त्वात् प्रकृतिवदिति वचनेनैव निघातसिद्धिरित्युपपादयति—पचन्त्विति; अनुकरणस्यानुकार्यशब्दपदार्थकत्वादित्यर्थः । अनुबन्धऌकारस्य ऋकारस्थानिकत्वाभावेन तद्द्वाराचूकार्यालाभात् तदनुकरणस्यातिदेशेन तदलाभात् तदर्थमुपदेशमाशङ्क्य ज्ञापकात् तत्रातिदेशप्रवृत्तिमाह—नन्वित्यादि । इत्संज्ञेति ; तस्या अप्यचूत्वसापेक्षत्वादित्यर्थः । न चापशब्दा उच्यन्ते इत्यत्र उच्यन्ते अन्वाख्यायन्त इत्यर्थः । पूर्वशेषत्वमाशङ्क्योपदिश्यन्त इत्यर्थमभिप्रेत्याह—सिद्धान्तेति । न चापशब्दा इत्येव क्वचित् पाठः । तत्रान्वाख्येया इत्यध्याहारः । पूर्वशेषत्वमङ्गीकृत्यानुकरणानीत्यध्याहारमभिप्रेत्याह—सिद्धान्तेति ; आहेति शेषः । ननु प्रकृतिवदित्यत्र विशेषणानुपादानादनुपदिष्टप्रकृतेरपि ग्रहणात् न हीत्यनेनोपदिष्टप्रकृतिकार्यस्यैवातिदेशकथनमयुक्तमित्याशङ्क्याह—प्रकरणादिति ; अतिदेशस्य शास्त्रस्थत्वात् प्रकरणाद्विशेषलाभ इत्यर्थः । अत एवातिदेश्यमपि शास्त्रीयकार्यमेवेत्याह—शास्त्रेति । प्रकरणात् प्रकृत्यतिदेशयोर्विशेषाश्रयणे फलमाह—अपशब्दश्चेति । अपशब्दत्वातिदेशे न्यायविरोधोऽपीत्याह—नेति । नानिष्टार्था शास्त्रप्रवृत्तिरिति न्यायविरोधात् युक्तिशून्येत्यर्थः । अपशब्दानुकरणस्य साधुत्वकथनेन तदर्थम् ऌकारोपदेशः कर्तव्य इति सूचितमित्याह—एवमिति ; अपशब्दानुकरणस्य साधुत्वे कथिते सतीत्यर्थः । वार्तिककृता प्रत्याख्यातत्वात् भाष्यकारेणेत्युक्तम् ।

साधुशब्दानुकरणे प्रकृतवदित्यनेन अच्कार्यसिद्धेः अशक्तिजेत्युक्तम्। अशक्तिजस्य लृतकशब्दस्य यदनुकरणं कुमार्य्लृतक इत्याहेति तदर्थत्वमित्यर्थः।

वा.—एकदेशविकृतस्यानन्यत्वात् प्लुत्यादयः।

भा.—"एकदेशविकृतमनन्यवद्भवति" इति प्लुत्यादयोऽपि भविष्यन्ति। यद्येकदेशविकृतमनन्यवद्भवतीत्युच्येत, "राज्ञः क च" राजकीयम्, "अल्लोपोऽनः" इति लोपः प्राप्नोति। एकदेशविकृतमनन्यवत षष्ठीनिर्दिष्टस्य। यदि षष्ठीनिर्दिष्टस्येत्युच्यते; 'क्लृ३प्तशिख' इति प्लुतो न प्राप्नोति। न ह्यत्र ऋकारः षष्ठीनिर्दिष्टः। कस्तर्हि? रेफः। ऋकारोऽप्यत्र षष्ठीनिर्दिष्टः। कथम्? अविभक्तिको निर्देशः—'कृप उः रः लः' "कृपो रो लः" इति। अथवा पुनरस्त्वविशेषेण। ननु चोक्तं "राज्ञः क च" राजकीयम्, "अल्लोपोऽनः" इति प्राप्नोतीति। नैष दोषः। वक्ष्यत्येतत्—"श्वादीनां संप्रसारणे नकारान्तग्रहणमनकारान्तप्रतिषेधार्थम्" इति, तत्प्रकृतमुत्तरत्रानुवर्तिष्यते—"अल्लोपोऽनः" नकारान्तस्येति। इह तर्हि—'क्लृ३प्तशिख' "अनृतः" इति प्रतिषेधः प्राप्नोति।

वा.—रवत्प्रतिषेधाच्च।

भा.—रवत्प्रतिषेधाच्चैतत् सिध्यति। "गुरोरवतः" इति वक्ष्यामि। यद्यरवत इत्युच्यते, होतृ + ऋकार होतॄ३कार, अत्र न प्राप्नोति। "गुरोरवतो ह्रस्वस्य" इति वक्ष्यामि। स एष सूत्रभेदेन लृकारोपदेशः प्लुत्याद्यर्थः सन् प्रत्याख्यायते; सैषा महतो वंशास्तम्बाल्लट्वानुकृष्यते।

प्र.—एकदेशविकृतस्येति; ऋकारे रेफभागस्य ले कृते स एव ऋकार इति प्रत्यभिज्ञानादिति भावः। षष्ठीनिर्दिष्टस्येति; "राजः क च" इत्यत्र राजन्शब्दः षष्ठीनिर्दिष्टो न त्वन् इति लोपाभावः। यद्येवं "कृपो रो लः" इत्यत्रापि ऋकारः षष्ठ्या न निर्दिष्ट इत्यनन्यत्वं न प्राप्नोतीत्याह—यदीति। अथवेति; षष्ठीनिर्दिष्टस्येति नापेक्ष्यते। नकारान्तस्येति;

न च राजन्शब्दः क्रादेशे कृते नकारान्तो भवति, श्वेव पुच्छे छिन्ने न पुच्छवानिति भावः। अरवत इति; रोऽस्यास्ति नित्यमिति नित्ययोगे मतुप्। तेन ऋकार एव रवान्; न तु नर्तक इत्यादावकारः। न रवान् अरवानिति समासः। नित्ययोगप्रतिपादनाय बहुव्रीहिर्न कृतः—गुरोररस्येति। ह्रस्वस्येति; तेन ह्रस्वस्यैव रवतः प्लुतनिषेधो न दीर्घस्य। वार्तिककारस्य ऌकारप्रत्याख्यानं निष्प्रयोजनमित्याह—सैषेति।

उ.—वक्ष्यमाणाविभक्तिकनिर्देशपक्षे ऋकारस्यैव स्थानित्वादेकदेशविकृतत्वोपपत्तिरित्याशयेनाह—ऋकार इति। वचनं विनाप्येकदेशविकृतस्यानन्यत्वं सिध्यतीत्याशयेनाह—स एवेति। ननु वृद्धत्वादेव छे सिद्धे आदेशविधानार्थत्वाद्राज्ञ इति षष्ठ्यन्तमेव, न पञ्चम्यन्तम्; तथाच कथमत्र षष्ठ्यभावेन परिहारः? अत आह—राज्ञ इति। यदीति; कृपः रः लः इति सविभक्तिकनिर्देशाद्रेफमात्रमेव स्थानि, न तु ऋकार इत्यर्थः। भाष्ये कृप इत्यनेन "कृपो रो ल" इति सूत्रपाठो गम्यते। अविशेषेणेत्यस्यार्थमाह—षष्ठीति। एकदेशविकृतेऽप्यन्निति शब्दप्रत्यभिज्ञानात् लोपप्राप्तिमाशङ्क्यानुवृत्तिसामर्थ्यात् श्रूयमाणत्वं विवक्षितमित्याशयेनाह—नकारेति; नकारान्तत्वेन श्रुत इत्यर्थः। पुच्छवान्; दृश्यत इति शेषः। अरवत इत्यस्यातिप्रसङ्गं निराह—रोऽस्येति। अत्र ऋकारस्थानिकस्याकारस्य रपरत्वेऽपि पप्रच्छेत्यादौ रवत्त्वाभावान्न नित्ययोग इति न तस्य प्लुतनिषेधप्रसङ्ग इत्यर्थः। ननु मतुपो भूमाद्यनेकार्थसंभवात् संबन्धमात्रे मतुप् किं न स्यात्? तथाचातिप्रसङ्गतादवस्थ्यम्; अत आह—नित्ययोगेति। अरवत इत्यपेक्षया लाघवेन अरस्येत्युक्ते बहुव्रीहिणा संबन्धलाभात् मतुब्योगो नित्ययोगविवक्षाज्ञापक इति भावः। अरवतो ह्रस्वस्येति समानाधिकरणे षष्ठ्यावित्याह—तेनेति। सैषेति भाष्यम् ऋकारप्रत्याख्याने प्रयासगौरवपरमित्याह—वार्तिककारस्येति।

## सू.—एओङ् ॥ ४ ॥ ऐऔच् ॥ ५ ॥

**भा.—इदं विचार्यते–इमानि सन्ध्यक्षराणि तपराणि वोपदिश्येरन् 'एत् ओत् ङ्' 'ऐत् औत् च्' इति; अतपराणि वा यथान्यासमिति। कश्चात्र विशेषः?**

**वा.—संध्यक्षरेषु तपरोपदेशश्चेत् तपरोच्चारणम्।**

**भा.—संध्यक्षरेषु तपरोपदेशश्चेत् तपरोच्चारणं कर्तव्यम्।**

**वा.—प्लुत्यादिष्वज्विधिः।**

**भा.—प्लुत्यादिष्वजाश्रयो विधिर्न सिध्यति। 'गो३त्रात, ौ४त्रात' इत्यत्र "अनचि च" इत्यच उत्तरस्य यरो द्वे भवत ति द्विर्वचनं न प्राप्नोति। इह च 'प्रत्यङ्ङु४तिकायन, दङ्ङौ४पगव' इति "अचि" इति ङमुडागमो न प्राप्नोति।**

**वा.—प्लुतसंज्ञा च।**

**भा.—प्लुतसंज्ञा च न सिध्यति। 'ऐ३तिकायन, औ३पगव' 'ऊकालोऽज्‌ ह्रस्वदीर्घप्लुतसंज्ञो भवति" इति प्लुतसंज्ञा न ाप्नोति।**

प्र.—इदं विचार्यत इति; तपरातपरसन्ध्यक्षरोपदेशो विचार्यत इत्यर्थः। त्रोपदिश्येरन्नित्यत्रासत्त्वभूता यद्यपि क्रियाऽभिधीयते, तथापि बुद्ध्या रामृष्टा सत्त्वरूपतामापादिता विचारक्रियायां कर्मभावमनुभवति; यथा पश्य मृगो धावति' इति सरणं दर्शने। कश्चात्रेति; कार्ये को विशेष इति श्नः। तपरोपदेशश्चेदिति; यद्यप्युपदेश उच्चारणं, तथापि तपरोपदेशो लं चेदस्ति ततस्तपरोच्चारणं कर्तव्यमित्यर्थः। सन्ध्यक्षराणीत्यन्वर्था पूर्वा- ार्यसंज्ञा, संधीयमानावयवत्वात्। प्लुत्यादिष्विति; प्लुतसंज्ञमभ्युपगम्याच्- ार्याणि न सिध्यन्तीत्युच्यते। प्लुत एव न प्राप्नोतीति दर्शयितुमाह— तसंज्ञा चेति। त्रिमात्रस्याचः प्लुतसंज्ञा विधीयते; तपरत्वे च त्रिमात्र- ाग्रहणादच्त्वाभावः। तत्रैचां प्लुतो विधीयमान इकारोकाराभ्यां गृहीत कार ऊकारश्च स्यात।

उ.—सन्ध्यक्षराणां कर्मत्वे इमानीति स्यात्, न तु इदमिति; अत उपदेशस्य कर्मत्व- त्याह—तपरेति। तिङ्मिलितोपदेशस्यासत्त्वभूतस्यापि कर्मत्वमिदमा परामर्शं चोपपाद- ते—तत्रेति; उक्तार्थे आवश्यके सतीत्यर्थः। तपरातपरत्वेन विशेषसद्भावात् तत्प्रश्नायोग- शङ्क्याह—कार्येति। दिशेरुच्चारणक्रियापरत्वात्तपरोच्चारणमित्यनन्वयमाशङ्क्याह—यद्य ते; लक्षणया तपरोपदेशशब्दस्तत्फलपर इत्यर्थः। चतुर्विधशब्देषु कोऽयं शब्दः? । आह—सन्ध्यक्षराणीति। ननु तपरत्वे त्रिमात्रस्याच्प्लुतसंज्ञयोरभावात्तदाश्रित-

कार्यासिद्धिचोद्यानुपपत्तिः ; अत आह—प्लुतेति । प्लुतस्य प्लुतसंज्ञानुपपत्तिशङ्का न युक्तेत्यत आह—प्लुत एवेति । ऽदप्राप्तिमुपपादयति—त्रिमात्रस्येति । एचां प्लुतसंज्ञाभावे न केवलं तत्प्लुताप्राप्तिः, किंतु विपरीतप्राप्तिरित्याह—तत्रेति ; एचां प्लुतसंज्ञाया अभावे सतीत्यर्थः । उत्तरभूयस्त्वेन समानस्थानत्वेन वा आन्तरतम्यादिति भावः ।

भा.—सन्तु तर्ह्यतपराणि ।

वा.—अतपर एच इग्घ्रस्वादेशे ।

भा.—यद्यतपराणि "एच इग्घ्रस्वादेशे" इति वक्तव्यम् । किं प्रयोजनम्? एचो ह्रस्वादेशशासनेष्वर्ध एकारोऽर्ध ओकारो वा मा भूदिति । ननु च यस्यापि तपराणि तेनाप्येतद्वक्तव्यम् । इमावैचौ समाहारवर्णौ ; मात्रावर्णस्य, मात्रेवर्णोवर्णयोः । तयोर्ह्रस्वादेशशासनेषु कदाचिदवर्णः स्यात्, कदाचिदिवर्णोवर्णौ ; मा कदाचिदवर्णो भूदिति । प्रत्याख्यायत एतत् "ऐचोश्चोत्तरभूयस्त्वात्" इति । यदि प्रत्याख्यानपक्षः, इदमपि प्रत्याख्यायते— "सिद्धमेङः सस्थानत्वात्" इति । ननु चैङः सस्थानतरावर्ध एकारोऽर्ध ओकारः । न तौ स्तः । यदि हि तौ स्यातां, तावेवायमुपदिशेत् । ननु च भोश्छन्दोगानां सात्यमुग्रिराणायनीया अर्धमेकारमर्धमोकारं चाधीयते—"सुजाते एश्वसूनृते" "अध्वर्यो ओद्रिभिः सुतम्" "शुक्रं ते एन्यत्" "यजतं ते एन्यत्" इति । पारिषदकृतिरेषा तत्रभवताम् । नैव हि लोके नान्यस्मिन् वेदेऽर्ध एकारोऽर्ध ओकारो वास्ति ।

प्र.—अतपर इति; असतीह तपरत्वे एकारौकाराभ्यां मात्रिकयोरर्धैकारार्धौकारयोर्ग्रहणादचूत्वात् ह्रस्वत्वाद्विधानं स्यादिति सूत्रं कर्तव्यम् । तपरत्वे तु तयोरग्रहणात् प्राप्त्यभावः । ननु चेति; सूत्रारम्भं प्रति न कश्चिद्विशेष इत्यर्थः । अतपरत्वे एच इति वक्तव्यम्; तपरत्वे त्वैच इति । ऐचोर्विश्लिष्टावर्णत्वात् संश्लिष्टावर्णावर्धैकारार्धौकारौ न भवतः । ऐचोश्चेति ; अर्धमात्रावर्णस्य, अध्यर्धमात्रेवर्णोवर्णयोः । भूयसा च व्यपदेशो मल्लग्रामादिवदितीकारोकारावेव भविष्यतः । सिद्धमेङ इति; अर्धौकारार्धैकारौ न स्तः । तत्र तालव्य एकार ओष्ठ्य ओकार इति तयोः स्थाने इकारोकारावेव भविष्यतः ।

तावेवेति ; ताभ्यामुपदिष्टाभ्यां दीर्घकृतयोरपि ग्रहणं सिध्यतीति भावः। गुणसंज्ञायां तु दीर्घावेकारौकारौ निर्देश्यौ। सुजात इति ; अन्तःपादस्थस्याव्यपरस्याकारस्यार्धमेकारमर्धमोकारं च विदधति। पारिषदकृतिरिति ; गीतिवशात् तथोच्चारणमित्यर्थः॥

उ.—नन्वतपरत्वेऽपि परावयवान्तरतम्यात् इगेव ह्रस्वो भविष्यतीति नियमारम्भो व्यर्थ इत्याशङ्क्य समुदायसदृशह्रस्वान्तरसत्त्वान्नैवमित्याह—असतीति। तपरपक्षे तन्निवृत्तिः कथमित्याशङ्क्याच्त्वाभावेन ह्रस्वत्वाभावादित्याह—तपरत्व इति। तयोः; अर्धैकारार्धौकारयोः। ननु तपरत्ववादिना एच इत्यस्यावक्तव्यत्वात् तेनापीत्ययुक्तम् ; अत आह—सूत्रारम्भमिति। तदुपपादयति—अतपरत्व इति। एच इति ; अर्धैकारार्धौकारयोर्निवृत्त्यर्थमित्यर्थः। तपरत्वे त्वैच इति। तपरत्वेनार्धैदौतोः व्यावृत्तावेङः संस्थानत्वादिकः सिद्धत्वात् अवर्णनिवृत्त्यर्थम् "एच इग्घ्रस्वादेशे" इति पक्षद्वयेऽपि सूत्रारम्भ आवश्यक इत्यर्थः। पक्षद्वयेऽप्यैचोः स्थाने एदोतोः प्रसङ्गो नास्तीत्याह—ऐचोरिति। "एच इक्" इत्यत्र वक्ष्यमाणमुत्तरभूयस्त्वं दर्शयति—अर्धेति। तथापि अकारनिवृत्तिः कथम्? अत आह—भूयसेति। तत्र दृष्टान्तः—मल्लेति। सस्थानत्वात् समानस्थानत्वादिगेव भविष्यतीत्येवं वार्तिकार्थमुपपादयति—अर्धैकारेति। ननु तदसंभवेऽप्यकारनिवृत्त्यर्थं कर्तव्यमेव ; अत आह—तालव्य इति। यस्य मते एदैतोर्न कण्ठः स्थानं, तन्मतेनेदं वार्तिकम्। एङ उभयस्थानत्वे अकारनिवृत्त्यर्थम् "एच इग्घ्रस्वादेशे" इति सूत्रं कर्तव्यमेवेति भावः। तयोरुपदेशे दीर्घादेरप्यच्त्वं सिध्यति ; दीर्घोपदेशे तु न तयोरच्त्वं सिध्यतीत्येवकाराभिप्रायमाह—ताभ्यामिति। नन्वेङ्संज्ञावत् गुणसंज्ञापि तयोरेव स्यात् ; तच्चानिष्टम् ; अतस्तयोरनुपदेशः ; अत आह—गुणसंज्ञायामिति। "अदेङ् गुणः" इति सूत्रं कर्तव्यमित्यर्थः। ननु पादमध्ये श्रूयमाणस्यैङः "प्रकृत्यान्तःपादम्" इति प्रकृतिभावेन विकारानुपपत्तेः कथं ह्रस्वाध्ययनम्? अत आह—अन्तःपादस्थस्येति। ननु छन्दोगपरिषदि सतोरप्यन्तरतमतया प्राप्तेर्नियमारम्भः स्यात् ; इत्यत आह—गीतीति ; वस्तुतो दीर्घयोरेव गीतिवशात्तथोच्चारणमिति भावः।

## वा.—एकादेशे दीर्घग्रहणम्।

भा.—एकादेशे दीर्घग्रहणं कर्तव्यम् "आद् गुणो दीर्घः, वृद्धिरेचि दीर्घः" इति। किं प्रयोजनम्? आन्तर्यतस्त्रिमात्रचतुर्मात्राणां स्थानिनां त्रिमात्रचतुर्मात्रा आदेशा मा भूवन्निति। खट्वा + इन्द्रः = खट्वेन्द्रः ; खट्वा + उदकं = खट्वोदकम् ; खट्वा + ईषा = खट्वेषा ; खट्वा + ऊढा = खट्वोढा ; खट्वा + एलका = खट्वैलका ; खट्वा + ओदनः =

इति। तत्तर्हि दीर्घग्रहणं कर्तव्यम्। न कर्तव्यम्। उपरिष्टा-द्योगविभागः करिष्यते "अकः सवर्णे"। एको भवति। ततो "दीर्घः"। दीर्घश्च स भवति, यः सः 'एकः पूर्वपरयोः' इत्येवं निर्दिष्ट इति। इहापि तर्हि प्राप्नोति—पशुं, विद्धं, पचन्तीति। नैष दोषः। इह तावत् पशुमिति; 'अम्येकः' इतीयता सिद्धम्। सोऽयमेवं सिद्धे सति यत् पूर्वग्रहणं करोति तस्यैतत् प्रयोजनम्—यथाजातीयकः पूर्वस्तथाजातीयक उभयोर्यथा स्यादिति। विद्धमिति; पूर्व इत्येवानुवर्तते। अथवा आचार्य-प्रवृत्तिर्ज्ञापयति—नानेन संप्रसारणस्य दीर्घो भवतीति, यदयं हल उत्तरस्य संप्रसारणस्य दीर्घत्वं शास्ति। पचन्तीति; "अतो गुणे परः" इतीयता सिद्धम्। सोऽयमेवं सिद्धे सति यद्रूप-ग्रहणं करोति, तस्यैतत् प्रयोजनम्—यथाजातीयकं परस्य रूपं तथाजातीयकमुभयोर्यथा स्यात्। इह तर्हि खट्वर्श्यो मालर्श्य इति; दीर्घवचनादकारो न, अनान्तर्यादेकारौकारौ न। तत्र को दोषः? विगृहीतस्य श्रवणं प्रसज्येत। न ब्रूमो यत्र क्रियमाणे दोषस्तत्र कर्तव्यमिति। किं तर्हि? यत्र क्रियमाणे न दोषस्तत्र कर्तव्यमिति। क्व च क्रियमाणे न दोषः? संज्ञाविधौ; 'वृद्धिरा-दैज् दीर्घः' 'अदेङ् गुणो दीर्घः' इति। तत्तर्हि दीर्घग्रहणं कर्तव्यम्। न कर्तव्यम्। कस्मादेवान्तर्यतस्त्रिमात्रचतुर्मात्राणां स्थानिनां त्रिमात्रचतुर्मात्रा आदेशा न भवन्ति? तपरे गुण-वृद्धी। ननु च तः परो यस्मात् सोऽयं तपरः। नेत्याह; तादपि परस्तपर इति। यदि तादपि परस्तपरः "ऋदोरप्" इतीहैव स्यात्—यवः स्तवः। लवः पव इत्यत्र न स्यात्। नैष तकारः। कस्तर्हि? दकारः। किं दकारे प्रयोजनम्? अथ किं तकारे? यद्यसंदेहार्थस्तकारः, दकारोऽपि। अथ मुखसुखार्थस्तकारः, दकारोऽपीति।

प्र.—आन्तर्यत इति; अन्यस्यासंभवादिदमत्र नास्ति 'प्लुतश्च विषये स्मृतः' इति। अम्येक इति; "प्रथमयोः" इति सिद्धे एतदपि किमर्थ-मुच्यत इति चेत् "वा छन्दसि" इत्यत्रानुवृत्त्यर्थम्। तस्मात् पूर्वश्रुतिः

पूर्वरूपार्था। सैवोत्तरत्रानुवर्तत इति विद्धमिति पूर्वरूपं भविष्यति। अथवेति ; विधिनियमसंभवे विधिरेव बलीयानिति विधेर्बलीयस्त्वान्नियमो न भवति—हल एव दीर्घत्वं यथा स्यात्, उत इत्यादौ मा भूदिति। तपरे इति; तपरसंज्ञिसहचरिते गुणवृद्धिसंज्ञे इत्यर्थः। तादपीति ; तन्त्रन्यायाश्रयणादेकस्यैव द्विशक्तित्वादेकशेषाश्रयणाद्वाऽनेकार्थाभिधानमिति भावः। बहुव्रीहिवादी चोदयति—किं दकार इति। समासद्वयवादी तं प्रत्याह—अथ किं तकार इति। तव केवलबहुव्रीहिवादिनो निष्प्रयोजनं तपरत्वम् ; ऋकारस्यानणत्वात् भिन्नकालानां ग्रहणाप्रसङ्गात्, गुणानां चाभेदकत्वात् तत्प्राप्त्यर्थत्वाभावात्। अथ तवासन्देहार्थौ मुखसुखार्थौ वा तकारः, एवं मम दकार इत्यर्थः। "तित् स्वरितम्" इत्यत्रत्यभाष्येणास्य विरोधः ; तत्र हि—तिति प्रत्ययग्रहणं चोदितम् ; इह मा भूत् "दिव उत्" द्युभ्यामिति। ततो दित्त्वाश्रयणेन प्रत्याख्यातम्। तपरसूत्रे दकारश्चर्त्वभूतो निर्दिश्यते। तेन तत्कालस्य ग्राहको दकार इत्युक्तम्। इह च दकाराभ्युपगमेन लवादिषु दोषः परिहृतः। अत्राहुः—थकारस्थानिको वा धकारस्थानिको वा दकारोऽत्र विवक्षितः—कस्तर्हि दकार इति।

उ.—ननु त्रिमात्रस्य प्लुतत्वात् "प्लुतश्च विषये स्मृतः" इति न्यायेन त्रिमात्रो न भविष्यतीत्यत आह—अन्यस्येति ; अन्ततमस्येत्यर्थः। वचनसामर्थ्यात् त्रिमात्रोऽविषयेऽपि स्यादिति भावः। अम्यक इत्यस्यैवानारभ्यत्वात् पूर्वग्रहणाभावमाशङ्क्य परिहरति—प्रथमयोरिति। अम्यक इत्यत्र पूर्वसवर्णग्रहणानुवृत्त्या परसवर्णनिवृत्तेः पूर्वग्रहणं पूर्वतुल्यताप्रतिपादनार्थमित्यर्थः। पूर्व इत्येवानुवर्तत इति भाष्यार्थमाह—सैवेति। ननु नियमार्थत्वेन विधित्वाभावान्न ज्ञापकत्वम् ; अत आह—विधिनियमेति। बलीयस्त्वादिति ; त्रैदोष्यराहित्यादिति भावः। नियमं दर्शयति—हल एवेति। निष्ठायां यजादित्वात् संप्रसारणम्। हल इत्यस्य विधित्वबलात् "संप्रसारणाच्च" इत्यत्र दीर्घ इत्येवं न प्रवर्तेत इत्यर्थः। गुणवृद्धी इति द्विवचनात् संज्ञयोस्तपरत्वं प्रतीयते ; तच्चानुपपन्नम् ; अत आह—तपरेति। सकृदुच्चरितस्यानेकार्थत्वमयुक्तम् ; अत आह—तन्त्वेति ; शब्दद्वयपरमुच्चारणमित्यर्थः। न त्वर्थतन्त्रम् ; विरुद्धार्थानां तन्त्रासंभवात्। एकोच्चारणेनैकस्यैवाभिव्यक्तेः शब्दतन्त्रता न संभवति; अत आह—एकस्यैवेति। सकृदुच्चरितस्यापि 'गङ्गायां घोषमत्स्यौ' इतिवत्तात्पर्ये सति वृत्तिद्वयविरोधो नास्तीत्यर्थः। वृत्तिद्वयविरोधमतेऽप्याह—एकशेषेति। सौत्रत्वान्निर्देशस्य द्विवचनाभावः। बहुव्रीहिवादिनोऽपि तकारस्य निष्प्रयोजनत्वाद्दकारप्रयोजनप्रश्नानुपपत्तिमाशङ्क्य गुणभिन्नप्रापकत्वेन सार्थक्यमाह—बहुव्रीहीति। बहुव्रीहिमतेऽपि तकारस्यानुपयोगं दर्शयति—

तत्रेति। "तपरस्तत्कालस्य" इत्यत्र अण्ग्रहणानुवृत्तौ नियमार्थं सूत्रम्; अननुवृत्तौ गुणभिन्नप्रापणार्थमिति पक्षद्वयमुक्तम्। उभयमपि न संभवतीत्याह—ऋकारस्येति। प्रत्ययग्रहणमिति वार्तिकप्रत्याख्यानभाष्येणास्य विरोधमाशङ्कते—तित्स्वरितमिति। "दिव उत्" इति दकारो न तु तकारः। "वावसाने" इति चर्त्वेन तकारः। तस्येत्संज्ञायां कर्तव्यायामसिद्धत्वात् तित्त्वाभावात् स्वरितत्वाभाव इत्यर्थः। चर्त्वभूत इति; "अणुदित्सवर्णस्य चाप्रत्ययस्त्तपरस्तत्कालस्य" इति द्वितकारको निर्देशः। असंहिततया निर्देशे त्तपर इति निर्देशः कर्तव्य इत्यर्थः। चर्त्वभूतस्य निर्देशे प्रयोजनमाह—तेनेति। तत्रत्यभाष्यमनूद्येह तद्विरोधमाह—इह चेति। दकाराभ्युपगमेनेति; तपरसूत्रे दकारस्यापि तत्कालग्राहकत्वादूदन्तादप् न प्राप्नोतीति तदङ्गीकारस्तद्विरुद्ध इत्यर्थः। धकारेति; "ऋदोरप्" इत्यत्र धकारस्थाने जश्त्वं कृत्वा निर्देशः। "तपरस्तत्कालस्य" इति नियमे कर्तव्ये जश्त्वस्यासिद्धत्वात् लव इत्यादि सिध्यति।

**भा.—इदं विचार्यते—य एते वर्णेषु वर्णैकदेशा वर्णान्तरसमानाकृतयः, एतेषामवयवग्रहणेन ग्रहणं स्याद्वा न वेति। कुतः पुनरियं विचारणा? इह हि समुदाया अप्युपदिश्यन्ते, अवयवा अपि। अभ्यन्तरश्च समुदायेऽवयवः; तद्यथा—वृक्षः प्रचलन् सहावयवैः प्रचलति। तत्र समुदायस्थस्यावयवग्रहणेन ग्रहणं स्याद्वा न वेति जायते विचारणा। कश्चात्र विशेषः?**

**वा.—वर्णैकदेशा वर्णग्रहणेन चेत् सन्ध्यक्षरे समानाक्षरविधिप्रतिषेधः।**

**भा.—वर्णैकदेशा वर्णग्रहणेन चेत् सन्ध्यक्षरे समानाक्षराश्रयो विधिः प्राप्नोति। स प्रतिषेध्यः। 'अग्ने इन्द्र, वायो उदकम्'; "अकः सवर्णे दीर्घः" इति दीर्घत्वं प्राप्नोति।**

प्र.—वर्णान्तरसमानाकृतय इति; आकारादिष्वकारादिसदृशावयवा ऋकारऌकारयोः रेफलकारसदृशावयवौ संध्यक्षरेष्वकारेकारोकारसदृशाः। तत्र केवलवर्णकार्यमवयवेषु भवति न वेति विचारः। इह हि समुदाया अपीति; ऋ ऌ ए ओ ऐ औ इति। अवयवा अपीति; अ इ उण् ऋट् ऌणिति। तत्र समुदायपरे निर्देशे संनिहिता अप्यवयवा नान्तरीयकत्वादेजादिसंज्ञां न लभन्ते। अवयवपरे च निर्देशे समुदायो न संज्ञाभाक्; यथा

ह्यवेत्यादावनच्कस्य हलो दुःखेनोच्चार्यत्वान्निर्दिष्टोऽप्यकारोऽन्यत्र प्राधान्येन निर्देशाद्धलादिसंज्ञा न प्रतिपद्यत इति दध्यत्रेत्यादावनच्क एव यणादेशः प्रवर्तते। तत्रासत्यामप्येजादिसंज्ञायामयादयः समुदायादेशा अपि नान्तरीयकत्वादवयवान्निवर्तयन्ति। एवं स्थिते अग्ने इन्द्र इत्यादौ यत्रावयकार्यं प्राप्नोति समुदायकार्यं च तत्रान्तरङ्गत्वात् तत्र च साक्षाच्चोदितत्वात् प्रत्यक्षत्वात् परत्वाच्चावयवकार्यप्रसङ्गः। अवयवावगतिपूर्वकत्वाद्धि समुदायावगमस्य समुदायकार्यं बहिरङ्गम्। अयादीनां चावकाशः 'अग्न आयाहि' इति। नन्वत्र यणादेशोऽवयवस्य प्राप्नोति। "येन नाप्राप्ते" इति वा "मध्येऽपवादाः" इति वा यण एवायादयो बाधकाः स्युः। तत्र यथा दधीन्द्र इत्यत्र दधिशब्दस्य इकारः सवर्णदीर्घत्वं प्रतिपद्यते, एवमेकारस्थोऽपि प्रतिपद्येत, प्रत्याहारे एओङ् ऐऔजित्यत्रावयवानां प्राधान्येन निर्देशादित्येवं ग्रहणपक्षाशङ्काबीजमुपन्यस्तम्। इदानीमग्रहणपक्षाशङ्काबीजमुपन्यस्यते—अभ्यन्तरश्चेति। तिरोहितत्वादवयवानां समुदायकार्ये पारतन्त्र्यात् स्वकार्यस्याप्रयोजकत्वान्नरसिंहवज्जात्यन्तरयोगाद्वर्णान्तरसारूप्यमात्रेण तत्कार्याप्रवर्तनादित्यर्थः। समानाक्षरेति; समानशब्देन पूर्वाचार्यनिर्देशात् अकोऽभिधीयन्ते, "दश समानाः" इति वचनात्। तेन समानकार्यं प्राप्नोतीत्यर्थः।

उ.—वर्णैकदेशत्वं वर्णसमानाकृतित्वं च दर्शयति—आकारादिष्विति। अभिमतान् समुदायानवयवांश्च विविच्य दर्शयति—इहेति। यदि समुदायावयववादोऽङ्गीक्रियते, तर्हि समुदाये अवयवानामपि तन्मध्यपतितत्वात् एजादिसंज्ञा स्यात्; तथा च एजादिसंज्ञया अणादिसंज्ञाया बाधात् अग्ने इन्द्रेत्यत्र सवर्णदीर्घप्रसङ्ग इत्याशङ्कां परिहरति—तत्रेति; समुदायावयवभावे सतीत्यर्थः। तात्पर्येण निर्दिष्टस्यैव कार्यभाक्त्वमित्येतत् दृष्टान्तेनोपपादयति—यथेति। अन्यत्र; अइउणित्यादौ। नन्ववयवानामेजादिसंज्ञाया अभावे एच इति विहितानामयादीनामवयवनिवर्तकत्वं न स्यात्; अत आह—तत्रेति; अवयवेष्वित्यर्थः। नान्तरीयकत्वादिति; अवयवमनिवर्त्य समुदायनिवर्तकत्वासंभवादित्यर्थः। समुदायपक्षे अवयवकार्यप्रसङ्गमुपपादयति—एवमिति; एजादिसंज्ञायां अवयवेष्वभावे सतीत्यर्थः। अणादिसंज्ञा अवयवेषु प्रवर्तत एव, बाधकाभावादित्यभिप्रेत्याह—अग्ने इति। अवयवकार्यं सवर्णदीर्घः; समुदायकार्यमयादि। साक्षादिति; यथा वर्णसमूहः पदमिति मते वर्णानां साक्षात्पदत्वम्, एकस्मृतिविषयत्वेन तु समूहत्वं तद्वदत्रेति भावः। अत एवावयवानां प्रत्यक्षत्वम्। सवर्णदीर्घस्यायाद्यपेक्षया परत्वम्। अन्तरङ्गत्वमुपपादयति—अवयवेति। अनवकाशा अयादयः सवर्ण-

दीर्घं बाधेरन्; अत आह—अयादीनामिति। नन्विति; यथा अनवकाशतया यणं बाधते तथा दीर्घमिति भावः। येनेति; यस्मिन् नित्यप्राप्ते यत् विधीयते तत् तस्य बाधकम्। यणि नित्यप्राप्ते अयादयो विधीयन्ते; सवर्णदीर्घे पुनः प्राप्ते चाप्राप्ते च; तथाच न दीर्घं बाधत इत्यर्थः। "मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते नोत्तरान्"। उत्तरश्च दीर्घविधिः। एवं बाधकाभावे स्थिते सवर्णदीर्घप्रसङ्गं सदृष्टान्तमाह—तत्र यथेति। समुदायसंज्ञा एजादयः अवयवेऽपि प्रवृत्ता अगादिसंज्ञा बाधन्त इति दीर्घप्रसङ्गमाशङ्क्योक्तं स्मारयति—प्रत्याहार इति। समुदाया अपीति भाष्ये समुदायनिर्देशे अवयवानामप्राधान्यमिति भावः। अवयवसंज्ञानां समुदाये अप्रसङ्गात् समुदायेष्वक्संज्ञामाश्रित्य सवर्णदीर्घप्रसङ्गो नोद्भावितः। समुदाया अपीति भाष्यतात्पर्यमुपसंहरति—एवमिति। अभ्यन्तरश्चेति भाष्यस्य समुदायोपपादकत्वशङ्कां वारयति—इदानीमिति। ग्रहणपक्षोपन्यासानन्तरमेवाग्रहणपक्षोपन्यास इति सूचनायेदानीमित्युक्तम्। अभ्यन्तरशब्देन समुदायावयवभाव एव प्रतीयत इति विरुद्धो हेतुरित्याशङ्क्याह—तिरोहितत्वादिति। वृक्षः प्रचलन्नित्यनेन पारतन्त्र्यमुक्तमित्याह—समुदायेति। परतन्त्रस्यापि स्वकार्यप्रवर्तकत्वं किं न स्यात्? अत आह—नरसिंहवदिति। एकप्रयत्नजन्यत्वादेकवर्णत्वमेव, न वर्णद्वयसमुदायत्वमित्यर्थः। एकजातिव्यञ्जकानामपि वर्णान्तरसादृश्यात् तत्कार्यं स्यादित्यत आह—वर्णान्तरेति। यथा नरकार्यं सिंहकार्यं वा नरसिंहेन भवति तद्वदित्यर्थः। अस्मिन् शास्त्रे समानाक्षरसंज्ञाया अभावात् तन्निमित्तकार्याप्रसिद्धिः; अत आह—समानेति।

## वा.—दीर्घे ह्रस्वविधिप्रतिषेधः।

**भा.—दीर्घे ह्रस्वाश्रयो विधिः प्राप्नोति; स प्रतिषेध्यः। आलूय, प्रलूय; "ह्रस्वस्य पिति कृति तुग्भवति" इति तुक् प्राप्नोति। नैष दोषः; आचार्यप्रवृत्तिर्ज्ञापयति 'न दीर्घे ह्रस्वाश्रयो विधिर्भवति' इति; यदयं दीर्घाच्छे तुकं शास्ति। नैतदस्ति ज्ञापकम्। अस्ति ह्यन्यदेतस्य वचने प्रयोजनम्। किम्? "पदान्ताद्वा" इति विभाषां वक्ष्यामीति। यत्तर्हि योगविभागं करोति। इतरथा हि "दीर्घात् पदान्ताद्वा" इत्येव ब्रूयात्। इह तर्हि—खट्वाभिः, मालाभिः; "अतो भिस ऐस्" इत्यैस्भावः प्राप्नोति। तपरकरणसामर्थ्यान्न भविष्यति। इह तर्हि—याता, वाता; "अतो लोप आर्धधातुके" इत्यकारलोपः प्राप्नोति। ननु चात्रापि तपरकरणसामर्थ्यादेव न भविष्यति। अस्ति ह्यन्यत् तपरकरणे**

प्रयोजनम्। किम्? सर्वस्य लोपो मा भूदिति। अथ क्रियमाणेऽपि तपरे परस्य लोपे कृते पूर्वस्य कस्मान्न भवति? परलोपस्य स्थानिवद्भावादसिद्धत्वाच्च। एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति 'नाकारस्थस्याकारस्य लोपो भवति' इति; यदयम् "आतोऽनुपसर्गे कः" इति ककारमनुबन्धं करोति। कथं कृत्वा ज्ञापकम्? कित्करण एतत् प्रयोजनम्—'किति' इत्याकारलोपो यथा स्यादिति। यद्याकारस्थस्याकारस्य लोपः स्यात्, कित्करणमनर्थकं स्यात्। परस्याकारस्य लोपे कृते द्वयोरकारयोः पररूपे हि सिद्धं रूपं स्यात् 'गोदः, कम्बलदः' इति। पश्यति त्वाचार्यो नाकारस्थस्याकारस्य लोपः स्यादिति। अतः ककारमनुबन्धं करोति। नैतदस्ति ज्ञापकम्। उत्तरार्थमेतत् स्यात् "तुन्दशोकयोः परिमृजापनुदोः" इति। यत् तर्हि "गापोष्टक्" इत्यनन्यार्थं ककारमनुबन्धं करोति।

वा.—एकवर्णवच्च।

भा.—एकवर्णवच्च दीर्घो भवतीति वक्तव्यम्। किं प्रयोजनम्? 'वाचा तरति' इति द्व्यज्लक्षणष्ठन् मा भूदिति। इह च—वाचो निमित्तम्; "तस्य निमित्तं संयोगोत्पातौ" इत्यनुवर्तमाने "गोद्व्यचः" इति व्यज्लक्षणो यन्मा भूदिति। अत्रापि गोनौग्रहणं ज्ञापकं 'दीर्घात् व्यज्लक्षणो विधिर्न भवति' इति।

प्र.—<u>असिद्धत्वाच्चेति</u>; "असिद्धवदत्राभात्" इत्यनेन। <u>यत्तर्हीति</u>; नन्वसति कित्त्वे आकारस्थस्याकारस्य लोपे कृते द्वयोरकारयोः पररूपस्य धातुप्रत्यन्तवद्भावात् 'छन्दोगाय' इत्यत्र "आतो धातोः" इत्याकारलोपप्रसङ्गः। नैष दोषः। संनिपातपरिभाषया लोपो न भविष्यति। अकारं ह्याश्रित्य यशब्दः कृतो लोपस्यानिमित्तम्। दीर्घत्वं तु "कष्टाय" इति निपातनाद्भवति। <u>एकवर्णवदिति</u>; अवयवसंख्याश्रयणेन वाक्शब्दस्य द्व्यच्त्वात् तन्निमित्तं कार्यं प्राप्नोतीत्येकवर्णवदित्यतिदेशः क्रियते।

गोनौग्रहणं ज्ञापकमिति ; सामान्येन ज्ञापकं वर्णावयवाश्रयकार्याभावस्य । 'अग्न एहि' इत्यदौ "एङः पदान्तादति" इत्याद्यपि न भवति ।

उ.—भाष्ये आलूयेति; दीर्घस्य ह्रस्वद्वयसमुदायत्वात् तुक् प्राप्नोति । भाष्ये परलोपस्य स्थानिवत्त्वादिति; "अचः परस्मिन्" इत्यनेनेत्यर्थः । अतो लोपस्य त्रैपादिकत्वाभावात् कथमसिद्धत्वम्? अत आह—असिद्धवदिति । व्यक्तिपक्षे लक्षणभेदादतो लोपोऽसिद्ध इत्यर्थः । कित्त्वस्य ज्ञापकत्वमाक्षिप्य समाधत्ते—नन्विति । लोपवत् यजादिनिमित्तदीर्घोऽपि संनिपातपरिभाषया न स्यात्; अत आह—दीर्घत्वमिति । समुदायगतैकत्वसंभवादतिदेशवैयर्थ्यम्; अत आह—अवयवेति । अतिदेशसामर्थ्यादवयवाश्रितकार्यनिवृत्तिरिति भावः । भाष्ये व्यज्लक्षण इति; "नौव्यचष्ठन्" "गोद्व्यचोऽसंख्यापरिमाणाश्वादेर्यत्"। व्यज्लक्षण इति भाष्यम् अवयवकार्यमात्रोपलक्षणमित्यभिप्रेत्याह—सामान्येनेति । एहीति; एकारस्याकारेकारसमुदायत्वादायादेशं बाधित्वा पररूपं प्राप्नोति; ज्ञापकात्तु न भवति ।

**भा.—अयं तु सर्वेषामेव परिहारः—**

**वा.—नाव्यपवृक्तस्यावयवस्य तद्विधिर्यथा द्रव्येषु ।**

**भा.—नाव्यपवृक्तस्यावयवस्यावयवाश्रयो विधिर्भवति, यथा द्रव्येषु । तद्यथा द्रव्येषु "सप्तदश सामिधेन्यो भवन्ति" इति न सप्तदशारत्निमात्रं काष्ठमग्नावभ्याधीयते । विषम उपन्यासः । प्रत्यृचं चैव हि तत् कर्म चोद्यते । असंभवश्चाग्नौ वेद्यां च । यथा तर्हि "सप्तदशप्रादेशमात्रीराश्वत्थीः समिधोऽभ्यादधीत" इति न सप्तदशप्रादेशमात्रं काष्ठमग्नावभ्याधीयते । अत्रापि प्रतिप्रणवं चैतत् कर्म चोद्यते । तुल्यश्चासंभवोऽग्नौ वेद्यां च । यथा तर्हि 'तैलं न विक्रेतव्यम्' 'मांसं न विक्रेतव्यम्' इति व्यपवृक्तं न विक्रीयते; अव्यपवृक्तं गावः सर्षपाश्च विक्रीयन्ते । तथा 'लोमनखं स्पृष्ट्वा शौचं कर्तव्यम्' इति व्यपवृक्तं स्पृष्ट्वा नियोगतः कर्तव्यम्; अव्यपवृक्ते कामचारः । यत्र तर्हि व्यपवर्गोऽस्ति । क्व च व्यपवर्गोऽस्ति? सन्ध्यक्षरेषु**

**वा.—सन्ध्यक्षरेषु विवृतत्वात् ।**

**भा.—यदत्रावर्णं विवृततरं तदन्यस्मादवर्णात् । ये अपीवर्णोवर्णे, विवृततरे ते अन्याभ्यामिवर्णोवर्णाभ्याम् ।**

प्र.—नाव्यपवृक्तस्येति ; व्यपवर्गो व्यपवृक्तं भेदः। तेनाव्यपवृक्तस्याभिन्नबुद्धिविषयस्यैकत्वालम्बनज्ञानग्राह्यस्य समुदायस्य योऽवयवस्तस्मिंस्तद्विधिः पृथग्भूतवर्णविधिर्न भवतीत्यर्थः। अव्यपवृक्तस्यावयवस्येति व्यधिकरणे षष्ठ्यौ ; अव्यपवृक्तस्य समुदायस्य योऽवयवस्तस्येत्यर्थः। न हि संभवमात्रेण कार्याणि क्रियन्ते ; अपितु यत्र तद्बुद्धिरस्ति तत्रैवेत्यर्थः। 'माषा न भोक्तव्याः' इति निषेधस्तु मिश्रेष्वपि प्रवर्तते। तत्र तद्बुद्धिस्तद्रसास्वादनसंभावात्। सप्तदशेति, सामिधेनीशब्द ऋचां वाचकः साहचर्यात् काष्ठेषु वर्तते। तत्र सप्तदशहस्ते काष्ठे सप्तदश काष्ठानीति बुद्धेरभावान्न तस्याभ्याधानम्। असंभव इति; अर्धचतुर्हस्ता हि वेदिः। यथा तर्हीति ; अल्पप्रमाणत्वात् स्यात् संभव इति भावः। अव्यपवृक्तमिति ; व्यपवर्गस्याभावेनेत्यर्थः। यत्र तर्हीति ; ऐ औ इत्यत्र हि स्फुटोऽकारप्रतिभासोऽस्ति। विवृतत्वादिति ; अकारस्य विवृतोपदेशादत्र प्रकर्षो विवक्षितः ; तदाह—विवृततरमिति। तत्र प्रयत्नभेदादसावर्ण्यादकारेण सन्ध्यक्षरावयवस्य ग्रहणं नास्तीत्यर्थः। तदेवमाकारादिस्थस्यावयवस्य भेदेनाग्रहणादग्रहणम्। सन्ध्यक्षरस्थस्य त्वसावर्ण्यात्। ऋकारस्थस्तु रेफो भेदेन प्रतिभासाद्गृह्यत इति नुडादिसिद्धिः। अथवेति ; नरसिंहवद्वर्णान्तरत्वात् सादृश्याच्च प्रत्यभिज्ञानात् तत्त्वासिद्ध्या पृथगुपलब्धानां वर्णानां समुदाये नास्ति सत्त्वम्। समुदायवाचोयुक्तिरपि तत्र वर्णान्तरे न तात्त्विकी ; भ्रान्तिवशात्त्ववयवसद्भावाश्रयेण प्रवृत्ता।

उ.—भाष्ये सर्वेषामिति। यद्यपि कर्मणि निष्ठायामपीष्टार्थलाभस्तथापि वृजेर्भेदार्थकत्वस्यास्पष्टतया तद्व्यञ्जनाय भावे निष्ठामङ्गीकृत्याह—व्यपवर्ग इति। अवयवभेदकत्वादभिन्नत्वं न संभवति ; अत आह—अभिन्नेति। भेदसत्त्वे अभेदबुद्धिरपि न संभवति ; अत आह—एकत्वेति। अवयवभेदे 'एकं वनम्' इति बुद्धिरविरुद्धा ; फलतस्तमाह—समुदायस्येति। समुदायाश्रितैजादिसंज्ञाया अवयवे अप्रसङ्गादवयवस्य कार्यानुपदेशात् समुदायावयवयोस्तदा परामर्शायोगादाह—पृथग्भूतेति। वर्णाश्रयो विधिः वर्णविधिः। उक्तव्याख्याने भाष्यविरोधं निराह—व्यधिकरण इति। वार्तिकतात्पर्यमाह—न हीति। तद्बुद्धिः ; अवयवस्य पृथक्त्वबुद्धिः। तद्बुद्धाववयवेऽपि तत्कार्यं प्रवर्तेत इत्याह—माषा इति। लोके अप्रसिद्धार्थकत्वादाह—सामिधेनीति। ऋचाम् ; अग्निसमिन्धनार्थानाम्। तर्हि सप्तदशत्वस्य काष्ठे कथं प्रयोगः? अत आह—साहचर्यादिति ; काष्ठाधानसाधनत्वं साहचर्यम्। अजहल्लक्षणया सामिधेन्यः काष्ठानि चाभिधीयन्ते ; केवलकाष्ठान्येव वा, लक्ष्यस्यापि विध्य-

वरोधात्। तेन सप्तदशारत्निरिति भाष्यस्य संगतिः। सप्तदशारत्निकाष्ठाग्रहणे हेतुमाह—तत्रेति। असंभवसिद्धये वेद्याः काष्ठादल्पत्वमाह—अथेति। अर्धचतुर्था हस्ता यस्याः सा; सार्धहस्तत्रय-परिमितेत्यर्थः। असंभवदोषतौल्यात् कल्पान्तरानुत्थानमाशङ्क्य हस्तापेक्षया अल्पपरिमाण-तया भ्रान्त्या तदुत्थानमाह—अल्पेति। अव्यपवृक्तमिति नपुंसकैकवचनान्तस्य लिङ्गसंख्यान्तर-युक्तैर्गवादिभिः सामानाधिकरण्यायोगं परिहर्तुमाह—व्यपवर्गस्येति। अर्थाभावेऽव्ययीभावः। हेतुतृतीयायाः "तृतीयासप्तम्योः" इत्यमादेश इत्यर्थः। एचोऽत्रयवव्यपवर्गाभावादिह संध्यक्षर-मैचूपरमित्याह—ऐ औ इति। व्यपवर्गे अनुभवः प्रमाणमित्याह—स्फुट इति। ननु विवृततरमिति भाष्यमुद्वार्तिकम्; अत आह—अकारस्येति। स्वतन्त्राकारव्यावर्तकतया सन्ध्यक्षरेष्विति विशेषणसामर्थ्यादपि वार्तिककृतः प्रकर्षोऽभिप्रेत इति भावः। प्रकर्षगतेः फलमाह—तत्रेति; प्रकर्षाश्रये सतीत्यर्थः। ग्रहणपक्षोक्तदोषं परिहरन् तदङ्गीकारप्रयोजन-माह—तदेवमिति। असावर्ण्यात्; अग्रहणमित्यनुषङ्गः। ऋकारस्य इति प्रयोजनकथनम्। आदिना लादेशत्वग्रहः। उक्तयुक्तिं स्मारयति—नरसिंहवदिति। प्रत्यभिज्ञानमन्यथयति—सादृश्यादिति। तत्त्वासिध्या; अत्वासिध्या। ननु सन्ध्यक्षराणीति प्रसिध्या समुदायत्वं स्यात्; अत आह—समुदायेति। तत्र; सन्ध्यंशेषु।

**भा.—अथवा पुनर्न गृह्यन्ते।**

**वा.—अग्रहणं चेन्नुड्विधिलादेशविनामेषु ऋकारग्रहणम्।**

**भा.—अग्रहणं चेन्नुड्विधिलादेशविनामेषु ऋकारग्रहणं कर्तव्यम्। "तस्मान्नुड् द्विहलः" 'ऋकारे च' इति वक्तव्यम्; इहापि यथा स्यात्—आनृधतुः, आनृधुरिति। यस्य पुनर्गृह्यन्ते "द्विहलः" इत्येव तस्य सिद्धम्। यस्यापि न गृह्यन्ते तस्याप्येष न दोषः। द्विहल्ग्रहणं न करिष्यते, 'तस्मान्नुड् भवति' इत्येव। यदि न क्रियते, आटतुः आटुरित्यत्रापि प्राप्नोति। अश्नोतिग्रहणं नियमार्थं भविष्यति अश्नोतेरे-वावर्णोपधस्य नान्यस्यावर्णोपधस्येति। लादेशे च ऋकारग्रहणं कर्तव्यम्। "कृपो रो लः" 'ऋकारस्य च' इति वक्तव्यम्; इहापि यथा स्यात्—क्लृप्तः क्लृप्तवानिति। यस्य पुनर्गृह्यन्ते र इत्येव तस्य सिद्धम्। यस्यापि न गृह्यन्ते तस्याप्येष न दोषः। ऋकारोऽप्यत्र निर्दिश्यते। कथम्? अविभक्तिको निर्देशः—कृप उः रः लः, कृपो रो ल इति। अथवा**

उभयतः स्फोटमात्रं निर्दिश्यते, रश्रुतेर्लश्रुतिर्भवतीति। विनाभे ऋकारग्रहणं कर्तव्यम्। "रषाभ्यां नो णः समानपदे" 'ऋकाराच्च' इति वक्तव्यम्। इहापि यथा स्यात्—मातॄणां पितॄणामिति। यस्य पुनर्गृह्यन्ते "रषाभ्याम्" इत्येव तस्य सिद्धम्। न सिध्यति। यत्तद्रेफात्परं भक्तेस्तेन व्यवहितत्वान्न प्राप्नोति। मा भूदेवम्; "अड्व्यवाये" इत्येव सिद्धम्। न सिध्यति। वर्णैकदेशास्ते वर्णग्रहणेन गृह्यन्ते, ये व्यपवृक्ता अपि वर्णा भवन्ति। यच्चापि रेफात्परं भक्तेर्न तत् क्वचिदपि व्यपवृक्तं दृश्यते। एवं तर्हि योगविभागः करिष्यते—"रषाभ्यां नो णः समानपदे" ततः "व्यवाये"। व्यवाये च रषाभ्यां नो णो भवतीति। ततः—"अट्कुप्वाङ्नुम्भिः" इति। इदमिदानीं किमर्थम्? नियमार्थम्—'एतैरेवाक्षरसमाम्नायिकैर्व्यवाये, नान्यैः' इति। यस्यापि न गृह्यन्ते तस्याप्येष न दोषः। आचार्यप्रवृत्तिर्ज्ञापयति भवत्यृकारान्नो णत्वमिति; यदयं क्षुभ्नादिषु नृनमनशब्दं पठति। नैतदस्ति ज्ञापकम्। वृद्ध्यर्थमेतत् स्यात्—नार्नमनिः। यत् तर्हि तृप्नोतिशब्दं पठति। यच्चापि नृनमनशब्दं पठति। ननु चोक्तं वृद्ध्यर्थमेतत् स्यात्। बहिरङ्गा वृद्धिः, अन्तरङ्गं णत्वम्। "असिद्धं बहिरङ्गमन्तरङ्गे"। अथवा उपरिष्टाद्योगविभागः करिष्यते—"ऋतः"; नो णो भवति। ततः—"छन्दस्यवग्रहात्"; ऋत इत्येव।

प्र.—अश्नोतेरेवेति; सामान्येनावर्णोपधो निवर्त्यते; न त्वश्नातिरेव, सामान्यापेक्षत्वान्नियमज्ञापकस्य। अविभक्तिक इति; तत्र ऋकारनिर्देशसामर्थ्याद्विभागं प्रकल्प्यादेशो विधीयते। स्फोटमात्रमिति; जातिस्फोट इत्यर्थः। ततश्चान्तर्भूतानन्तर्भूतरेफलकारव्यङ्ग्यं सामान्यं स्थान्यादेशभावेनाश्रीयते। यत्तदिति; रेफाद्भक्तेरिति समानाधिकरणे पञ्चम्यौ। अड्व्यवाये इति; ऋकारेण यथा दीर्घो गृह्यते एवमृकारभागोऽपीत्यर्थः। न सिध्यतीति; तस्य भागस्य स्फुटप्रतिभासाविषयत्वाज्जात्यभिव्यक्तिहेतुत्वाभावाच्चेति भावः।

एतैरेवेति ; आकारादयोऽप्यकारादिभिः प्रत्यायितत्वादाक्षरसमाम्नायिकाः । भक्तिस्तु न प्रत्याय्या, न च प्रत्यायिकेति नियमेन न निवर्त्यते ।

उ॰—ननु विकरणविशेषनिर्देशादश्नोतेरेव निवृत्तिर्गम्यते, नावर्णोपधमात्रस्य ; अत आह—सामान्येति । ज्ञापकस्येति ; यथा सामान्यापेक्षं ज्ञापकं क्वचिदाश्रीयते तथा नियमोऽपि सामान्यनिवर्तक इत्यर्थः । अविभक्तिकनिर्देशेऽपि ऋकारे रेफावयवानङ्गीकारात् लत्वाप्राप्तिः ; अत आह—तत्रेति । स्फोटमात्रनिर्देशे ऋकारे रेफाभावात् कल्पयत इत्यत्रैव लत्वं स्यात्, न तु क्लृपिरित्यादौ ; अत आह—जातीति । व्यक्तिनिर्देशे तत्र पारमार्थिकरेफव्यक्तेरभावात् लत्वासिद्धिः ; जातिनिर्देशे तु जातेरेकत्वान्निष्कृष्टरेफव्यक्तेरिव काल्पनिकरेफव्यक्तेरपि जात्यभिव्यञ्जकतासंभवाज्जातिद्वारा सर्वत्र लत्वसिद्धिरित्यभिप्रेत्याह—ततश्चेति । रश्रुतेर्लश्रुतिरित्यत्र र इति श्रुतिर्ध्वनिमात्रं व्यञ्जकं यस्या जातेः इति बहुव्रीहिरित्याह—रेफलकारेति । रेफात् परं भक्तेः परमित्यन्वयशङ्कां भक्तेरित्यस्य षष्ठ्यन्तत्वशङ्कां च वारयति—समानाधिकरणे इति । भक्तिर्भाग एकदेशः । रेफात् परस्य ऋकारभागस्याच्त्वाभावात् णत्वाभावमाशङ्क्याह—ऋकारेणेति ; ऋकारगतरेफस्येव भागान्तरस्यापि व्यपवर्गसंभवादच्कार्यसिद्धिमाशङ्क्य व्यपवृक्तस्य समुदायादन्यत्रोपलभ्यमानत्वमपि कार्यप्राप्तौ निमित्तमिति वर्णा अपीति भाष्यसूचितमाह—तस्येति । तद्भागस्य पृथग्वर्णत्वाभावेऽपि अच्त्वजात्यभिव्यञ्जकत्वमस्तु ; अत आह—जातीति । स्फुटप्रतिभासाविषयत्वमेवानभिव्यञ्जकत्वेऽपि हेतुः । नन्वनाक्षरसमाम्नायिकानामकारादीनां व्यवायेऽपि णत्वसिद्ध्ये योगविभागस्य चरितार्थत्वात् भक्तिव्यवाये णत्वस्यासिद्धिः ; अत आह—अकारादयोऽपीति । न प्रत्यायिका ; अचां मध्येऽनुपदेशात् । न प्रत्याय्या ; वर्णत्वाभावेन सवर्णत्वाप्रसक्तेरित्यर्थः । भाष्ये वृध्द्यर्थमिति ; नार्नमनिरित्यत्र रेफस्य व्यपवृक्तत्वात् णत्वप्रसङ्गे तन्निवृत्त्यर्थः क्षुभ्नादिपाठ इत्यर्थः । भाष्ये बहिरङ्गेति ; प्रत्ययाश्रयवृद्धिर्बहिरङ्गा ; प्रकृतिमात्राश्रयं णत्वमन्तरङ्गम् । भाष्ये उपरिष्टात् ; "रषाभ्याम्" इत्यत उपरिष्टात् । भाष्ये योगविभागः ; "छन्दस्यृदवग्रहात्" इति सूत्रे ।

**वा.—प्लुतावैच इदुतौ ।**

**भा.—एतच्च वक्तव्यम् । यस्य पुनर्गृह्यन्ते "गुरोष्टेः" इत्येव प्लुत्या तस्य सिद्धम् । यस्यापि न गृह्यन्ते तस्याप्येष न दोषः । क्रियत एतन्न्यास एव ।**

**वा.—तुल्यरूपे संयोगे द्विव्यञ्जनविधिः ।**

**भा.—तुल्यरूपे संयोगे द्विव्यञ्जनाश्रयो विधिर्न सिध्यति—कुक्कुटः, पिप्पली, पित्तमिति । यस्य पुनर्गृह्यन्ते तस्य द्वौ**

**ककारौ, द्वौ पकारौ, द्वौ तकारौ। यस्यापि न गृह्यन्ते तस्यापि द्वौ ककारौ द्वौ पकारौ द्वौ तकारौ। कथम्? मात्राकालोऽत्र गम्यते। न च मात्रिकं व्यञ्जनमस्ति। अनुपदिष्टं सत् कथं शक्यं विज्ञातुम्? असच्च कथं शक्यं प्रतिपत्तुम्? यद्यपि तावदत्रैतच्छक्यते वक्तुं यत्रैतन्नास्ति "अण् सवर्णान् गृह्णाति" इति। इह तु कथम्—सय्ँय्यन्ता, सव्ँव्वत्सरः, यल्ँल्लोकम्, तल्ँल्लोकमिति? यत्रैतदस्ति "अण् सवर्णान् गृह्णाति" इति। अत्रापि मात्राकालौ गृह्येते। न च मात्रिकं व्यञ्जनमस्ति। अनुपदिष्टं सत् कथं शक्यं विज्ञातुम्? असच्च कथं शक्यं प्रतिपत्तुम्?**

प्र.—गुरोष्टेरिति; ऐकारो गुरुः; तस्य टेरिति सिद्धम्। तन्त्रन्यायाश्रयणाच्च गुरोरपि स्थाने प्लुतो भवति—देवद३त्तेति। क्रियते न्यास एवेति; अवश्यकर्तव्यतां दर्शयति, व्यपवृक्तत्वेऽपि भागयोर्विवृततरत्वात् प्रयत्नभेदादिकारोकाराभ्यामग्रहणादच्त्वाभावात्। तुल्यरूप इति; तुल्यरूपावयत्वात् संयोगस्तुल्यरूपः। तस्यैकवर्णत्वं पूर्वपक्षे। सिद्धान्ते तु वर्णद्वयरूपता। आशूच्चारणात्तु भ्रान्तमेकत्वज्ञानमिति शिष्टसमाचारः। अत्रापीति; सानुनासिकनिरनुनासिकौ द्वावत्र वर्णावित्यर्थः।

उ.—गुरोष्टेरिति सामानाधिकरण्ये ऐतिकायन इत्यत्र ऐजवयवस्य गुरुत्वाभावात् प्लुतासिद्धिमाशङ्क्याह—ऐकार इति। व्यधिकरणे षष्ठ्याविति भावः। नन्वेवं देवदत्तेत्यत्र केवलगुरोः प्लुतो न स्यात्; अत आह—तन्त्रेति। "गुरोरनृतः" इत्यत्र गुरोरिति तन्त्रेणोच्चारितम्; तत्र टेरित्यनुवृत्य गुरोष्टेः प्लुत इत्येकोऽर्थः। तदननुवृत्य गुरोः प्लुत इत्यपर इत्यर्थः। सूत्रारम्भ एव दोष इत्याशङ्किते तदारम्भेणैव समाधानमयुक्तमित्याशङ्क्य त्वयाप्यवश्यं वक्तव्यमेवेत्येवंपरं भाष्यमित्याह—अवश्येति। तामेव व्यनक्ति—व्यपवर्गेऽपीति। भागयोरिति; "ऐचोश्चोत्तरभूयस्त्वात्" इत्युक्तेः। विजातीयसंयोगेन सजातीयसंयोगस्य तुल्यरूपत्वाभावादाह—तुल्यरूपेति। ननु द्विव्यञ्जनत्वमायातम्; अत आह—तस्येति। भाष्ये द्विव्यञ्जनाश्रयो विधिः; संयोगसंज्ञा। तदभावे "संयोगे गुरु" इति गुरुसंज्ञाया अभावात् प्लुतो न स्यादित्यर्थः। अक्षरसमाम्नाये ककारादेरण्त्वाभावेन सरूपसंयोगावयवभूतककाराद्यग्राहकत्वेनावयवककारादेर्हल्त्वाभावेन एकवर्णवादे संयोगसंज्ञा न प्राप्नोतीति दोषसंभवेऽपि सय्ँय्यन्तेत्यादौ सरूपसंयोगावयवस्यापि यकारादेराक्षरसमाम्नायिकेन यकारादिना ग्रहणात् द्विव्यञ्जनसिद्धिरित्येकवर्णत्वाद्युदाहरणान्तरं दोषरहितमाशङ्कते भाष्ये—

यद्यपीति । सरूपसंयोगे नानावर्णताया अप्रतीतेरेकत्वप्रतीतेः कथं भ्रान्तता ? अत आह—शिष्टेति । शब्दस्वरूपे शिष्टव्यवहार एव प्रमाणमित्यर्थः । अत्रापीति भाष्यं स्वरूपभेदस्याप्युपलक्षणमित्याशयेनाह – सानुनासिकेति ।

## हयवरट् ॥ ५ ॥

**भा —सर्वे वर्णाः सकृदुपदिष्टाः । अयं हकारो द्विरुपदिश्यते पूर्वश्चैव परश्च । यदि पुनः पूर्व एवोपदिश्येत पर एव वा कश्चात्र विशेषः ?**

**वा.—हकारस्य परोपदेशे अड्ग्रहणेषु हग्रहणम् ।**

**भा. हकारस्य परोपदेशे अड्ग्रहणेषु हग्रहणं कर्तव्यम् । "आतोऽटि नित्यम्" "शश्छोऽटि" "दीर्घादटि समानपादे" हकारे चेति वक्तव्यम् । इहापि यथा स्यात् —महां हि सः ।**

**वा.—उत्वे च ।**

**भा.—उत्वे च हकारग्रहणं कर्तव्यम् । "अतो रोरप्लुतादप्लुते" "हशि च" । हकारे चेति वक्तव्यम् । इहापि यथा स्यात्—'पुरुषो हसति, ब्राह्मणो हसति' इति । अस्तु तर्हि पूर्वोपदेशः ।**

**वा. —पूर्वोपदेशे कित्त्वक्सेड्विधयो झल्ग्रहणानि च ।**

**भा.—यदि पूर्वोपदेशः, कित्त्वं विधेयम्—स्निहित्वा, स्नेहित्वा; सिस्निहिषति, सिस्नेहिषति; "रलो व्युपधाद्धलादेः" इति कित्त्वं न प्राप्नोति । क्सविधि; क्सश्च विधेयः- अधुक्षत्, अलिक्षत्, "शल इगुपधादनिटः क्सः" इति क्सो न प्राप्नोति । इड्विधिः; इट् च विधेयः—रुदिहि, स्वपिहि । वलादिलक्षण इट् न प्राप्नोति । झल्ग्रहणानि च; किम् ? अहकाराणि स्युः । तत्र को दोषः ? "झलो झलि" इतीह न स्यात्—अदाग्धाम्, अदाग्धम् । तस्मात् पूर्वश्चैवो-**

**पदेष्टव्यः परश्च । यदि च किंचिदन्यत्राप्युपदेशे प्रयोजनमस्ति तत्राप्युपदेशः कर्तव्यः ।**

प्र.— पूर्वश्चेति ; पूर्वपरोच्चारणक्रियाभेदादेकस्यैव हकारस्य पूर्वापरव्यपदेशः । शश्छोऽटीति ; हकारपरस्य शकारस्यासंभवात् प्रसङ्गोच्चारितमेतत् । उत्वे चेति; अशत्वार्थमपि वक्तव्यम् 'भो हसति' इति रोर्यत्वार्थम् । यदि च किंचिदिति; प्रयोजनार्थोऽपि वर्णानामुपदेशो न स्वरूपप्रतिपत्त्यर्थः ।

उ.—एकत्वे पूर्वश्च परश्चेत्ययुक्तम्; भेदे द्विरूपदिश्यत इत्ययुक्तम्; अत आह—पूर्वेति । व्यक्त्यैक्यमेव विवक्षितम्; पूर्वादिव्यपदेशश्चौपचारिक इत्यर्थः । "शश्छोऽटि" इत्यत्र हकारग्रहणस्य प्रयोजनं नास्तीत्याह—हकारेति । हकारः परो यस्मात् तस्येत्यर्थः । अड्ग्रहणं वार्तिके उपलक्षणार्थमित्याह—अशत्वार्थमिति । भो हसतीति; "विभाषा भगवत्' इति रुत्वे "भोभगो" इति यकारः । "हलि सर्वेषाम्" इति यलोपः । भाष्ये—महां हि स इति; "आतोऽटि" "दीर्घादटि" इति द्वयोरुदाहरणम् । भाष्ये—झशि चेति; तत्स्थाने यशि चेति प्रत्याहारान्तरं कृत्वा हकारे चेति वक्तव्यमित्यर्थः । भाष्ये—अदाग्धामिति; "झलो झलि" इति सलोपे कर्तव्ये घत्वस्यासिद्धत्वात् हकारस्य झल्त्वमाश्रयणीयमित्यर्थः । हकारस्य प्रत्याहारान्तरे प्रयोजनाभावात् 'यदि किंचित्' इत्यधिकमित्याशङ्क्य प्रयोजनवशात् हकारस्य द्विरुपदेशः, अन्येषां सकृदेवेति वैषम्यकथनार्थं तदित्याह—प्रयोजनार्थ इति ।

**भा.—इदं विचार्यते—अयं रेफो यकारवकाराभ्यां पूर्व एवोपदिश्येत—हरयवडिति, पर एव वा यथान्यासमिति । कश्चात्र विशेषः ?**

**रेफस्य परोपदेशोऽनुनासिकद्विर्वचनपरसवर्णप्रतिषेधः ।**

**भा.—रेफस्य परोपदेशोऽनुनासिकद्विर्वचनपरसवर्णानां प्रतिषेधो वक्तव्यः । अनुनासिकस्य—स्वर्नयति, प्रातर्नयति । "यरोऽनुनासिकेऽनुनासिको वा" इत्यनुनासिकः प्राप्नोति । द्विर्वचनस्य—मद्रह्रदः, भद्रह्रदः । यर इति द्विर्वचनं प्राप्नोति । परसवर्णस्य—कुण्डं रथेन, वनं रथेन । "अनुस्वारस्य ययि" इति परसवर्णः प्राप्नोति ।**

**वा.—पूर्वोपदेशे कित्त्वप्रतिषेधो व्यलोपवचनं च ।**

**भा.—यदि पूर्वोपदेशः कित्त्वं प्रतिषेध्यम्—देवित्वा, दिदेविषति । "रलो व्युपधात्" इति कित्त्वं प्राप्नोति । नैष दोषः । नैवं विज्ञायते—"रलः व्युपधात्" इति । किं तर्हि ? "रलः अव्व्यपधात् इति । किमिदमव्व्युपधादिति ? अवकारान्ताद् व्युपधात् अव्व्युपधादिति । व्यलोपवचनं च । व्योश्च लोपो वक्तव्यः—गौधेरः, पचेरन्, यजेरन्, 'जीवे रदानुः'—जीरदानुः । वलीति व्यलोपो न प्राप्नोति । नैष दोषः; रेफोऽप्यत्र निर्दिश्यते—"लोपो व्योर्वलि" इति रेफे च वलि चेति । अथवा पुनरस्तु परोपदेशः । ननु चोक्तम्—"रेफस्य परोपदेशेऽनुनासिकद्विर्वचनपरसवर्णप्रतिषेधः" इति । अनुनासिकपरसवर्णयोस्तावत् प्रतिषेधो न वक्तव्यः । रेफोष्मणां सवर्णा न सन्ति । द्विर्वचनेऽपि; नेमौ रहौ कार्यिणौ द्विर्वचनस्य । किं तर्हि ? निमित्तमिमौ रहौ द्विर्वचनस्य । तद्यथा—ब्राह्मणा भोज्यन्तां माठरकौण्डिन्यौ परिवेविषातामिति । नेदानीं तौ भुञ्जाते ।**

प्र.—इदमिति ; उभयत्रापि दोषप्रयोजनसद्भावात् प्रश्नः । स्वर्नयतीति ; णकारोऽत्र प्राप्नोति । न ह्यत्र सवर्णग्रहणमस्ति । मद्रह्रद इति ; द्विर्वचने कृते तस्यासिद्धत्वात् "रो रि" इति रेफलोपो नास्ति, "हलो यमाम्" इति लोपस्तु पाक्षिक इति पक्षे रेफद्वयश्रवणप्रसङ्गः । कुण्डं रथेनेति ; अनुनासिकेनैव परसवर्णेन भाव्यमिति नियमाभावाद्रेफः प्राप्नोति । तस्य चासिद्धत्वात् "रो रि" इति लोपो नास्ति । रेफोष्मणामिति; अनुनासिकपरसवर्णविधाने हि स्थानेऽन्तरतमपरिभाषोपस्थानात् दोषाभावः । न हि रेफस्य णकारोऽन्तरतमो नाप्यनुस्वारस्य रेफः । नेमौ रहाविति ; हकारवद्रेफोऽपि न कार्यीत्यर्थः । तत्रैकवाक्यतायां सामान्यविशेषविध्योः लोकव्यवहारादेव शब्दार्थसंबन्धपरिज्ञानात् सामान्यविधेः विशेषविधिर्बाधकः । प्रत्यक्षश्च विशेषविधिः, सामान्यविधिस्त्वनुमेय इति रेफस्य कार्यित्वं निमित्तत्वेन बाध्यते । दध्युदकादौ तु स्थानित्वेन निमित्तत्वमिकः "तस्मादित्युत्तरस्य"

इत्यादेर्ज्ञापकान्न बाध्यते। लक्ष्यस्थित्यपेक्षणाद्वा बाध्यबाधकभावो न। क्वचिदपेक्षा नास्ति; यथा—चिचीषतीति दीर्घत्वद्विर्वचनयोः।

उ.—काकदन्तविचारतुल्यतां वारयति—उभयथेति। प्रश्नः; विचारः। रेफस्य यवल-वत् सवर्णानुनासिकाभावात् कथं प्राप्तिः? अत आह—णकारोऽत्रेति। न हीति; 'सवर्णोऽनुनासिकः' इति नास्ति; आन्तरतम्यं च स्थानतोऽपि संभवतीत्यर्थः। द्वित्वेऽपि लोपेन रेफद्वयाभावात् नानिष्टमित्याशङ्क्याह—द्विर्वचन इति; "अचो रहाभ्याम्" इत्य-नेन। पाक्षिक इति; "झयो होऽन्यतरस्याम्" इत्यतोऽनुवृत्तेरिति भावः। ननु अनुस्वारस्यान्तरतमपरसवर्णाभावात् तदप्राप्तिः; अत आह—अनुनासिकेनैवेति। व्यक्ति-पक्षे विधानसामर्थ्यादन्तरतमपरिभाषा न प्रवर्तत इत्यर्थः। "रेफोष्मणाम्" इत्यत्र रेफस्यान्यैः सह सावर्ण्यं निषिध्यते, न तु स्वेनेति रेफः प्राप्नोति। तत्र रेफलोपे तन्निमित्तदीर्घश्रवणप्रसङ्गो दोष इति केषांचित् भ्रमं वारयति—तस्य चेति। अव्व्युपधादिति भाष्ये अव्व्युधादिति द्विवकारको निर्देशः। तेन फलितमाह भाष्ये—अवकारान्तादिति। "यरोऽनुनासिके" इत्यत्र सवर्णग्रहणाभावादनुस्वारस्येत्यत्र रेफस्य रेफं प्रति सवर्णत्वात् सवर्णत्वाभावेन परिहारोऽसंगत इत्याशङ्क्य सवर्णशब्देन तुल्यस्थानप्रयत्नोऽन्तरतमो विवक्षित इत्याह—अनुनासिकेति। अन्तरतमपरिभाषोपस्थानेऽपि प्रमाणतः सदृशो रेफोऽनुस्वारस्य; स्थानप्रयत्नाभ्यां सदृशो णकारो रेफस्य किं न स्यादित्याशङ्क्य जातिपक्षे स्थानप्रमाणप्रयत्नैरन्तरतमे सत्येकदेशान्तर्ये लक्षणं न प्रवर्तते, तम-ग्रहणादित्याशयेनाह—न हीति। हकारग्रहणं प्रकृतानुपयोगात् दृष्टान्तार्थमित्याह—हकार-वदिति। न कार्यि; किंतु निमित्तमेव। ननु दध्यूलतकादिवत् निमित्तकार्यित्वयोर-विरोधः; अत आह—तत्रेति। एकवाक्यतायाम्; एकत्र प्राप्तौ सत्याम्। वैपरीत्य-शङ्कां वारयितुं विशेषविधेर्बाध्यत्वे च प्रयोजनमाह—प्रत्यक्ष इति। तर्हि "इको यणचि" इत्यत्र विशेषविहितेन स्थानित्वेन अचीति सामान्यविहितं निमित्तत्वं बाध्येत; अत आह—दधीति। उकारे परत इकारस्य यणुच्चारणं ज्ञापकम्। आदिना "छन्दस्युभयथा" इत्यादिपरिग्रहः। तर्हि तस्मादेव परिग्रहात् लोकव्यवहारः क्वापि नाश्रयणीयः; अत आह—लक्ष्यसिद्धीति। क्वचिदिति; क्वचिदपेक्ष्यत एवेत्यर्थः। दीर्घत्वेति; धातुमात्रस्य द्विर्वचनं सामान्यम्। अजन्तानां दीर्घत्वं विशेषः। दीर्घत्वेन द्विर्वचनं न बाध्यते।

**भा.—इदं विचार्यते—इमे अयोगवाहा न क्वचिदुपदिश्यन्ते श्रूयन्ते च। तेषां कार्यार्थ उपदेशः कर्तव्यः। के पुनरयोग-वाहाः? विसर्जनीयजिह्वामूलीयोपध्मानीयानुस्वारनासिक्ययमाः। कथं पुनरयोगवाहाः? यदयुक्ता वहन्ति, अनुपदिष्टाश्च श्रूयन्ते। क्व पुनरेषामुपदेशः कर्तव्यः।**

वा.—अयोगवाहानामट्सु णत्वम्।

भा.—अयोगवाहानामट्सूपदेशः कर्तव्यः। किं प्रयोजनम्? णत्वम्। उरःकेण, उरᳲकेण; उरःपेण, उरᳲपेण। "अड्व्यवाये" इति णत्वं सिद्धं भवति।

वा.—शर्षु जश्भावषत्वे।

भा.—शर्षूपदेशः कर्तव्यः। किं प्रयोजनम्? जश्भावषत्वे। अयमुब्जिरुपध्मानीयोपधः पठ्यते। तस्य जश्त्वे कृते उब्जिता उब्जितुमित्येतद् रूपं यथा स्यात्। यद्युब्जिरुपध्मानीयोपधः पठ्यते उब्जिजिषतीत्युपध्मानीयादेरेव द्विर्वचनं प्राप्नोति। दकारोपधे पुनः "न न्द्राः संयोगादयः" इति प्रतिषेधः सिद्धो भवति। यदि दकारोपधः पठ्यते, का रूपसिद्धिः उब्जिता, उब्जितु-मिति? असिद्धे 'भ उद्जेः'। इदमस्ति—"स्तोः श्चुना श्चुः" इति; ततो वक्ष्यामि 'भ उद्जेः' - उद्जेः श्चुना संनिपाते भो भवतीति। तत्तर्हि वक्तव्यम्। न वक्तव्यम्; निपातनादेव सिद्धम्। किं निपातनम्? "भुजन्युब्जौ पाण्युपतापयोः" इति। इहापि तर्हि प्राप्नोति—अभ्युद्गः, समुद्ग इति। अकुत्वविषये तन्निपातनम्। अथवा नैतदुब्जे रूपम्। गमेरेतद् द्व्युपसर्गात् डो विधीयते। अभ्युद्गतोऽभ्युद्गः, समुद्गतः समुद्ग इति।

षत्वं च प्रयोजनम्—सर्पिःषु, धनुःषु। "शर्व्यवाये" इति षत्वं सिद्धं भवति। "नुंविसर्जनीयशर्व्यवायेऽपि" इति विसर्ज-नीयग्रहणं न कर्तव्यं भवति। नुमश्चापि तर्हि ग्रहणं शक्यमकर्तुम्। कथं सर्पींषि, धनूंषि? अनुस्वारे कृते "शर्व्यवाये" इत्येव सिद्धम्। अवश्यं नुमो ग्रहणं कर्तव्यम्; अनुस्वारविशेषणं नुम्ग्रह-णम्—नुमो योऽनुस्वारस्तत्र यथा स्यात्; इह मा भूत्—पुंस्विति। अथवा अविशेषेणोपदेशः कर्तव्यः। किं प्रयोजनम्?

वा.—अविशेषेण संयोगोपधासंज्ञाऽलोन्त्यद्विर्वचन-स्थानिवद्भावप्रतिषेधाः।

भा.—अविशेषेण संयोगसंज्ञा प्रयोजनम्—उ३ब्जक। "हलोऽनन्तराः संयोगः" इति संयोगसंज्ञा; "संयोगे गुरु" इति गुरुसंज्ञा, "गुरोः" इति प्लुतो भवति।

उपधासंज्ञा च प्रयोजनम्—दुष्कृतं, निष्कृतं, दुष्पीतं, निष्पीतम्। "इदुदुपधस्य चाप्रत्ययस्य" इति षत्वं सिद्धं भवति। नैतदस्ति प्रयोजनम्। न इदुदुपधग्रहणेन विसर्जनीयो विशेष्यते। किं तर्हि? सकारो विशेष्यते—इदुदुपधस्य सकारस्य यो विसर्जनीय इति। अथवा उपधाग्रहणं न करिष्यते; इदुद्भ्यां तु परं विसर्जनीयं विशेषयिष्यामः—इदुद्भ्यामुत्तरस्य विसर्जनीयस्येति।

अलोऽन्त्यविधिश्च प्रयोजनम्—वृक्षस्तरति, प्लक्षस्तरति। "अलोऽन्त्यस्य विधयो भवन्ति" इत्यलोऽन्त्यस्य सत्वं सिद्धं भवति। एतदपि नास्ति प्रयोजनम्। "निर्दिश्यमानस्यादेशा भवन्ति" इति विसर्जनीयस्यैव भविष्यति।

द्विर्वचनं प्रयोजनम्—उरꣳꣳकः, उरꣳꣳपः; "अनचि च" अच उत्तरस्य यरो द्वे भवत इति द्विर्वचनं सिद्धं भवति।

स्थानिवद्भावप्रतिषेधश्च प्रयोजनम्। यथेह भवति—उरःकेण, उरःपेणेति "अड्व्यवाये" इति णत्वम्, एवमिहापि स्थानिवद्भावात् प्राप्नोति—व्यूढोरस्केन, महोरस्केनेति। तत्र "अनल्विधौ" इति प्रतिषेधः सिद्धो भवति।

प्र०—इदमिति; विधानादेषां साधुत्वं स्यात्। प्रत्याहारप्रतिबद्धं तु कार्यं न प्राप्नोति। के पुनरिति; तत्स्वरूपप्रश्नः। कथमिति; प्रवृत्तिनिमित्तप्रश्नः। अयुक्ता इत्यस्यैव हेतुकथनम् अनुपदिष्टाश्चेति। अयुक्ताः; प्रत्याहारलक्षणेन; पाठाभावादसंबद्धा इत्यर्थः। उपदेशो द्विविधः—पाठः, ग्रहणकशास्त्रेण प्रत्यायनं च। स द्विविधोऽप्येषां नास्तीत्यर्थः। चशब्दो हेतौ; यतोऽनुपदिष्टास्ततोऽयुक्ता इत्यर्थः। क्वचित्तु चशब्दो न पठ्यते। शर्ष्विति; शर्षु पाठे झल्त्वमिति "झलां जश् झशि" इति जश्त्वं सिध्यति। उपध्मानीयादेरिति; यदि द्विर्वचने पूर्वत्र कर्तव्ये जश्त्वमसिद्धम्, अथापि "पूर्वत्रासिद्धीयमद्विर्वचने" इति सिद्धम्, सर्वथोबिब्जिषतीति प्राप्नोति। निपातनादिति। द्विर्वचनं कथम्? निपातनाद्वाक्यशेषोऽनुमीयते। असिद्धप्रकरणे "स्तोः श्चुः" इत्यत्र "उदूजेर्भः" इति। तत्र "नन्द्राः" इति दकारस्य

द्विर्वचननिषेधः कर्तव्यो न तु द्विर्वचनमिति "पूर्वत्रासिद्धीयमद्विर्वचने" इत्यस्याप्रवृत्त्या भत्वस्यासिद्धत्वादिष्टद्विर्वचनसिद्धिः। अथापि न वाक्यशेषानुमानं निपातनमेव प्रतिपादकं, तथापि दकारोपदेशसामर्थ्याद् द्विर्वचने कृते दकारस्य बत्वं प्रवर्तते। अकृत्वाविषय इति।; विशिष्टविषयमनुमानमित्यर्थः। अवश्यमिति; अनुस्वारस्य शत्वात् तद्व्यवाये षत्वे सिद्धे नुंग्रहणं नियमार्थम्—नुमो योऽनुस्वारस्तत्रैव यथा स्यात्, अन्यत्र मा भूत्—पुंस्विति। अविशेषेणेति; प्रयोजनविशेषमनपेक्ष्य सकलप्रयोजनोद्देशेन यत्र यत्र प्रदेशे प्रयोजनसिद्धिस्तत्र तत्रोपदेशः कार्य इत्यर्थः। उरुब्जक इति; उपध्मानीयस्य जश्त्वे कृते संयोगसंज्ञायां तस्यासिद्धत्वात् संयोगसंज्ञाभावात् गुरुत्वाभावात् प्लुतो न स्यात्। महोरस्केनेति; "पूर्वत्रासिद्धे न स्थानिवत्" इति निषेधः "अचः परस्मिन् पूर्वविधौ" इत्यस्य, न तु "स्थानिवदादेशः" इत्यस्य।

उ.—साधुत्वार्थमप्युपदेष्टव्यत्वात् कार्यार्थमिति विशेषकथनमयुक्तम्; अत आह—विधानादिति। विधानादेव प्रयोगरूपकार्यस्य सिद्धत्वात् तद्वशेनाह—प्रत्याहारेति। प्रश्नद्वयस्यापुनरुक्तमर्थमाह—तत्स्वरूपेति। प्रवृत्तिनिमित्तद्वयशङ्कां वारयति—अयुक्ता इत्यस्यैवेति। केनायुक्ताः? अत आह—प्रत्याहारेति। अनुपदेशस्य कथं हेतुत्वम्? अत आह—पाठेनि। तदपठितानामाकारादीनामपि प्रत्याहारलक्षणेनासंबद्धत्वं स्यात्; अत आह—ग्रहणकशास्त्रेणेति। निमित्तान्तरपरामर्शाभावे चशब्दो न युक्तः; अत आह—चशब्द इति। पुस्तकान्तरे चशब्दाभावादयमेवार्थ इत्याह—क्वचिदिति। भाष्ये उरःकेणेत्युदाहरणद्वयं विसर्जनीयस्य सकारप्रयोश्च। जश्भावस्य शर्निमित्तकत्वाभावादप्रयोजनत्वम्; अत आह—शर्ष्विति। भाष्ये उब्जितेति। जश्त्वेनौष्ठ्यस्योपध्मानीयस्यौष्ठ्यो बकारः। ननु "पूर्वत्रासिद्धमद्विर्वचने" इतिवचनात् द्वित्वे कर्तव्ये जश्त्वस्य सिद्धत्वात् बकारादेरिति वक्तव्यम्, न तूपध्मानीयादेरिति; तत्राह—यदीति। उभयथाप्यनिष्टरूपपरं भाष्यम्, नोपध्मानीयस्यैव द्वित्वनियमपरमित्यर्थः। उबिब्जिषतीति; उपध्मानीयोपधत्वे बकारादेर्द्वित्वे हलादिःशेषेण जलोपे "अभ्यासे चर्च" इत्यभ्यासस्य जश्त्वे "झलां जश् झशि" इति परस्यापि जश्त्वे एतदेव रूपमित्यर्थः। भाष्ये दकारोपधे पुनरिति। तदुक्तम्—"उब्ज आर्जवे इत्येनमुपध्मानीयकोपधम्। प्राहुर्दोपधमित्येके बोपधं केचिदूचिरे"॥ इति।

भाष्ये यदि दकारेति; दकारस्य श्चुत्वेन जकारे उज्जितेति स्यात्, न उब्जितेति शङ्काभिप्रायः। वचनात् बत्वमाह—भाष्ये असिद्ध इति। निपातनेन दकारस्य भत्वे तस्यासिद्धत्वाभावात् "न न्द्राः" इति निषेधाप्राप्तेः उबिब्जिषतीत्यनिष्टरूपप्रसङ्गस्तदवस्थ इति

शङ्कते—द्विर्वचनं कथमिति। निपातनेनासिद्धविषये भत्वचनं ज्ञाप्यते; तेनेष्टद्विर्वचनसिद्धिरिति समाधत्ते—निपातनादिति। इष्टेति; जि इत्यस्यैव द्वित्वमिति उब्जिजिषतीति इष्टसिद्धिरित्यर्थः। निपातनाद् दस्य भत्वं प्रतीयते, न तु वाक्यशेषात्; अत आह—अथापीति। यदि दकारस्थानिकस्य भस्य द्विर्वचनं स्यात्तदा भकारोपधमेवोब्जधातुं पठेत्, न तु दकारोपधम् 'उदुज आर्जवे' इति। तथाच दकारपाठस्तत्स्थानिकस्य भस्य द्वित्वनिषेधार्थ एवेति द्वित्वे कृते भत्वं प्रवर्तेत इत्यर्थः। अभ्युद्गः समुद्ग इति; गमे रूपमिति भावः। निपातनस्य सर्वत्रोद्जेरुपधाया भत्वज्ञापकत्वादकुत्वविषयत्वं कथम्? अत आह—विशिष्टेति। इष्टसिद्धये अकुत्वविषय एव भत्वानुमानमित्यर्थः। अनुस्वारमात्रव्यवाये षत्वे प्राप्ते नुमो ग्रहणं विशेषणार्थं स्यात्। तदेव कुतः? अत आह—अनुस्वारस्येति। अविशेषेणेत्यस्य सर्वप्रयोजनाय सर्वप्रत्याहारे चोद्देशः कर्तव्य इत्यर्थशङ्कां वारयति—प्रयोजनेति। जश्त्वे कृते जशो हल्त्वाज्जश्त्वार्थेन शर्पूपदेशेनैव सिद्धम्; अत आह—उपध्मानीयस्येति। भाष्ये इदुदुपधस्येति; इकारोकारोपधस्य यो विसर्जनीयस्तस्य कुप्वोः परतः षो विधीयते। विसर्जनीयस्याल्त्वाभावे तत्पूर्वस्योपधासंज्ञाया अभावान्निष्कृतमित्यादौ षत्वं न स्यादित्यर्थः। अलोऽन्त्यपरिभाषानुपस्थानेऽपि षत्वसिद्धिरित्याह भाष्ये—निर्दिश्यमानस्येति। "विसर्जनीयस्य सः" इति विसर्जनीयस्यैव सो भविष्यतीत्यर्थः। असिद्धकाण्डे सकारस्य स्थानिवद्भावाभावेन प्राप्त्यभावान्नेह प्रयोजनमित्यत आह—पूर्वत्रेति। व्यूढोरस्केन महोरस्केन; "सोऽपदादौ" इति विसर्जनीयस्य सः।

**भा.—किं पुनरिमे वर्णा अर्थवन्तः, आहोस्विदनर्थकाः?**

**वा.—अर्थवन्तो वर्णाः, धातुप्रातिपदिकप्रत्ययनिपातानामेकवर्णानामर्थदर्शनात्।**

**भा.—अर्थवन्तो वर्णाः। कुतः? धातुप्रातिपदिकप्रत्ययनिपातानामेकवर्णानामर्थदर्शनात्। धातव एकवर्णा अर्थवन्तो दृश्यन्ते 'एति, अध्येति, अधीते' इति। प्रातिपदिकान्येकवर्णान्यर्थवन्ति—'आभ्याम्, एभिः, एषु'। प्रत्यया एकवर्णा अर्थवन्तः—'औपगवः, कापटवः'। निपाता एकवर्णा अर्थवन्तः—'अ अपेहि, इ इन्द्रं पश्य, उ उत्तिष्ठ, अ अपक्राम'। धातुप्रातिपदिकप्रत्ययनिपातानामेकवर्णानामर्थदर्शनान्मन्यामहे—अर्थवन्तो वर्णा इति।**

**वा.—वर्णव्यत्यये चार्थान्तरगमनात्।**

**भा.—वर्णव्यत्यये चार्थान्तरगमनान्मन्यामहे अर्थवन्तो वर्णा इति। 'कूपः, सूपः, यूपः' इति। "कूपः" इति सककारेण कश्चिदर्थो**

गम्यते। 'सूपः' इति ककारापाये सकारोपजने चार्थान्तरं गम्यते। 'यूपः' इति ककारसकारापाये यकारोपजने चार्थान्तरं गम्यते। तेन मन्यामहे यः कूपे कूपार्थः स ककारस्य, यः सूपे सूपार्थः स सकारस्य, यो यूपे यूपार्थः स यकारस्येति।

वा.—वर्णानुपलब्धौ चानर्थगतेः।

भा.—वर्णानुपलब्धौ चानर्थगतेर्मन्यामहे अर्थवन्तो वर्णा इति। 'वृक्षः, ऋक्षः; काण्डीरः आण्डीरः'। 'वृक्षः' इति सवकारेण कश्चिदर्थो गम्यते; 'ऋक्षः' इति वकारापाये सोऽर्थो न गम्यते। 'काण्डीरः' इति सककारेण कश्चिदर्थो गम्यते; 'आण्डीरः' इति ककारापाये सोऽर्थो न गम्यते। किं तदुच्यते अनर्थगतेरिति। न साधीयो ह्यनार्थस्य गतिर्भवति? एवं तर्हीदं पठितव्यं स्यात्—'वर्णानुपलब्धौ चातदर्थगतेः' इति। किमिदमतदर्थगतेरिति? तस्यार्थस्तदर्थः; तदर्थस्य गतिः तदर्थगतिः, न तदर्थगतिरतदर्थगतिः, अतदर्थगतेरिति। अथवा सोऽर्थस्तदर्थः, तदर्थस्य गतिस्तदर्थगतिः, न तदर्थगतिरतदर्थगतिः, अतदर्थगतेरिति। स तर्हि तथा निर्देशः कर्तव्यः। न कर्तव्यः। उत्तरपदलोपोऽत्र द्रष्टव्यः। तद्यथा उष्ट्रमुखमिव मुखमस्य उष्ट्रमुखः, खरमुखः। एवमतदर्थगतेरनर्थगतेरिति।

वा.—संघातार्थवत्त्वाच्च।

भा.—संघातार्थवत्त्वाच्च मन्यामहे अर्थवन्तो वर्णा इति। येषां संघाता अर्थवन्तः, अवयवा अपि तेषामर्थवन्तः। येषां ह्यवयवा अनर्थकाः, समुदाया अपि तेषामनर्थकाः। तद्यथा एकश्चक्षुष्मान् दर्शने समर्थः, तत्समुदायश्च शतमपि समर्थम्। एकश्च तिलस्तैलदाने समर्थः, तत्समुदायश्च खार्यपि तैलदाने समर्था। येषां पुनरवयवा अनर्थकाः, समुदाया अपि तेषामनर्थकाः। तद्यथा—एकोऽन्धो दर्शनेऽसमर्थः, तत्समुदायश्च शतमप्यसमर्थम्। एका च सिकता तैलदानेऽसमर्था, तत्समुदायश्च खारीशतमप्यसमर्थम्। यदि तर्हीमे वर्णा अर्थवन्तः, अर्थवत्कृतानि प्राप्नुवन्ति। कानि?

"अर्थवत्प्रातिपदिकम्" इति प्रातिपदिकसंज्ञा, "प्रातिपदिकात्" इति स्वाद्युत्पत्तिः, "सुबन्तं पदम्" इति पदसंज्ञा। तत्र को दोषः? "पदस्य" इति नलोपादीनि प्राप्नुवन्ति 'धनं, वनम्' इति।

वा.—संघातस्यैकार्थ्यात् सुबभावो वर्णात्।

भा.—संघातस्यैकत्वमर्थः। तेन वर्णात् सुबुत्पत्तिर्न भविष्यति।

वा. अनर्थकास्तु प्रतिवर्णमर्थानुपलब्धेः।

भा.—अनर्थकास्तु वर्णाः। कुतः? प्रतिवर्णमर्थानुपलब्धेः। न हि प्रतिवर्णमर्था उपलभ्यन्ते। किमिदं प्रतिवर्णमिति? वर्णं वर्णं प्रति प्रतिवर्णम्।

वा.—वर्णव्यत्ययापायोपजनविकारेष्वर्थदर्शनात्।

भा.—वर्णव्यत्ययापायोपजनविकारेष्वर्थदर्शनान्मन्यामहे अनर्थका वर्णा इति। वर्णव्यत्यये—कृतेस्तर्कुः, कसेः सिकताः, हिंसेः सिंहः। वर्णव्यत्ययो नार्थव्यत्ययः। अपायो लोपः—'घ्नतः, घ्नन्ति, घ्नन्तु, अघ्नन्'। वर्णापायो नार्थापायः। उपजन आगमः—'लविता, लवितुम्'। वर्णोपजनो नार्थोपजनः। विकार आदेशः—'घातयति, घातकः'। वर्णविकारो नार्थविकारः। यथैव वर्णव्यत्ययापायोपजनविकारा भवन्ति, तद्वदर्थव्यत्ययापायोपजनविकारैर्भवितव्यम्। न चेह तद्वत्। अतो मन्यामहे अनर्थका वर्णा इति। उभयमिदं वर्णेषूक्तम्—अर्थवन्तोऽनर्थका इति च। किमत्र न्याय्यम्? उभयमित्याह। कुतः? स्वभावतः। तद्यथा समानमीहमानानां चाधीयानानां च केचिदर्थैर्युज्यन्ते, अपरे न। न चेदानीं कश्चिदर्थवानिति कृत्वा सर्वैरर्थवद्भिः शक्यं भवितुम्; कश्चिद्वा अनर्थक इति कृत्वा सर्वैरनर्थकैः। तत्र किमस्माभिः शक्यं कर्तुम् यद्धातुप्रत्ययप्रातिपदिकनिपाता एकवर्णा अर्थवन्तः; अतोऽन्येऽनर्थका इति। स्वाभाविकमेतत्। कथं य एष भवता

वर्णानामर्थवत्तायां हेतुरुपदिष्टः- अर्थवन्तो वर्णा धातुप्रातिपदिक-प्रत्ययनिपातानामेकवर्णानामर्थदर्शनात्, वर्णव्यत्यये चार्थान्तर-गमनात्, वर्णानुपलब्धौ चानर्थगतेः, संघातार्थवत्त्वाच्चेति। संघा-तान्तराण्येवैतान्येवंजातीयकान्यर्थान्तरेषु वर्तन्ते—'कूपः, सूपः, यूपः' इति। यदि हि वर्णव्यत्ययकृतमर्थान्तरगमनं स्यात्, भूयिष्ठः कूपार्थः सूपे स्यात्, सूपार्थश्च कूपे, कूपार्थश्च यूपे, यूपार्थश्च कूपे, सूपार्थश्च यूपे, यूपार्थश्च सूपे। यतस्तु खलु न किंचित् सूपस्य वा यूपे, यूपस्य वा कूपे, कूपस्य वा यूपे, सूपस्य वा कूपे, कूपस्य वा सूपे, यूपस्य वा सूपे; अतो मन्यामहे—संघातान्तरा-ण्येतान्येवंजातीयकान्यर्थान्तरेषु वर्तन्त इति। इदं खल्वपि भवता वर्णानामर्थवत्तां ब्रुवता साधीयोऽनर्थकत्वं द्योतितम्। यो हि मन्यते यः कूपे कूपार्थः स ककारस्य, यः सूपे सूपार्थः स सकारस्य, यो यूपे यूपार्थः स यकारस्येति, ऊपशब्दस्त्वस्यानर्थकः स्यात्। तत्रेदमपरि-हृतम्—संघातार्थवत्त्वाच्चेति। एतस्यापि प्रातिपदिकसंज्ञायां परिहारं वक्ष्यति।

प्र.—इदानीमन्यदपि वर्णगतं वस्तु विचार्यते—किं पुनरिति; पक्षद्वयेऽपि प्रतिवर्णं विभक्त्यनुत्पत्तिज्ञानं विचारस्य प्रयोजनम्। वर्णव्यत्यय इति; एकस्य वर्णस्याभ्युपगमेऽन्यापगमो व्यत्ययः। स ककारस्येति; तस्यैवान्वयव्यतिरेकावनुविधत्तेऽर्थावसाय इत्यर्थः। वर्णानुपलब्धौ चेति; अर्थान्तरावगमात् प्रकृतोऽर्थो न गम्यत इति विवक्षितम्। इतरस्त्वर्थावगत्यभावमात्रमनेनोक्तमिति मत्वा पृच्छति—किं तर्हीति। न साधीय इति; परमतापेक्षया प्रकर्ष आरोप्यते; यथा 'न किंचिदयं तत्र करोति' इत्युक्ते, कश्चिदाह 'सुतरामयं करोति' इति। एवं तर्हीति; प्रकृतोऽर्थो न गम्यते; अर्थान्तरं तु गम्यत इत्यर्थः। तस्य; वर्णस्य। परं प्रति वर्णानामर्थवत्त्वमसिद्धमिति कथं तस्येति वर्णः परामृश्यत इत्याह—सोऽर्थ इति; प्रकृतोऽर्थ इत्यर्थः। उष्ट्रमुख इति; गतार्थत्वादप्रयोग एव द्वितीयमुखशब्दस्य लोपो विधीयते। अत्र हि उष्ट्रो मुखमस्येत्येव विग्रहः। न च प्राणी प्राण्यन्तरस्य मुखं

भवतीति विशिष्टावयववृत्तिरुष्ट्रशब्दः सादृश्यान्मुखं विशिनष्टि । एवमिहाप्यनर्थगतेरित्यत्रार्थशब्देन प्रक्रान्तोऽर्थ उच्यते, नार्थमात्रमित्यर्थः । नलोपादीनीति । श्रवणं तु विभक्तेर्न भवति ; यतो यदैवावयवानां प्रातिपदिकसंज्ञा प्रवर्तते तदैव समुदायस्यापि ; तत्र तदन्तर्गतत्वाद्विभक्तेर्लुका भवितव्यम् । समासग्रहणेन च तुल्यजातीयस्य सुबन्तावयवसमुदायस्य प्रातिपदिकसंज्ञा निवार्यते ; न त्वर्थवत्समुदायमात्रस्य । येनैव चार्थेन समुदायस्यार्थवत्त्वं तेनैव तदवयवानामपीति विभक्त्युत्पत्तिश्चोद्यते । तत्र परिहारमाह—संघातस्येति । वृक्ष इत्यत्रैकत्वं विभक्त्या द्योत्यते । तच्चैकमित्येकैव विभक्तिरुत्पद्यते ; यथा बहवो द्रष्टारो दृश्यमर्थमेकेनैव प्रदीपेन पश्यन्ति । सा चोत्पद्यमाना समुदायादेव तन्त्रेण सर्वानुग्राहिण्युत्पद्यते ; समुदायद्विर्वचनवत् । पदसंज्ञा तु समुदायस्यैव भवति, न प्रत्येकम् ; "यस्मात् प्रत्ययविधिः" इत्यनुवर्तनादसुबन्तत्वात् । अनर्थकास्त्विति । धात्वादिव्यतिरिक्ता वर्णाः पक्षीक्रियन्ते ; अन्यथा शास्त्रविरोधः प्राप्नोति । किमिति ; असमासशङ्कया प्रश्नः । समासेन तूत्तरम् । तेनैव वीप्सा द्योतितेति द्विर्वचनं न भवति । वर्णव्यत्ययेति ; यदुक्तम्—'वर्णव्यत्यये चार्थान्तरगमनात्, वर्णानुपलब्धौ चानर्थगतेः' इति तस्यानैकान्तिकत्वमुद्भाव्यते । उभयमित्याहेति ; यत्रान्वयव्यतिरेकाभ्यामर्थवत्ता शक्यते कल्पयितुं, तत्रैवासावभ्युपगन्तव्या, न सर्वत्रेत्यर्थः । संघातान्तराणीति । तदुक्तम्—

"न कूपसूपयूपानामन्वयोऽर्थस्य विद्यते ।
अतोऽर्थान्तरवाचित्वं संघातस्यैव गम्यते ॥"

इति । एतस्यापीति ; "दृष्टो ह्यतदर्थेन गुणेन गुणिनोऽर्थभावः, सुराङ्गवद्रथाङ्गवच्च" इति ।

उ.—वर्णोपदेशप्रयोजनविचारावसरे अर्थविचारस्यासंगतिं परिहरति—इदानीमिति । विवृतत्वादिवदर्थवत्त्वमपि वर्णगतमिति विशेषविचारत्वादस्मिन्नेवाह्निके संगतिरिति भावः । वस्तुतस्तु अर्थवत्त्वविचारस्याप्रयोजनत्वं वारयति—पक्षद्वयेऽपीति । प्रतिवर्णमिति ; 'धनम्' इत्यादौ केवलनकारादपि विभक्त्युत्पत्तौ नलोपप्रसङ्गात् तन्निवृत्तिः प्रयोजनमित्यर्थः । व्यत्ययशब्दस्य क्रमवैपरीत्यार्थकत्वं वारयति—एकस्येति । वर्णान्तरविरहितकेवलककाराद्

पूर्वार्थानवगतेः सोऽर्थः ककारस्येत्ययुक्तम् ; अत आह—तस्यैवेति । अर्थावसायः कर्ता । वकाराभावे स्पष्टार्थप्रतीतेरनर्थगतेरित्ययुक्तम् ; अत आह—अर्थान्तरेति । विवक्षितार्थे प्रश्नानुपपत्तिमाशङ्क्य तदज्ञानादित्याह—इतर इति । अर्थगतेरतिशयाभावात् ईयसुन् नोपपद्यते ; अत आह—परमतेति । परमते अर्थप्रतीतेरभावात् कथं तदपेक्षया प्रकर्षः ? अत आह—आरोप्यत इति । परमतस्यार्थाभावनिमित्तत्वमुपपादयति—यथेति । अत्राप्यर्थ-प्रतीतेर्निषेधात् पूर्वस्माद्विशेषाभावमाशङ्क्याह—प्रकृतेति । तस्येत्यस्य वर्णसमुदायपरत्व शङ्कां वारयति—वर्णस्येति । पूर्वव्याख्यानेऽरुचिमाह—परं प्रतीति ; वर्णानर्थकत्व-वादिनं प्रतीत्यर्थः । इत्याह ; इत्यरुचेराह । उक्तानुपपत्तिं निराह—प्रकृत इति ; वृक्ष-रूपार्थ इत्यर्थः । नित्यशब्दपक्षे लोपाभावादाह—गतेति । अनर्थगतिशब्दस्योप-मानपूर्वकत्वाभावादुत्तरपदलोपाप्राप्तिमाशङ्क्य दृष्टान्तदार्ष्टान्तिकसाधारण्यार्थमाह—गतेतीति केचित् । तदेवाह—अत्रेति । विशिष्टेति ; वृत्तौ उष्ट्रशब्दो लक्षणया तन्मुखसदृशपर इत्यर्थः । सविभक्तिकनकारस्य पदान्तत्वाभावाल्लोपाप्रसक्तिमाशङ्क्याह—श्रवणमिति । समुदायस्यापीति ; संघातार्थवत्त्वाच्चेति तेनैवोक्तेरित्यर्थः । "कृत्तद्धित" सूत्रे समास-ग्रहणस्य नियमार्थत्वात् समुदायस्य प्रातिपदिकसंज्ञा कथम् ? अत आह—समासेति ; 'राज्ञः पुरुषः' इत्यादेरित्यर्थः । समुदायस्यार्थवत्त्वे अवयवानां तद्भिन्नार्थवत्त्वाभावात् विभक्त्यनुपपत्तिमाशङ्क्याह—येनेति । 'स्वयं यजते' इत्यादौ स्वपदात्मनेपदाभ्यां क्रिया-फलस्य कर्तृगामित्वद्योतनवदनेकस्याप्यर्थवत्त्वमविरुद्धमिति भावः । तत्रावयवानां विभक्त्यु त्पत्तिश्चोद्यत इत्यत्र प्रातिपदिकत्वेऽपि विभक्तिर्नोत्पद्यत इत्युच्यत इत्यर्थः । लिङ्गं प्रातिपदिकार्थ इति मतेनेदं समाधानम् । पञ्चकस्य तदर्थत्वे विभक्तेर्द्यो-तकत्वेन एकस्याप्यनेकार्थद्योतकत्वसंभवात् वर्णाद्विभक्त्युत्पत्तिः स्यादेवेति भावः । ततश्चैक-विभक्तेः समुदायावयवोपकारकत्वं दृष्टान्तेनाह—यथेति । तर्ह्यवयवादेव सोत्पद्यताम् ; अत आह—सा चेति । समुदायेति ; तथाच द्योतकत्वपक्षेऽपि समुदायादेव विभक्त्युत्पत्तिर्द्विर्वचन-वदिति भावः । द्विर्वचनन्यायेन समुदायादुत्पत्तौ अवयवानां विभक्तिसंबन्धानिवृत्तेः पदत्व-प्रसङ्गान्नलोपप्रसङ्गः, अत आह—पदसंज्ञेति । यस्मादिति ; तथाच समुदायादेव सुब्विधिर्नावय-वादिति प्रत्येकं न पदसंज्ञेत्यर्थः । पक्षसंकोचे हेतुमाह—अन्यथेति । "भूवादयो धातवः" "हलि लोपः" "प्राग्दीव्यतोऽण्" "चादयोऽसत्त्वे" इत्यादावर्थवत्त्वाङ्गी-कारात् विरोध इत्यर्थः । असमासेति—वीप्साविरहात् सर्ववर्णानामानर्थक्यं न लभ्यत इति प्रश्नाभिप्राय इत्यर्थः । समासेनेति ; निघातेन समासत्वनिश्चय इत्यर्थः । असमासे तु द्विर्वचनं विना वीप्सा न प्रतीयेतेत्याशयेनाह—तेनेति । वीप्सार्थेऽव्ययीभाव इत्यर्थः । वर्णव्यत्ययादिष्वर्थदर्शनादित्यस्य कूपादौ व्यभिचाराद्वर्णानर्थक्यहेतुत्वं न संभवति ; अत आह—यदुक्तमिति । धात्वादीनामप्येकवर्णानां प्रत्येकमर्थे प्रयोगाभावात् कथमर्थवत्ता ? अत आह—यत्रेति ; यदागमन्यायेनार्थवत्त्वनिश्चय इत्यर्थः । भूयिष्ठः कूपार्थः सूप इत्यादिभाष्यार्थसंग्रहं वृद्धोक्तमाह—तदुक्तमिति । यूपानामिति शब्दपरो निर्देशः ।

भाष्ये भूयिष्ठ इति; कूपशब्दे वर्णचतुष्टयस्यापि कूपार्थत्वात् सूपे ककारापायेऽपि तदर्थकवर्णत्रयस्य विद्यमानत्वादधिकः कूपार्थस्तत्र प्रतीयेतेत्यर्थः। एवमग्रेऽपि। अर्थवत्सूत्रे वक्ष्यमाणं दर्शयति—दृष्टेति। एतद्वार्तिकस्य भाष्यकृता तत्रैव वक्ष्यमाणमुदाहरणमाह—सुरेति। सुरावयवानां प्रत्येकं मादकत्वाभावेऽपि तत्समुदायसुराया मादकत्वं, रथाङ्गानां प्रत्येकं व्रजिक्रियासाधनत्वाभावेऽपि तत्समुदायस्य तत्साधनत्वम्; एवं वर्णानामर्थवत्त्वाभावेऽपि तत्समुदायस्यार्थवत्त्वमिति भावः।

**भा.—'अइउण्, ऋऌक्, एओङ्, ऐऔच्'।**

**वा—प्रत्याहारेऽनुबन्धानां कथमज्ग्रहणेषु न।**

**भा.—य एतेऽक्षु प्रत्याहारार्था अनुबन्धाः क्रियन्ते, एतेषामज्ग्रहणेन ग्रहणं कस्मान्न भवति? किंच स्यात्? 'दधि णकारीयति' मधु णकारीयति'; "इको यणचि" इति यणादेशः प्रसज्येत।**

**वा.—आचारात्।**

**भा.—किमिदमाचारादिति? आचार्याणामुपचारात्। नैतेष्वाचार्या अच्कार्याणि कृतवन्तः।**

**वा.—अप्रधानत्वात्।**

**भा.—अप्रधानत्वाच्च। न खल्वप्येतेषामक्षु प्राधान्येनोपदेशः क्रियते। क्व तर्हि?। हल्षु। कुत एतत्? एषा ह्याचार्यस्य शैली लक्ष्यते यत् तुल्यजातीयांस्तुल्यजातीयेषूपदिशति, अचोऽक्षु हलो हल्षु।**

**वा.—लोपश्च बलवत्तरः।**

**भा.—लोपः खल्वपि तावद्भवति।**

**वा.—ऊकालोऽजिति वा योगस्तत्कालानां यथा भवेत्।**
**अचां ग्रहणमच्कार्यं तेनैषां न भविष्यति॥**

**भा—अथवा योगविभागः करिष्यते—"ऊकालोऽच्"। उऊउ३ इत्येवंकालोऽच् भवति। ततो "ह्रस्वदीर्घप्लुतः"।**

ह्रस्वदीर्घप्लुतसंज्ञश्च भवति ऊकालोऽच्। एवमपि 'कुक्कुटः' इत्यत्रापि प्राप्नोति। तस्मात् पूर्वोक्त एव परिहारः। एष एवार्थः। अपर आह—

'ह्रस्वादीनां वचनात् प्राग्यावत्तावदेव योगोऽस्तु।
अच्कार्याणि यथा स्युस्तत्कालेष्वक्षु कार्याणि॥'

प्र.—आचारादिति; आचारो व्यवहारः। "तृषिमृषिकृशेः" इति यण् न कृतः। अप्रधानत्वादिति; प्रधानाप्रधानसंनिधौ प्रधानमेव कार्याणां प्रयोजकमिति परार्थानामनुबन्धानामच्संज्ञा न प्रवर्तत इत्यर्थः। शैलीति; शीले भवा शैली; समवधानपूर्विका प्रवृत्तिः। यथा लोके ब्राह्मणैः सह ब्राह्मणा भोज्यन्ते, क्षत्रियैः सह क्षत्रिया इति; एवमिहाप्याचार्येण वर्णा निर्दिष्टा इत्यर्थः। लोपश्चेति; परत्वान्नित्यत्वाद्वा। "आदिरन्त्येन" इत्यनेनाच्संज्ञाविधानकालेऽनुबन्धानां लोपादसंनिधानादच्संज्ञा न प्रवर्तते। अनुबन्धा ह्युच्चारण एव सन्ति; इत्संज्ञाप्रतिबद्धं कार्यमसन्त एव प्रतिपादयन्ति; स्वतस्तु न किंचित् कार्यं प्रतिपद्यन्ते। ऊकालोऽजिति; सिद्धेऽच्त्वे योगविभागेन कालविशेषावच्छिन्नस्याच्त्वं नियम्यते। ततोऽनुबन्धानामूकालत्वाभावादच्त्वाभावः। एवमपीति; ककाराकृतेरुपदेशान्मात्रिकस्याच्त्वं मन्यते। अत्र च यद्यप्ययं परिहारोऽस्ति 'द्वावेतौ ककारौ, न च वर्णद्वयेनैका जातिर्व्यज्यते' इति, तथापि पूर्वमेव 'मात्राकालोऽत्र गम्यते, न च मात्रिकं व्यञ्जनमस्ति' इत्युक्तत्वात् पुनरिह नोक्तः।

उ.—आचारशब्दस्यानेकार्थकत्वादाह—व्यवहार इति। आचारकरणमुपदर्शयति—तृषीत्यादि। इकारस्य ककारे परतो यणकरणादनुबन्धानामनच्त्वमित्यर्थः। संज्ञात्वे अप्रधानेऽपि कार्यावश्यकत्वादप्राधान्यं कार्याभावे न हेतुः, किंतु संज्ञाभाव एवेत्याह—प्रधानेति। तद्धितवैयर्थ्यं निराकरोति—शील इति; किं शीलम्? को वाऽत्र भवः? अत आह—समवेति। शैलीयं युक्तेत्याह—यथेति। बलवत्त्वमाह—परत्वादिति। पूर्वं संनिधानेऽपि संज्ञा नेत्युक्तम्; इदानीं तदेव नेत्युच्यत इत्याह—आदिरिति। संज्ञाकाले अभावे संज्ञानिमित्तत्वमपि न स्यात्; अत आह—अनुबन्धा हीति। असन्त एव; बुद्ध्यारूढाः। ऊकालस्याच्त्वविधानेऽप्यनुबन्धनिवृत्तिर्न लभ्यत इत्याशङ्क्याह—सिद्ध इति; सिद्धे सत्यारम्भो नियमार्थ इति न्यायादित्यर्थः। अर्धमात्रककारेणोपदिष्टेन

सवर्णतया मात्रिकस्याग्रहणात् कथमच्त्वम्? अत आह—ककारेति। वर्णोपदेशकाले अनिर्वृत्ततया ग्रहणकशास्त्रस्याप्रवृत्तेरनुक्तस्य कथमच्त्वम्? अत आह—ककारेतीति केचित्। अलाकारादितुल्यता किं न स्यादिति चिन्त्यम्। पूर्वत्रोक्तमनपेक्ष्यास्याभासत्वमुक्तम्। तदपेक्षणे द्वयमपि सम्यगेवेत्याह—अत्र चेति। द्वाभ्यामेकजात्यभिव्यक्तेरुक्तदोषानुद्धारः; अत आह—न चेति। एकेति; जातेर्द्वित्ववत् व्यासज्यवृत्तित्वाभावेन प्रत्येकमात्रव्यङ्ग्यत्व-मेवेति भावः। उक्तार्थ एवान्यैः प्रकारान्तरेण संगृहीत इत्याह भाष्ये—एष एवेति। श्लोकपादत्रयेण पूर्वसमाधानस्य, चतुर्थेन द्वितीयस्य संग्रहः। वचनात्; आदिरन्त्येनेति संज्ञावचनात् प्रागेवानुबन्धानामुपयोगो न तु संज्ञाकाले ;लोपस्य बलवत्त्वात्। संज्ञाकाले अनुबन्धाभावस्य प्रयोजनकथनं ह्रस्वादीनामेवाच्कार्याणि यथा स्युरिति। चतुर्थचरणो, योगविभागाभिप्रायः।

**अथ किमर्थमन्तःस्थानामण्सूपदेशः क्रियते? इह 'सय्ँय्ँयन्ता, सव्ँव्ँवत्सरः, यल्ँल्ँलोकं, तल्ँल्ँलोकम्' इति परसवर्णस्यासिद्धत्वा-दनुस्वारस्यैव द्विर्वचनम्। तत्र परस्य पर सवर्णे कृते तस्य यय्ग्रहणेन ग्रहणात् पूर्वस्यापि परसवर्णो यथा स्यात्। नैतदस्ति प्रयोजनम्। वक्ष्यत्येतत्—"द्विर्वचने परसवर्णत्वं सिद्धं वक्तव्यम्" इति। यावता सिद्धत्वमुच्यते परसवर्ण एव तावद्भवति। परसवर्णे कृते तस्य यग्ग्रहणेन ग्रहणात् द्विर्वचनं यथा स्यात्। मा भूद् द्विर्वच-नम्। ननु च भेदो भवति—सति द्विर्वचने त्रियकारकम्; असति द्विर्वचने द्वियकारकम्। नास्ति भेदः; सत्यपि द्विर्वचने द्वियकारकमेव। कथम्? "हलो यमां यमि लोपः" इत्येवमे-कस्य लोपेन भवितव्यम्। एवमपि भेदः। सति द्विर्वचने कदाचिद् द्वियकारकम्, कदाचित् त्रियकारकम्। असति द्विय-कारकमेव। स एष कथं भेदो न स्याद्? यदि नित्यो लोपः स्यात्। विभाषा च स लोपः। यथा अभेदस्तथास्तु।**

**वा.—अनुवर्तते विभाषा शरोऽचि यद्वारयत्ययं द्वित्वम्।**

**भा.—यदयं "शरोऽचि" इति द्विर्वचनप्रतिषेधं शास्ति, तज्ज्ञापयत्याचार्योऽनुवर्तते विभाषेति। कथं कृत्वा ज्ञापकम्?**

**वा.—नित्ये हि तस्य लोपे प्रतिषेधार्थो न कश्चित् स्यात् ॥**

**भा.—यदि नित्यो लोपः स्यात्, प्रतिषेधवचनमनर्थकं स्यात्। अस्त्वत्र द्विर्वचनम्; "झरो झरि सवर्णे" इति लोपो भविष्यति। पश्यति त्वाचार्यो विभाषा स लोप इति; ततो द्विर्वचनप्रतिषेधं शास्ति। नैतदस्ति ज्ञापकम्। नित्येऽपि तस्य लोपे स प्रतिषेधोऽवश्यं वक्तव्यः। यदेतत् "अचो रहाभ्याम्" इति द्विर्वचनं लोपापवादः स विज्ञायते। कथम्? 'यरः' इत्युच्यते। एतावन्तश्च यरः—यदुत झरो वा यमो वा। यदि चात्र लोपः स्यात् द्विर्वचनमनर्थकं स्यात्। किं तर्हि तयोर्योगयोरुदाहरणम्?। यदकृते द्विर्वचने त्रिव्यञ्जनः संयोगः—'प्रत्तम्, अवत्तम्, आदित्यः'। इहेदानीं 'कर्ता, हर्ता' इति द्विर्वचनसामर्थ्याल्लोपो न भवति। एवमिहापि लोपो न स्यात् 'कर्षति वर्षति' इति। तस्मान्नित्येऽपि लोपेऽवश्यं स प्रतिषेधो वक्तव्यः। तदेतदत्यन्तं संदिग्धं वर्तत आचार्याणां विभाषा अनुवर्तते न वेति।**

अथ किमर्थामात; 'अजुदित्सवर्णस्य' इति कस्मान्न कृतमिति प्रश्नः। इणग्रहणेन ग्रहणार्थस्त्वन्तःस्थानामत्रावश्यकर्तव्य उपदेशः, गीर्ष्वित्यादौ मूर्धन्यो यथा स्यादिति। ननु च भेद इति; श्रुतिकृतोऽस्त्येव भेदः; सूक्ष्मत्वात्तु दुर्लक्षः। तदेतदिति; ज्ञापकत्वमस्य विघटयति। आचार्योपदेशपारम्पर्यात्तु ज्ञायते—अनुवर्तते विभाषेति। तस्मात् त्रिव्यञ्जनसंयोगश्रवणायाणुदिदिति णकारेण प्रत्याहारः कृतो न चकारेणेति स्थितम्।

उ.—इण्मध्ये ग्रहणार्थं यथासन्निवेशोपदेशस्यावश्यकत्वात् सूत्रेअण्प्रत्याहारग्रहणाक्षेपपरमेतदित्याह—अजुदिति। इण्त्वे प्रयोजनमाह—गीर्ष्विति। सानुनासिकयकारवकारलकाराणां यय्ग्रहणेन ग्रहणार्थोऽण्सूपदेश इत्याह भाष्ये—सय्ँय्ँयन्तेत्यादि। परसवर्णस्यैव द्वित्वार्थः अण्सूपदेश इत्याह भाष्ये—परसवर्णे कृत इति। न हि हलामेकस्यानेकस्य वा श्रवणं प्रति भेदोऽस्तीत्यन्यत्रोक्तत्वात्तद्विरुद्धमेतत्; अत आह—श्रुतिकृत इति। स्थूलदृग्विषया भेदोक्तिरिति भावः। भाष्ये—यथा अभेदस्तथाऽस्त्विति; नित्य एव लोपोऽस्त्वित्यर्थः। भाष्ये—तयोर्योगयोः; "हलो यमां यमि लोपः" "झरो झरि सवर्णे" इत्यनयोः। भाष्ये—प्रत्तमिति; प्र दा त इति स्थिते

"अच उपसर्गात्तः" इति दा इत्यस्य तत्वे कृते त्रिव्यञ्जनसंयोगः। आदेशतकारस्य "झरो झरि" इति लोपः। आदित्यशब्दात् "दित्यदित्यादित्य" सूत्रेण ण्यप्रत्यये कृते यस्येति लोपे त्रिव्यञ्जनसंयोगः। "हलो यमां यमि" इति पूर्वयमो लोपः। विधानसामर्थ्यात् कर्तें यादौ लोपाभावे अचिकीर्षत् इत्यादौ लोपो न स्यात्। तत्र षकारद्वयं नाङ्गीक्रियते। अतः "शरोऽचि" इति वक्तव्यमिति न ज्ञापकं तदित्याह—भाष्ये—इहेदानीमिति। सन्देहोपन्यासो ज्ञापकत्वखण्डनपरो नाननुवृत्तिपर इत्याह—ज्ञापकत्वमिति। अनुवृत्तौ मानमाह—आचार्येति। अनुवृत्तिफलमाह—तस्मादिति। त्रिव्यञ्जनेति; संवत्सर इत्यादि। न चकारेणेति; अचीति नोक्तमित्यर्थः।

सू—लण्॥ ६॥

भा.—अयं णकारो द्विरनुबध्यते पूर्वश्चैव परश्च। तत्राण्ग्रहणेष्विण्ग्रहणेषु च संदेहो भवति पूर्वेण वा स्युः परेण वेति। कतमस्मिंस्तावदण्ग्रहणे संदेहः? "ढ्रलोपे पूर्वस्य दीर्घोऽणः" इति।

वा.—असंदिग्धम्।

भा.—असंदिग्धं पूर्वेण, न परेण। कुत एतत्?

वा.—पराभावात्।

भा.—न हि ढ्रलोपे परेऽणः सन्ति। ननु चायमस्ति—आतृढः, आवृढ इति। एवं तर्हि सामर्थ्यात् पूर्वेण, न परेण। यदि हि परेण स्यात् अण्ग्रहणमनर्थकं स्याद् 'ढ्रलोपे पूर्वस्य दीर्घोऽचः' इत्येव ब्रूयात्। अथ वैतदपि न ब्रूयात्। अचो ह्येतद्भवति ह्रस्वो दीर्घः प्लुत इति।

अस्मिंस्तर्ह्यण्ग्रहणे संदेहः "केऽणः" इति। असंदिग्धं पूर्वेण, न परेण। कुत एतत्? पराभावात्। न हि के परेऽणः सन्ति। ननु चायमस्ति—गोका, नौकेति। एवं तर्हि सामर्थ्यात् पूर्वेण, न परेण। यदि हि परेण स्यात् अण्ग्रहणमनर्थकं स्यात्। 'केऽचः' इत्येव ब्रूयात्। अथ वैतदपि न ब्रूयात्। अचो ह्येतद्भवति ह्रस्वो दीर्घः प्लुत इति।

अस्मिंस्तर्ह्यण्ग्रहणे संदेहः "अणोऽप्रगृह्यस्यानुनासिकः" इति। असंदिग्धं पूर्वेण, न परेण। कुत एतत्? पराभावात्। न हि पदान्ताः परेऽणः सन्ति। ननु चायमस्ति—कर्तृ, हर्तृ इति।

**एवं तर्हि सामर्थ्यात् पूर्वेण, न परेण। यदि हि परेण स्यात्, अण्-ग्रहणमनर्थकं स्यात्, "अचोऽप्रगृह्यस्यानुनासिकः" इत्येव ब्रूयात्। अथवैतदपि न ब्रूयात्; अच एव हि प्रगृह्या भवन्ति।**

प्र.—संदेहो भवतीति; किं प्रत्यासत्तिराश्रीयते? अथ व्याप्तिरिति संदेहः। न हि के पर इति; ननु अल्पा उपानत् उपानत्केति ह्रस्वे कर्तव्ये "नहो धः" इत्यस्यासिद्धत्वात् अस्ति के परतो हकारः; तथा गीष्केत्यादौ रेफः। अत्राहुः—"न मु ने" इत्यत्र नेति योगविभागेन धत्वादीनामसिद्धत्वाभावात् तेषु च कृतेषु हकारादीनामभावः। न हि पदान्ता इति; ननु च "भोभगो" इत्यत्राशग्रहणस्य प्रयोजनं वक्ष्यति वृक्षव् करोतीत्यत्र "हलि सर्वेषाम्" इति लोपो मा भूदिति; तत्र वृक्षं वृश्चतीति क्विपि कृते वृक्षवृश्चमाचष्टे इति णिचि टिलोपे च कृते वृक्षवयतेर्विचि कृते वृक्षव् इति भवति। क्विपि तु "क्वौ लुप्तम्" "क्वौ विधिं प्रति च न स्थानिवत्" इति निषेधात् संप्रसारण-प्रसङ्गः, "लोपो व्योर्वलि" इति वलोपप्रसङ्गश्च। विचि तु स्थानिवद्भा-वाद्धल्निमित्तो लोपो न भवति। "हलि सर्वेषाम्" इत्यनेन तु लोपे क्रियमाणे "पूर्वत्रासिद्धे न स्थानिवत्" इति स्थानिवत्त्वनिषेधाद्धलोपः प्राप्तोऽशग्रहणानुवृत्त्या निवर्त्यते। तत् कथमुच्यते न हि पदान्ता इति? उच्यते—अप्रगृह्यस्येति पर्युदासेनाच एवानुनासिकेन भाव्यं, न तु हल इत्युक्तं न हि पदान्ता इति; कार्यभाज इत्यर्थः। अचोऽप्रगृह्यस्येति; हलो हि न भाव्यमित्यत्राणग्रहणसामर्थ्यात् पूर्वेणेति स्थितम्।

उ.—"मुख्यं वा पूर्वकालत्वात्" इति न्यायेन प्राथम्यस्य नियामकत्वात् संदेहानुप-पत्तिमाशङ्क्याह-किमिति। प्रतिपदपाठं विहाय लघूपायेन बहूनां संग्रहाय लक्षणप्रवृत्तेर्व्याप्तिरेव प्रत्यासत्तितुल्येति भावः। रेफहकारयोः रेफपरयोः संभवमाशङ्क्य समाधत्ते — नन्विति। भाष्यान्तरविरोधमाशङ्क्य परिहरति—नन्विति। वक्ष्यतीति, "हलि सर्वेषाम्" इत्यत्र अशीत्यनु वर्तते, तथाचाश्येव लोपो न हल्मात्र इति ककारे परतो वकारस्य लोपाभावः। वृक्षव्शब्दं साधयति-तत्रेति। लोप इति, "णाविष्ठवत्" इत्यनेन। "भोभगो" इत्यत्र वृक्षवयतेरप्रत्यय इति भाष्ये सामान्येनोक्तः क्विप् किं न स्यात्? अत आह—क्विपीति। संप्रसारणेति; वकारस्य वृश्चत्यवयवत्वात् "ग्रहिज्या" इत्यादिना संप्रसा

रणं स्यात्। विंचि तु नायं दोष इत्याह—विचीति। वल्निमित्त इति; णिलोपस्य स्थानिवत्त्वेन वल्परत्वाभावात् किन्नाभावान्न संप्रसारणशङ्का। तर्हि अग्रहणस्याप्येतन्न प्रयोजनम्; अत आह—हलीति।ननु 'अचोऽप्रगृह्यस्य' इत्युक्त्या हलामनुनासिको न स्यात्, अत आह- अच इति। अप्रगृह्यस्येति पर्युदासाश्रयणादित्यर्थः।

भा.—अस्मिंस्तर्ह्यण्ग्रहणे संदेहः "उरण् रपरः" इति। असंदिग्धं पूर्वेण, न परेण। कुत एतत्? पराभावात्। न ह्युः स्थाने परेऽणः सन्ति। ननु चायमस्ति कर्त्रर्थं हर्त्रर्थमिति। किंच स्याद् यद्यत्र रपरत्वं स्याद्? द्वयो रेफयोः श्रवणं प्रसज्येत। "हलो यमां यमि लोपः" इत्येवमेकस्यात्र लोपो भविष्यति। विभाषा स लोपः। विभाषा श्रवणं प्रसज्येत। अयं तर्हि नित्यो लोपः "रो रि" इति। पदान्तस्येत्येवं सः। न शक्यः स पदान्तस्येत्येवं विज्ञातुम्। इह हि लोपो न स्यात्—जर्गृधेर्लङ्; अजर्घाः। पास्पर्द्धेः आपास्पाः इति। इह तर्हि—मातॄणां पितॄणामिति; रपरत्वं प्रसज्येत। आचार्यप्रवृत्तिर्ज्ञापयति नात्र रपरत्वं भवतीति। यदयम् "ऋत इद्धातोः" इति धातुग्रहणं करोति। कथं कृत्वा ज्ञापकम्? धातुग्रहणस्यैतत्प्रयोजनम्—इह मा भूत्, मातॄणां पितॄणामिति। यदि चात्र रपरत्वं स्याद्धातुग्रहणमनर्थकं स्यात्। रपरत्वे कृतेऽनन्त्यत्वादित्त्वं न भविष्यति। पश्यति त्वाचार्यो नात्र रपरत्वं भवतीति। ततो धातुग्रहणं करोति। इहापि तर्हि न प्राप्नोति—चिकीर्षति जिहीर्षतीति। मा भूदेवम्। "उपधायाश्च" इत्येवं भविष्यति। इहापि तर्हि प्राप्नोति—मातॄणां पितॄणामिति। तस्मात् तत्र धातुग्रहणं कर्तव्यम्। एवं तर्हि सामर्थ्यात् पूर्वेण, न परेण। यदि परेण स्यात्, अण्ग्रहणमनर्थकं स्यात्। "उरन्रपरः" इत्येव ब्रूयात्।

प्र.—अजर्घा इति; गृधेर्यङ्लुकि रुगागमेऽभ्यासस्य कृते लङि सिपि शब्लुकि गुणरपरत्वसिब्लोपभष्भावजश्त्वरुत्वरलोपदीर्घत्वेषु रूपम्। इहापि तर्हीति; धातुग्रहणेन हि लिङ्गेनाधातोरेव रपरत्वं निवर्तितम्।

धातोस्तु रपरत्वे सत्यनन्त्यत्वान्न प्राप्नोतीति प्रश्नः । इहापीति ; तस्माद्धातुग्रहणस्य सप्रयोजनत्वान्न ज्ञापकत्वमित्यर्थः ।

उ.—अपदान्तस्य रेफस्य "रो रि" इति लोपे एतद्रूपमिति दर्शयति— गृधेरिति । जर्गृध् शप् इति स्थिते "चर्करीतं च" इत्यदादिपाठाच्छपो लुक् । "पुगन्त" इति गुणः । "एकाचः" इति भष्भावः "हल्ङ्याब्भ्यः" इति सिब्लोपः। "झलां जशोऽन्ते" इति धस्य दः। "दश्च" इति रुत्वम् । तस्मिन् "रो रि" इति लोपः । "ढ्लोपे" इति दीर्घः। मातॄणामिति—ऋकारस्थानिकस्याणत्वात् रपरत्वप्रसङ्ग इत्यर्थः । ऋवर्णमात्रे रपरत्वाभावज्ञापनात् इहापीत्ययुक्तम् ; अत आह— धात्विति । चि कृ सन् इति स्थिते "अज्झनगमां सनि" इति दीर्घे "ऋत इद्धातोः" इतीत्वे रपरत्वे च चिकीर्षतीति सिध्यति । तत्र ऋकारस्य रपरत्वे ऋदन्तत्वाभावादित्वं न प्राप्नोतीत्यर्थः। "ऋत इत्" इत्यत्र धातुग्रहणं ज्ञापनार्थं कर्तव्यमित्युपसंहाररपरत्वशङ्कां वारयति—तस्मादिति । "उपधायाश्च" इत्यत्रानुवृत्त्यर्थं धातुग्रहणं मातॄणामित्यत्रोपधाया इत्वनिवृत्त्या सप्रयोजनमिति न ज्ञापकत्वमित्यर्थः। स्वस्थाने करणं ज्ञापकमेवेत्याहुः । ज्ञापकत्वे खण्डिते मातॄणामित्यत्र रपरत्वनिरासाय पूर्वेणेति वक्तव्यमिति स्थिते भाष्यम्— एवं तर्हीति ।

**भा.—अस्मिंस्तर्ह्यणग्रहणे संदेहः—"अणुदित्सवर्णस्य चाप्रत्ययः" इति। असंदिग्धं परेण, न पूर्वेण। कुत एतत्?**

**वा.—सवर्णेऽण् तु परं ह्युकृत् ।**

**भा.—यदयम् "उकृत्"; इत्यृकारे तपरकरणं करोति, तज्ज्ञापयत्याचार्यः परेण, न पूर्वेणेति ।**

**इण्ग्रहणेषु तर्हि संदेहः। असंदिग्धं परेण, न पूर्वेण। कुत एतत्?**

**वा.—य्वोरन्यत्र परेणेण् स्यात् ।**

**भा.—यत्रेच्छति पूर्वेण, संमृद्य ग्रहणं तत्र करोति—य्वोरिति। तच्च गुरु भवति। कथं कृत्वा ज्ञापकम्? तत्र विभक्तिनिर्देशे संमृद्य ग्रहणे चार्धचतस्रो मात्राः। प्रत्याहारग्रहणे पुनस्तिस्रो मात्राः। सोऽयमेवं लघीयसा न्यासेन सिद्धे सति यद्गरीयांसं यत्नमारभते तज्ज्ञापयत्याचार्यः परेण, न पूर्वेणेति ।**

**किं पुनर्वर्णोत्सत्ताविवायं णकारो द्विरनुबध्यते?**

**वा.—व्याख्यानाच्च द्विरुक्तितः ।**

**भा. - एतज्ज्ञापयत्याचार्यो भवत्येषा परिभाषा —"व्याख्यानतो विशेषप्रतिपत्तिर्न हि संदेहादलक्षणम्" इति । "अणुदित् सवर्णस्य" इत्येतत्परिहाय पूर्वेणाण्ग्रहणं, परेणेण्ग्रहणमिति व्याख्यास्यामः ।**

प्र.—सवर्ण इति ; अचीकृतदिति ऋकारस्य ऋकार एव यथा स्यात् ॠकारो मा भूदित्येवमर्थं तपरत्वं क्रियते । यदि च पूर्वेण णकारेणाण्ग्रहणं स्यात् ऋकारोऽनण्त्वाद्भिन्नकालस्य ग्राहक एव न भवतीति ॠकारो नैव स्थानी, नाप्यादेशः प्रसजतीति किं तपरत्वेन । कृतं तज्ज्ञापकं परेणाण्ग्रहणस्य । अर्धचतस्र इति ; अर्धेन चतस्रः । चतुर्थी हि मात्रा तत्रार्धेति । किं पुनरिति ; वर्णोत्सत्तिर्वर्णोच्छेदः । वर्णान्तरमनुबन्धः किं न क्रियत इत्यर्थः । व्याख्यानत इति ; न्यायादागमाद्वा शब्दशक्तिरनुसरणीयेत्यर्थः ।

उ.—ज्ञापकत्वमुपपादयति—अचीकृतदिति । 'कॄत संशब्दने' इत्यस्य णौ चङि ॠकारस्य ऋकारे कृते रूपम् । ॠकारो नैव स्थानीति ; ऋकारादेशं प्रति न स्थानी, तदादेशाभावादेवेत्यर्थः । स्वरूपकथनमेतत्, स्थानित्वनिषेधस्याप्रयोजनत्वात् । यद्वा 'उः' इत्यनेन ऋकारोऽनण्त्वात् न गृह्यते । तथाच ॠकारस्य स्थानित्वाभावात ऋकारादेशस्य प्रसङ्गो नास्तीति तपरत्वं व्यर्थमित्यर्थः । यद्यपीहाण्ग्रहणे भाव्यमानस्य सवर्णाग्राहकत्वात् तपरत्वं व्यर्थम् ; तथाऽप्यमू इत्यादिवत् सवर्णग्रहणप्रसङ्गनिरासाय तपरत्वमावश्यकमिति भावः । एकदेशिसमासे विवक्षितासिद्धेराह—अर्धेनेति । "कर्तृकरणे कृता बहुलम्" इति बहुलोक्तेस्तृतीयासमासः । अर्धेन मात्राणां कथं चतुष्टम् ? अत आह—चतुर्थी हीति ; अर्धमात्रत्वादित्यर्थः । य्वोरित्यत्र यकारवकारयोरेका मात्रा ; ओकारस्य मात्राद्वयम् ; विसर्जनीयस्यार्धमित्यर्धचतस्रो मात्राः । इण इत्युक्ते इकाराकारयोर्मात्राद्वयम् ; णकारविसर्जनीययोरेका मात्रेति तिस्रो मात्रा इति विवेकः । उत्सत्तिशब्दार्थमाह—वर्णोच्छेद इति । वर्णोत्पत्ताविति पाठेऽप्युत्पत्तिशब्दस्यायमेवार्थः । वर्णान्तराभावे एकस्यैव वारद्वयमनुबन्धकरणं युक्तम् ; तत्सत्त्वे असंदेहार्थं वर्णान्तरस्यैवानुबन्धत्वं किं न स्यादिति शङ्काभिप्राय इत्याह—वर्णान्तरमिति । ननु उक्तन्यायेन निर्णयसंभवात् व्याख्यानस्यानुपयोगः ; व्याख्यानमात्रस्य निर्णायकत्वे अतिप्रसङ्गश्च ; अत आह—न्यायादिति । आगमः संप्रदायः । अतो नातिप्रसङ्गः ।

**सू.—ञमङणनम् ॥ ७ ॥ झभञ् ॥ ८ ॥**

**भा. –किमर्थमिमौ मुखनासिकावचनावुभावनुबध्येते ; न ञकार एवानुबध्येत ? । कथं यानि मकारेण ग्रहणानि ? सन्तु**

ञकारेण। कथं "हलो यमां यमि लोपः" इति। अस्तु ञकारेण; 'हलो यञां यञि लोपः' इति। नैवं शक्यम्। झकारभकारपरयोरपि झकारभकारयोर्लोपः प्रसज्येत। न झकारभकारौ झकारभकारयोः स्तः। कथं "पुमः खय्यम्परे" इति? एतदप्यस्तु ञकारेण "पुमः खय्यञ्परे" इति। नैवं शक्यम्। झकारभकारपरेऽपि हि खयि रुः प्रसज्येत। न झकारभकारपरः खयस्ति। कथं "ङमो ह्रस्वादचि ङमुण्नित्यम्" इति? एतदप्यस्तु ञकारेण "ङञो ह्रस्वादचि ङञुण्नित्यम्" इति। नैवं शक्यम्। झकारभकारयोरपि हि पदान्तयोर्झकारभकारावागमौ स्याताम्। न झकारभकारौ पदान्तौ स्तः। एवमपि पञ्चागमास्त्रय आगमिनः; वैषम्यात् संख्यातानुदेशो न प्राप्नोति। सन्तु तावद्येषामागमानामागमिनः सन्ति। झकारभकारौ पदान्तौ न स्त इति कृत्वा आगमावपि न भविष्यतः।

प्र.—न झकारेति; भकारस्य पदान्तस्य जश्त्वेन भाव्यमिति तस्याभावः। उज्झेर्झकारः "संयोगान्तस्य" इति लुप्यते इति तस्याप्यभावः। सन्तु तावदिति; उद्देशानुदेशाभ्यां संख्यासाम्याद्यथासंख्ये लब्धे प्रयोगे यस्यागमस्यागमी विद्यते स प्रवर्तते, नान्य इत्यर्थः।

उ.—न झकारभकारौ पदान्तौ स्त इति भाष्यं प्रतीकेनोपादत्ते—न झकारेति। 'उभि' 'उज्झ' अनयोर्भकारझकारयोः पदान्तयोः सत्त्वात् नेत्ययुक्तम्; अत आह—भकारस्येति। उज्झेर्झकारस्य जकारव्यवधानेनाचः परत्वाभावेनागमित्वाभावेऽपि सद्भावमात्रमाशङ्क्य निरास इति ज्ञेयम्। प्रयोगे त्रय आगमिनः, पञ्चागमा इत्येकैकस्य पञ्चागमाः स्युरिति शङ्किते संख्यातानुदेशेनैव समाधानं न युक्तम्; अत आह—उद्देशेति; विध्यङ्गभूता परिभाषा। तत्र च संख्यासाम्यमस्ति। प्रयोगे तु आगम्यभावेनागमाभावो न दोषायेत्यर्थः।

भा.—अथ किमिदमक्षरमिति?

वा.—अक्षरं न क्षरं विद्यात्।

भा.—न क्षीयते न क्षरतीति वा अक्षरम्।

वा.—अश्नोतेर्वा सरोऽक्षरम् ।

भा.—अश्नोतेर्वा पुनरयमौणादिकः सरन् प्रत्ययः ; अश्नुते इत्यक्षरम् ।

वा.—वर्णे वाहुः पूर्वसूत्रे ।

भा.—अथवा पूर्वसूत्रे वर्णस्याक्षरमिति संज्ञा क्रियते ।

वा.—किमर्थमुपदिश्यते ?

भा.—अथ किमर्थमुपदेशः क्रियते ?

वा.—वर्णज्ञानं वाग्विषयो यत्र च ब्रह्म वर्तते ।
तदर्थमिष्टबुद्ध्यर्थं लघ्वर्थं चोपदिश्यते ॥

भा.—सोऽयमक्षरसमाम्नायो वाक्समाम्नायः पुष्पितः फलितश्चन्द्रतारकवत् प्रतिमण्डितो वेदितव्यो ब्रह्मराशिः; सर्ववेदपुण्यफलावाप्तिश्चास्य ज्ञाने भवति; मातापितरौ चास्य स्वर्गे लोके महीयेते।

---

इति श्रीमद्भगवत्पतञ्जलिविरचिते महाभाष्ये प्रथमस्याध्यायस्य प्रथमे पादे द्वितीयमाह्निकम् ॥

॥ इति माहेश्वरीयं विधिशेषप्रकरणम् ॥

---

किमिदमिति; 'अक्षरसमाम्नायः' इति व्यवहारात् "यो वा इमां स्वरशोऽक्षरशः" इति चोक्तत्वात् प्रश्नः। अक्षरं न क्षरमिति; क्रियाशब्दोऽयं नित्यस्यार्थस्य वाचक इति दर्शयति। अत्र क्षियः क्षरतेर्वा विनाशार्थस्य नञ्पूर्वस्य रूपम्। तच्च ब्रह्मतत्त्वं परमार्थतो नित्यम्। व्यवहारनित्यतया तु वर्णपदवाक्यस्फोटानां नित्यत्वं जातिस्फोटस्य वा। अश्नोतेर्वेति; सरन्प्रत्ययस्यानुबन्धलोपे कृतेऽनुकरणं सर इति। तत्रार्थमश्नुते व्याप्नोतीत्यक्षरं पदं वाक्यं वा। वर्णं वाहुरिति; रूढिरियं वर्णस्येत्यर्थः। पूर्वसूत्रे इति; व्याकरणान्तरे "वर्णा अक्षराणि" इति वचनात्। किमर्थमिति; वर्णानां साधुत्वस्याप्रतिपाद्यत्वात् पदस्यैव साधुत्वान्वाख्यानात् प्रश्नः। वर्णज्ञानमिति; वर्णा येन शास्त्रेण ज्ञायन्ते तद्वाचो विषयः; शास्त्रेण वाग्विसीयते आबध्यते; शास्त्रेण तस्याः परिज्ञानादित्यर्थः। यत्र चेति; ब्रह्म वेदः पदे वर्तते। तस्य च शास्त्रं विषयः। लौकिकानां वैदिकानां च शास्त्रं विषय इत्यर्थः। तदर्थमिति; शास्त्रप्रवृत्त्यर्थमित्यर्थः। इष्टबुद्ध्यर्थमिति; कलादिदोषरहितवर्णज्ञानार्थमित्यर्थः। लघ्वर्थमिति; अनुबन्धकरणार्थमित्यर्थः। वाक्समाम्नाय इति; एतावद्भिरेव वर्णैर्वाग्व्यवहार इत्यर्थः। पुष्पितः फलित इति; दृष्टादृष्टफलाभ्यामभ्युदयनिःश्रेयसाभ्यां च। चन्द्रतारकवदिति; अनादित्वान्नित्यत्वं वाग्व्यवहारस्य सूचयति। ब्रह्मराशिरिति; ब्रह्मतत्त्वमेव शब्दरूपतया प्रतिभातीत्यर्थः। सर्ववेदेति; सर्ववेदाध्ययनकृतस्य पुण्यस्य यत् फलं तत् प्राप्नोतीत्यर्थः। मातापितराविति; माहात्म्यातिशयः शास्त्रस्य प्रत्याहारमात्रफलाख्यानद्वारेणान्वाख्यायते। महीयते इति; पूजां प्राप्नुत इत्यर्थः। महीयशब्दः कण्ड्वादियगन्तः।

---

इत्युपाध्यायजैयटपुत्रकैयटकृते महाभाष्यप्रदीपे प्रथमस्याध्यायस्य प्रथमे पादे द्वितीयमाह्निकम् ॥ २ ॥

---

उ.—अक्षरशब्द विचारस्यासंगतिं निराह—अक्षरेति। अत्रातिप्रसक्तिमाह - य इति। वर्णं वेति पक्षापेक्षया वैलक्षण्यमाह—क्रियाशब्द इति। भाष्योक्तं क्रियाद्वयमाह - तत्रेति। क्षियतेरौणादिको रन्प्रत्ययः; क्षरतेरच्प्रत्ययः। उभयथाऽप्यव्ययपूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वम्। ननु ब्रह्मभिन्नस्य नित्यत्वम् "अतोन्यदार्तम्" इति श्रुतिविरुद्धम्; अत आह—तच्चेति; शब्दस्य तु नित्यत्वं कथमित्यत आह—व्यवहारेति। "आभूतसंप्लवं स्थानाममृतत्वं हि भाष्यते।" इति न्यायेन यावद्व्यवहारावस्थानमेव नित्यत्वमित्यर्थः। सरन्प्रत्यये सर इति भाष्यविरोधः, अत आह—सरन्निति। अश्नोतेः सकर्मकत्वादाह - तत्रेति। पूर्वत्र नञ्समासः। अत्रा खण्डं पदमिति क्रियापदत्वं द्वेधोक्तम्। पूर्वस्मात् भेदमाह—रूढिरिति। अवयवार्थो न विवक्षित इत्यर्थः। "ञमञ्' इति पूर्वसूत्रे वर्णे अक्षरशब्दप्रयोगाभावादाह—व्याकरण इति। यद्यपि पस्पशायां वर्णोपदेशस्य प्रयोजनमुक्तं, तथापीह प्रयोजनान्तरकथनाय भाष्ये अथेति प्रश्नः। अस्याभिप्रायमाह—वर्णानामिति। "लोकतोऽर्थप्रयुक्ते" इत्युक्तेः केवलवर्णानां प्रयोगाभावात् साधुत्वं न प्रतिपाद्यमित्यर्थः। वाग्विषय इत्यस्य बहुव्रीहित्वे वर्णज्ञानविशेषणत्वात् पुंलिङ्गानुपपत्तिः; तत्पुरुषत्वे वर्णज्ञानेनान्वयानुपपत्तिः; अत आह—वर्णा इति। शब्दा इत्यर्थः। तर्हि विवक्षितो विषयविषयिभावः; अत आह—तद्वाच इति। शास्त्रेण वाचः किं बन्धनम्? अत आह—शास्त्रेणेति। तदेकसाध्यज्ञानत्वमेव तद्बन्धनमित्यर्थः। तज्ज्ञानसाधनत्वमेव तद्विषयत्वमभिमतमिति भावः। यत्रेत्यनेन शास्त्रं वाग्व्यापारो वा परामृश्यते; उभयथा औपनिषदस्य ब्रह्मणः तद्विषयत्वायोगः; अत आह—ब्रह्मेति। यत्रेत्यनेन वाक्परामर्श इत्याह—पद इति। वाक्शब्दस्य वर्णपदवाक्यसाधारणस्य यत्रेत्यनेन पदपरत्वमुक्तमिति न तद्वैयर्थ्यम्। तस्य पदस्य विषयो ज्ञापकः। एवमग्रेऽपि। पूर्वार्धेन फलितमाह—लौकिकानामिति। तच्छब्देन शास्त्रप्रवृत्तिपरामर्श इत्याह—शास्त्रेति। शास्त्रप्रवृत्त्यतिरिक्तमिष्टमाह—कलेति। तदर्थमित्यनेन प्रत्याहारनिरपेक्षयथासंख्यशास्त्रप्रवृत्तिहेतुत्वमुक्तम्। लध्वर्थमित्यनेन तत्सापेक्षशास्त्रप्रवृत्तिहेतुत्वमुक्तमित्यपौनरुक्त्यमित्याशयेनाह—अनुबन्धेति। अक्षरसमाम्नायस्य वाक्समाम्नायत्वं कथम्? अत आह—एतावद्भिरिति। दृष्टफलं पुत्रादि; अदृष्टफलं स्वर्गादि; अभ्युदयो ब्रह्मलोकावाप्तिः क्रममुक्तिहेतुः। दृष्टादृष्टफलयोरभ्युदयनिःश्रेयसयोश्च हेतुहेतुमद्भावात् दृष्टफलशब्दाभ्यां तयोर्लक्षणेत्याह—दृष्टेति। वर्णैः प्रतिमण्डितो वेदराशिश्चन्द्रतारकवदनादिरिति भाष्यार्थमभिप्रेत्यानादित्वस्य फलमाह—अनादित्वादिति: वाग्व्यवहार इत्यनेन पौनरुक्त्यमाशङ्क्याह—ब्रह्मतत्त्वमिति। पदस्फोटवाक्यस्फोटयोर्ब्रह्मरूपत्वाङ्गीकारादित्यर्थः। वेदात् क्रियानिरपेक्षात् पुण्यं चेदनधीतवेदानामपि स्यात्; अत आह—सर्ववेदेति। अक्षरसमाम्नायरूपवेदाध्ययनफलवत्त्वाद्वारा अक्षरज्ञानस्यापि स्वरवर्णविज्ञानपूर्वकाध्ययनफलातिशयदर्शनादिति भावः। "शास्त्रफलं प्रयोक्तरि" इति न्यायेन क्रियाफलस्य कर्तृगामित्वनियमेन वचनं विना जातेष्टिफलवदन्यगामित्वासंभवादर्थवादत्वमाह—माहात्म्येति। धात्वर्थस्याप्रसिद्धत्वादाह—पूजामिति। 'मह पूजायाम्' इत्यस्य नेदं रूपम्; अत आह—महीयशब्द इति।

इति श्रीमहामहोपाध्यायाद्वैतविद्याचार्यराघवसोमयाजिकुलावतंसश्रीतिरुमलाचार्यवर्यसूनोः अन्नम्भट्टस्य कृतौ महाभाष्यप्रदीपोद्द्योतने प्रथमस्याध्यायस्य प्रथमे पादे द्वितीयमाह्निकम्॥

---

## अथ तृतीयं वृद्ध्याह्निकम् ।

### विधिशेष प्रकरणम् ।

### सू.—वृद्धिरादैच् (१।१।१)

भा.—कुत्वं कस्मान्न भवति "चोः कुः, पदस्य" इति? भत्वात् । कथं भसंज्ञा? "अयस्मयादीनिच्छन्दसि" इति । छन्दसीत्युच्यते ; न चेदं छन्दः । छन्दोवत् सूत्राणि भवन्ति । यदि भसंज्ञा, "वृद्धिरादैजदेङ् गुणः" इति जश्त्वमपि न प्राप्नोति । उभयसंज्ञान्यपि छन्दांसि दृश्यन्ते; तद्यथा—"स सुष्टुभा स ऋक्वता गणेन"। पदत्वात् कुत्वम्, भत्वाज्जश्त्वं न भवति । एवमिहापि पदत्वाज्जश्त्वं, भत्वात् कुत्वं न भविष्यति ।

प्र.—कुत्वं कस्मान्न भवतीति, अनेकशक्तेः शब्दस्य शक्त्यवच्छेदेन संज्ञिनि विनियोगान्नित्यत्वाच्च सर्वसंज्ञानां लौकिकत्वादादैच्छब्दस्यानुकरणशब्दत्वाज्जातिशब्दत्वाद्वा शास्त्रप्राप्तिरस्तीति प्रश्नः । तत्र कुशब्दः पञ्चसु वर्णेष्वासक्तरूपो वाचकत्वेन नियुक्त इति शब्दस्वरूपे प्रवृत्तिनिमित्ते भावप्रत्यय । छन्दोवदिति; न वैशेषिकादिसूत्राणि; अपित्वङ्गत्वात् व्याकरणसूत्राण्येव । इष्टिश्चेयम्—छन्दोवदिति ॥

उ.—त्रयी शब्दानां प्रवृत्तिरिति पक्षे संज्ञाशब्दानां जात्यादिशब्दत्वाभावादनादित्वाभावेन चालक्ष्यत्वादव्याप्तिशङ्कानुपपत्तिमाशङ्क्याह—अनेकशक्तेरिति॥ आदैच्छब्दस्य लौकिकत्वाच्छास्त्रप्राप्तिरस्तीत्यन्वयः ; लौकिकत्वेऽप्यनादित्वाभावान्न लक्ष्यत्वम्, "सिद्धे शब्दार्थसंबन्धे" इति नित्यानामेव लक्ष्यत्वोक्तेः ; अत आह—नित्यत्वादिति। डित्थादीनामैजादीनां च संग्रहाय सर्वेत्युक्तम् । व्याकारणपरम्पराया अनादित्वेनैजादीनामपि नित्यत्वमिति भावः । तर्हि "आदिरन्त्येन" इत्यस्य वैयर्थ्यं स्यात्; अत आह—शक्त्यवच्छेदेनेति; अवच्छेदः संकोचः । शक्तिसंकोचार्थम् "आदिरन्त्येन" इति सूत्रम् । 'अध्ययनेन वसति' इत्यादौ फलस्यापि हेतुत्वेन तृतीयादर्शनात् । नन्वैच्छब्दस्य वर्णद्वय एव शक्तत्वात् संकोचो व्यर्थः ; अत आह—अनेकशक्तेरिति। सर्वोऽपि शब्दोऽनेकशक्तिकः । घटशब्दस्य क्वचित् संकेते तत्र

शक्तेरावश्यकत्वात् शक्तिं विना बोधकत्वासंभवात् तस्याश्चानित्यतया पुरुषप्रयत्नाधीनत्वात्। एवमैच्छब्दस्यापि पुरुषविशेषे संकेतसंभवात् तन्निवृत्तये शक्त्यवच्छेद आवश्यकः। तदुक्तं हरिणा "अपत्यं पौत्रप्रभृति" इति सूत्रे

"व्यवहाराय नियमः संज्ञायाः संज्ञिनि क्वचित्।
नित्य एव हि संबन्धो डित्थादिषु गवादिवत्॥

वृद्ध्यादीनां च शास्त्रेऽस्मिन् शक्त्यवच्छेदलक्षणः।
अकृत्रिमोऽभिसंबन्धो विशेषणविशेष्यवत्॥"

इति। नचैवम् 'अन्यायश्चानेकार्थत्वम्' इति न्यायविरोधः, पौरुषेयसंकेतनिरपेक्षस्थल एव तदङ्गीकारात्। तद्भावे सैन्धवादिवदनेकशक्तेरविरोधादिति भावः। पाणिनिनैवैताःसंज्ञा रचिताः, न तु व्याकरणान्तरप्रसिद्धाः, तथाचानित्यत्वमिति चेत् तत्राह—जातिशब्दत्वादिति॥ नन्वैच्छब्दवाच्यवर्णद्वये जात्यभावात् कथं जातिशब्दत्वम्; अत आह—अनुकरणेति। "आदिरन्त्येन" इत्यनेन निष्पन्नस्यैजित्यस्येदमनुकरणम्। तत्रानुकार्यशब्दनिष्ठा या जातिः सा अनुकरणशब्दस्य प्रवृत्तिनिमित्तमिति द्वितीयाह्निके प्रदीप एवोक्तम्। यद्यप्यनुकरणशब्दत्वादित्येवालम्, 'कुमार्यू लृतक इत्याह' इत्यादौ तस्य साधुत्वस्येष्टत्वात्; तथाऽपि शब्दप्रवृत्तेस्त्रित्वनियमात् तत्रान्तर्भावसूचनाय जातिशब्दत्वादित्युक्तम्। ऐजिति "ऐ औच्" इति सूत्रस्यैकदेशानुकरणद्वारानुकरणमिति तु न, अनुकार्यसदृशस्यैवानुकरणत्वात्॥ ननु पञ्चसु वर्णेषु प्रवृत्तिनिमित्तधर्माभावात् भावप्रत्ययानुपपत्तिः; अत आह—तत्रेति; कुत्वशब्दे। भाष्ये इति तु न, कुत्वशब्दद्वारैव भाष्ये तत्सत्त्वात्। शब्दस्यार्थनिष्ठत्वाभावान्न प्रवृत्तिनिमित्तत्वम्; अत आह—कुशब्द इति। आसक्तरूपः; आरोपितरूपः। शब्दस्वरूपं संज्ञिन्यारोप्य संज्ञा क्रियते। तथाच कुशब्द एव प्रवृत्तिनिमित्तं, देवदत्तसंज्ञोऽयमितिप्रतीतेः। संज्ञाव्यतिरिक्तस्थल एव वाचकप्रवृत्तिनिमित्तयोर्भेदनियमः॥ प्राञ्चस्तु—रूपशब्देन कुत्वं नाम कुशब्दगतं सामान्यमभिधीयते। तथाच ककारादिष्वारोपितं कुशब्दत्वं प्रवृत्तिनिमित्तम्; कुशब्दश्च संज्ञेति वाचकप्रवृत्तिनिमित्तयो; र्भेदो दर्शित इत्याहुः। तच्चिन्त्यम्, देवदत्तशब्दात् देवदत्तशब्दत्ववानिति प्रतीत्यापत्तेः - शब्दस्य प्रवृत्तिनिमित्तप्रकारकबोधजनकत्वनियमात्। अत्र स्वार्थो न विवक्षितः; कुशब्दः कस्मान्न भवतीत्यर्थः। अनेन भाष्येण क्वचित् स्वार्थेऽपि त्वप्रत्ययोऽस्तीति ज्ञाप्यत इत्याहुः; भाष्ये-पदस्येत्युक्तिर्झलीत्येतन्निरपेक्षपदमात्रस्य कुत्वनिमित्तत्वद्योतनाय; भसंज्ञया पदसंज्ञाबाधनद्वारा कुत्वनिरासाय च। अतिप्रसङ्गं निराह—नेति॥ अङ्गत्वादिति हेतूक्त्या कल्पसूत्राद्यपि संगृहीतम्। पुराणादिसंग्रहाय सूत्रपदमृषिवचनमात्रपरमित्याहुः। ननु "अयस्मयादीनिच्छन्दसि" इत्यत्र मुख्यच्छन्दस एव ग्रहणं न गौणस्य; अत आह—इष्टिरिति। भाष्ये—वृद्धिरादैजदेङ्गुण इति; पूर्वं संहितयैव सूत्राणि पठितानि; पश्चाद्विभागः कृत इति भावः। यद्वा इदानीमेव संहिताविवक्षायां यदि कश्चित् तथा प्रयुङ्क्ते तत्रेत्यर्थः॥ भाष्ये - उभयसंज्ञानि; उभे संज्ञे निमित्तत्वेन

येषां कार्याणां तानि, तथा। "उभादुदात्तो नित्यम्" इति नित्यग्रहणात् वृत्तिविषये उभय-शब्दः। यद्यपि कुत्वजश्त्वाभावयोर्न साक्षात् भसंज्ञाकार्यत्वं, तथापि पदसंज्ञाविघटनद्वारा तत्कार्यत्वम्। "षष्ठीयुक्तश्छन्दसि वा" इत्यत्र 'छन्दसि वा' इति योगविभागेनैकसंज्ञावारणात् संज्ञाद्वयसमावेश इति भगवतो हृदयमित्याहुः॥

भा.—किं पुनरिदं तद्भावितग्रहणम्—वृद्धिरित्येवं ये आकारैकारौकारा भाव्यन्ते तेषां ग्रहणम्? आहोस्विदादैज्मात्रस्य? किं चातः? यदि तद्भावितग्रहणं, 'शालीयः, मालीयः' इति वृद्धलक्षणश्छो न प्राप्नोति। 'आम्रमयम्, *शालमयम्' वृद्धलक्षणो मयण् न प्राप्नोति। 'आम्रगुप्तायनिः, शालगुप्तायनिः' वृद्धलक्षणः फिञ् न प्राप्नोति। अथादैज्मात्रस्य ग्रहणं, 'सर्वो भासः सर्वभासः' इति "उत्तरपदवृद्धौ सर्वं च" इत्येष विधिः† प्राप्नोति। इह च 'तावती भार्या यस्य तावद्भार्यः, यावद्भार्यः' "वृद्धिनिमित्तस्य" इति पुंवद्भावप्रतिषेधः प्राप्नोति। अस्तु तर्हि आदैज्मात्रस्य ग्रहणम्। ननु चोक्तं 'सर्वो भासः सर्वभासः' इति "उत्तरपदवृद्धौ सर्वं च" इत्येष विधिः प्राप्नोति इति। नैष दोषः। नैवं विज्ञायते—उत्तरपदस्य वृद्धिः, उत्तरपदवृद्धिः, उत्तरपदवृद्धाविति। कथं तर्हि? "उत्तरपदस्य" इत्येवं प्रकृत्य या वृद्धिस्तद्वत्युत्तरपदे, इत्येवमेतद्विज्ञायते। अवश्यं चैतदेवं विज्ञेयम्। तद्भावितग्रहणे सत्यपीह प्रसज्येत 'सर्वः कारकः सर्वकारकः' इति। यदप्युच्यते—इह 'तावती भार्या यस्य तावद्भार्यः, यावद्भार्यः' इति च "वृद्धिनिमित्तस्य" इति पुंवद्भावप्रतिषेधः प्राप्नोतीति; नैष दोषः। नैवं विज्ञायते—वृद्धेर्निमित्तं वृद्धिनिमित्तं, वृद्धिनिमित्तस्येति। कथं तर्हि? वृद्धेर्निमित्तं यस्मिन् सोऽयं वृद्धिनिमित्तः, वृद्धिनिमित्तस्येति। किंच वृद्धेर्निमित्तम्? योऽसौ ककारो ञकारो णकारो वा। अथवा यः कृत्स्नाया वृद्धेर्निमित्तम्। कश्च कृत्स्नाया वृद्धेर्निमित्तम्? यस्त्रयाणामाकारैकारौकाराणाम्।

---

* सालमयम् इति अन्नंभट्टसंमतः पाठः।

† एष स्वरः इति अन्नंभट्टसंमतः पाठः।

प्र॰—किं पुनरिति ; उभयथा शास्त्रे दर्शनात् पक्षद्वयेऽपि दोषसंभवात् प्रश्नः ॥ उत्तरपदस्येत्येवमिति ; तत्र हि "वृद्धौ सर्वं च" इत्यप्युच्यमाने वृद्धिमात्रस्योत्तरपदस्याभावात् सामर्थ्यात् वृद्धिमदुत्तरपदं ग्रहीष्यत इत्यतिरिच्यमानमुत्तरपदग्रहणं सामर्थ्यादुत्तरपदाधिकारमवगमयति ॥ वृद्धेर्निमित्तं यस्मिन्निति ; निमित्तशब्दोपादानसामर्थ्यात् व्यधिकरणपदो बहुव्रीहिराश्रीयते । अन्यथा 'वृद्धेस्तद्धितस्य' इत्येव ब्रूयात् ॥ वृद्धिनिमित्तत्वाच्च तद्धितस्य तद्धित एव वृद्धिशब्देनाभिधायिष्यते । अथवा वृद्धेः संबन्धी यस्तद्धित इति वैयधिकरण्येन संबन्ध आश्रयिष्यते ॥ योऽसौ ककार इति ; कञणेषु सत्सु वृद्धिर्भवतीति तेषामेव निमित्तत्वम् ॥ अथवेति ; निमित्तशब्दोपादानादेवाश्रितबहुत्वसंख्यो वृद्धिशब्दः समस्यते वृद्धीनां निमित्तं वृद्धिनिमित्तमिति ।

उ.—नन्वादैजित्यतद्भावितग्रहणमेव प्रतीयते, न तद्भावितग्रहणम् ; अत आह—उभयथेति ॥ यद्यपि त्रेधा शास्त्रे दर्शनम्—भादिसंज्ञा अतद्भावितानामेव ; लोपसंज्ञा प्रसक्तादर्शनमात्रस्य ; लुगादिसंज्ञा तद्भावितस्यैव ; तथाऽपि तद्भाविताभावादतद्भावितानामेव भादिसंज्ञा ; अत्र तु तत्संभवात् पक्षद्वयमेवेत्यभिप्रेत्य उभयथेत्युक्तम् । तन्त्रेणावृत्त्या वा वृद्धिशब्दद्वित्वे 'वृद्धिरिति यः आदैच् स वृद्धिः' इति तद्भावितपक्षः ; वृद्धिशब्दैकत्वे द्वितीय इति विवेकः । काकदन्तविचारतुल्यतां निराह—पक्षद्वयेऽपीति । भाष्योदाहृतेषु, शालाशब्दे स्वतःसिद्धः ; आम्रशब्दे "अमितम्योर्दीर्घश्च" इति विहितः ; सालशब्दे "आदेच उपदेशे" इति विहित आकारः ; न तु वृद्धिशब्देन विहित इति वृद्धिसंज्ञाया अभावे तन्निमित्तवृद्धसंज्ञाया अप्यभावात् "वृद्धाच्छः" "नित्यं वृद्धशरादिभ्यः" "उदीचां वृद्धादगोत्रात्" इति छादयो न स्युरित्यर्थः । भाष्ये—एष स्वरइति ; पूर्वपदान्तोदात्तत्वम् । भाष्ये—तावद्धार्यं इति ; "यत्तदेतेभ्यः परिमाणे वतुप्" । स च "आ सर्वनाम्नः" इत्याकारस्य निमित्तमिति वृद्धिनिमित्तस्येति पुंवद्भावप्रतिषेधप्रसङ्ग इत्यर्थः । भाष्ये—अस्त्विति ; यदि प्रथमपक्षे दोषो दुरुद्धरः तदा अस्तु तर्हीति योजना - भाष्ये—नैवमिति ; स्वार्थवृत्तेः षष्ठीसमासो निषिध्यते ; अधिकारलक्षकस्यापि षष्ठीसमास एव । तदधिकारसंबन्धिनी या वृद्धिरिति । यद्वा, उत्तरपदशब्देन तदधिकारविहितं लक्ष्यते ; वृद्धिशब्देन समानाधिकरणसमासः, समासेन च तादृशवृद्धिमल्लक्ष्यते ; तदधिकारविहिता वृद्धिर्यस्येति बहुव्रीहिर्वेत्यभिप्रेत्य तद्वतीत्युक्तम् ॥ तत्राधिकारलक्षणामुपपादयति—तत्रेति ; वृद्धिमदिति ; अवयववाचिना अवयविलक्षणेत्यर्थः । समानाधिकरणानां बहुव्रीहिनियमादाह—निमित्तेति । सामर्थ्यमेवाह—अन्यथेति ; बहुव्रीहेरनभिमतत्वे लक्षणया सामानाधिकरण्यमाह—वृद्धिनिमित्तत्वाच्चेति । वृद्ध्यात्मकतद्धिताभावात् "अरक्तविकारे" इति निषेधात्तल्लक्षणाङ्गी-

कार इति भावः। लक्षणाभयादाह—अथवेति। "किति च" इत्यादौ प्रत्ययस्यैव वृद्धिनिमित्तत्वप्रतीतेः ककारादेर्न निमित्तत्वम्; अत आह—कारणेष्विति; विशिष्टनिमित्तत्वे विशेषणानामपि निमित्तत्वमिति भावः। एवकारोऽप्यर्थः। निमित्तत्वमेवेति वाऽन्वयः। ञिति णिति तद्धितेष्वित्यनेन सामानाधिकरण्यायोगात्तद्धितेष्वितो ये ञकारणकारादयस्तेषु वृद्धिरित्यर्थाश्रयणात् तद्धितस्योपलक्षणत्वेन तेषामेव निमित्तत्वमिति तु न सम्यक्, विभक्तिविपरिणामेन सामानाधिकरण्यसंभवात्, "अचो ञ्णिति" इत्यत्र प्रत्ययपरस्य ञ्णितः "तद्धितेषु" इत्यत्रानुवृत्तस्य केवलञकारादिपरत्वायोगात्, केवलञकारादेः प्रकृतिपरत्वासंभवेन "तस्मिन्" इति परिभाषाबाधप्रसङ्गात् अङ्गाक्षिप्तप्रत्ययविशेषणत्वस्यैव युक्तत्वात् "तद्धितेषु" इति निर्धारणसप्तमीत्वोपपत्तेः तद्धितेषु यः ञित्प्रत्ययस्तस्मिन्निति; तद्धितेषु यः ककारादिरित्यत्र तद्धितस्यापि विशेषणतया निमित्तत्वसंभवेनैवकारानुपपत्तेश्च॥ ननु यदि कृत्स्नाया इत्यनेन बहुवचनान्तविग्रहोऽभिप्रेतः, स च समासे एकत्वसंख्याभानादयुक्तः; अत आह—निमित्तेति; अन्यथा 'वृद्धिस्तद्धितस्य' इत्येवावक्ष्यदित्यर्थः॥

**वा.—संज्ञाधिकारः संज्ञासंप्रत्ययार्थः।**

**भा.—'अथ संज्ञा' इत्येवं प्रकृत्य वृद्ध्यादयः शब्दाः पठितव्याः। किं प्रयोजनम्? संज्ञासंप्रत्ययार्थः; वृद्ध्यादीनां शब्दानां संज्ञेत्येष संप्रत्ययो यथा स्यात्।**

**वा.—इतरथा ह्यसंप्रत्ययो यथा लोके।**

**भा.—अक्रियमाणे हि संज्ञाधिकारे वृद्ध्यादीनां संज्ञेत्येष संप्रत्ययो न स्यात्। इदमिदानीं बहुसूत्रमनर्थकं स्यात्। अनर्थकमित्याह। कथम्? यथा लोके। लोके ह्यर्थवन्ति चानर्थकानि च वाक्यानि दृश्यन्ते। अर्थवन्ति तावत्—'देवदत्त गामभ्याज शुक्लां दण्डेन' 'देवदत्त गामभ्याज कृष्णाम्' इति। अनर्थकानि—'दश दाडिमानि षडपूपाः कुण्डमजाजिनं पललपिण्डः अधरोरुकमेतत् कुमार्याः स्फैयकृतस्य पिता प्रतिशीनः' इति।**

**वा.—संज्ञासंज्ञ्यसंदेहश्च।**

**भा.—क्रियमाणेऽपि संज्ञाधिकारे संज्ञासंज्ञिनोरसंदेहो वक्तव्यः। कुतो ह्येतत्—वृद्धिशब्दः संज्ञा, आदैचः संज्ञिन इति; न पुनरादैचः संज्ञा, वृद्धिशब्दः संज्ञीति?**

प्र.—संज्ञाधिकार इति वार्तिकम् । तस्य व्याख्यानम् अथ संज्ञे-त्येवमिति । अथशब्दः संज्ञायाः प्रस्तावद्योतनार्थः । वृद्ध्यादीनामिति; संप्रत्यय इत्येतदपेक्षया कर्मणि षष्ठी । वृद्ध्यादयः संज्ञात्वेन यथा प्रतीयेरन्नित्यर्थः । यथा लोके इति; कात्यायनेनासंप्रत्यये लोको दृष्टान्तत्वेनोपात्तः । भाष्यकारस्तु वाक्याध्याहारेणानर्थकत्वे लोकं दृष्टान्तत्वेन योजयति। बहुसूत्रमिति बहुव्रीहिः । प्रकरणं चान्यपदार्थः । समाहारे द्विगुर्वा । अर्थवन्ति चेति; यथा लोके अर्थवन्ति प्रयुङ्क्ते एवमनर्थकान्यपीत्यर्थः । यावदाप्तत्वमाचार्यस्य न साधितं तावदनर्थकत्वशङ्का; झटिति समन्वयानवगमाद्वा । दश दाडिमानीति; पदार्थानां समन्वयाभावादत्रानर्थक्यम् ।

उ.—सूत्रव्याख्यार्थं प्रवृत्तस्य कात्यायनस्य दुरुक्तचिन्ता न युक्ता; अत आह—वार्तिकमिति। अथशब्दाधिक्यादव्याख्यानशङ्कां वारयति—तस्येति। वार्तिकस्थाधिकारव्याख्यानायाथशब्द इत्याह—अथशब्द इति; निपातानां द्योतकतया अधिकारशब्दोक्तप्रस्तावद्योतकस्तत् व्याख्यायत इति नाधिकप्रक्षेप इत्यर्थः। वृद्ध्यादीनामेव संज्ञात्वेन संज्ञासंबन्धे षष्ठी न संभवति; अत आह—संप्रत्यय इति। ततः फलितमाह—वृद्ध्यादय इति। भाष्ये इतिशब्दः प्रकारार्थ इत्याह—संज्ञात्वेनेति। वार्तिककृतोऽकौशलं निराह—यथेति। वाक्येति— इतरथा ह्यसंप्रत्ययोऽनर्थकं च यथा लोक इत्यनर्थकशब्दाध्याहारेणेत्यर्थः। अधिकाराभावे असंप्रत्ययस्य स्पष्टत्वात् तत्र दृष्टान्तानुपयोगादध्याहार इत्याशयः। समाहारद्विगौ ङीपा भाव्यम्; अत आह—बहुव्रीहिरिति॥ अन्यपदार्थस्य शब्दान्तरेणोपादानात् बहुव्रीहित्वानिश्चयादाह; समाहार इति; पात्रादेराकृतिगणत्वात् ङीबभाव इति भावः। आनर्थक्ये लोकस्य दृष्टान्तत्वात् अर्थवन्ति चेत्ययुक्तम्; अत आह—यथेति। पदसमूहमात्रं वाक्यमित्यभिप्रेत्य भाष्ये अनर्थकानि वाक्यानीत्युक्तम्; आनर्थक्याभिधानं न तत्त्वत इत्याह—यावदिति। झटितीति; आचार्याचारादिना विनेत्यर्थः। पदार्थसद्भावादाह—पदार्थानामिति। भाष्ये—संज्ञिन इति; कुत इत्यन्वयः॥

**भा.—यत् तावदुच्यते 'संज्ञाधिकारः कर्तव्यः संज्ञासंप्रत्ययार्थः' इति; न कर्तव्यः ।**

**वा.—आचार्याचारात् संज्ञासिद्धिः ।**

**भा.—आचार्याचारात् संज्ञासिद्धिर्भविष्यति । किमिदमाचार्याचारादिति? आचार्याणामुपचारात् ।**

वा.—यथा लौकिकवैदिकेषु ।

भा.—तद्यथा लौकिकेषु वैदिकेषु च कृतान्तेषु । लोके तावन्मातापितरौ पुत्रस्य जातस्य संवृतेऽवकाशे नाम कुर्वाते—'देवदत्तः, यज्ञदत्तः' इति । तयोरुपचारादन्येऽपि जानन्ति—इयमस्य संज्ञेति । वेदेऽपि याज्ञिकाः संज्ञां कुर्वन्ति—'स्फ्यः, यूपः, चषालः' इति । तत्रभवतामुपचारादन्येऽपि जानन्ति—इयमस्य संज्ञेति । एवमिहापि । इहैव तावत् केचिद्व्याचक्षाणा आहुः—वृद्धिशब्दः संज्ञा, आदैचः संज्ञिन इति । अपरे पुनः "सिचि वृद्धिः" इत्युक्त्वा आकारैकारौकारानुदाहरन्ति । तेन मन्यामहे—यया प्रत्याय्यन्ते सा संज्ञा, ये प्रतीयन्ते ते संज्ञिन इति ।

भा.—यदप्युच्यते—क्रियमाणेऽपि संज्ञाधिकारे संज्ञासंज्ञिनोरसन्देहो वक्तव्य इति ।

वा.—संज्ञासंज्ञ्यसंदेहश्च ।

भा.—संज्ञासंज्ञिनोश्चासंदेहः सिद्धः । कुतः ? आचार्याचारादेव । उक्त आचार्याचारः ।

वा.—अनाकृतिः ।

भा.—अथवा अनाकृतिः संज्ञा, आकृतिमन्तः संज्ञिनः । लोकेऽपि ह्याकृतिमतो मांसपिण्डस्य देवदत्त इति संज्ञा क्रियते ।

वा.—लिङ्गेन वा ।

भा.—अथवा किंचिल्लिङ्गमासज्य वक्ष्यामि—इत्थंलिङ्गा संज्ञेति। वृद्धिशब्दे च तल्लिङ्गं करिष्यते ; नादैच्छब्दे ।

प्र॰—आचार्याचारादिति ; आचार्याणां व्यवहारादित्यर्थः ॥ वृद्धिशब्दः संज्ञेति ; वृद्धिशब्दस्य प्रत्यायनशक्तिर्व्याख्यानेनैव प्रकाश्यते । यथादैचां वर्णानामिति वर्णत्वम् । अपर इति ; प्रदेशाद्वा संज्ञासंज्ञ्यभि-

व्यक्तिः, संज्ञासूत्रार्थाद्वा प्रदेशार्थस्य व्यवस्थेति भावः ॥ अनाकृतिरिति ; आकृत्या साहचर्याद्भेदो लक्ष्यते । तेनायमर्थः—वृद्धिशब्द एकत्वात् संज्ञा ; आदैचां बहुत्वात् संज्ञित्वम् । लाघवार्थं हि संज्ञाकरणम् । यथा—"सर्वादीनि सर्वनामानि" इत्यनेकस्यैका संज्ञा क्रियते । न त्वेकस्यानेका संज्ञा, प्रयोजनाभावात् ॥ आकृतिमत इति ; अवस्थाभेदेष्वपि 'स एवायम्' इति प्रत्यभिज्ञानिमित्तकं देवदत्तत्वादिकं सामान्यमस्तीत्याकृतिमत इत्युक्तम् ॥ लिङ्गेन वेति ; कलादिना वर्णदोषेणेत्यर्थः ।

उ.—आचारशब्दस्यार्थान्तरं वारयति—व्यवहारादिति । भाष्यस्थोपचारशब्दस्य वा अमुख्यार्थत्वशङ्कां वारयति—व्यवहारादिति । यथा व्रीह्यादिष्वपूर्वसाधनत्वशक्तिः प्रोक्षणादिना क्रियते नैवं व्याख्यानेनात्र शक्तिः क्रियत इत्याह—वृद्धिशब्दस्येति । यथेति । आदैचः संज्ञिन इति व्याख्यानेन वर्णत्वं व्यज्यते ; न त्वविद्यमानमुत्पाद्यते । परिहारयोर्भेदमाह—प्रदेशाद्वेति । विधिसूत्रव्याख्यानेन वा संज्ञासूत्रार्थनिश्चयः ; वैपरीत्यं वेत्यर्थः । नन्वाकृतिशब्देन जातिवाचिना नञ्समासे आदैचामपि जातिभिन्नत्वात् संज्ञात्वप्रसङ्गः ; बहुव्रीहिसमासे शब्दत्वादिजातियुक्तवृद्धिशब्दस्यापि संज्ञात्वं न स्यात् ; अत आह—आकृत्येति । बहुव्रीहिमभिप्रेत्याह—तेनेति । अनाकृतिः संज्ञेत्येतन्न कामसिद्धमित्याह—लाघवार्थमिति । दृष्टान्तव्याजेन तत्राप्येवमित्याह—यथेति ; अवस्थेति ; परिणामभेदेन द्रव्यभेदादिति भावः । प्रत्यभिज्ञानिमित्तकम् ; तत्प्रमाणकम् । कलादयः पस्पशान्ते भाष्ये प्रदर्शिताः

**भा.—इदं तावदयुक्तम्—यदुच्यते आचार्याचारादिति । किमत्रायुक्तम् ? तमेवोपालभ्यागमकं ते सूत्रमिति, तस्यैव पुनः प्रमाणीकरणमित्येतदयुक्तम् । अपरितुष्यन् खल्वपि भवाननेन परिहारेण 'अनाकृतिर्लिङ्गेन वा' इत्याह । तच्चापि वक्तव्यम् । यद्यप्येतदुच्यते । अथवैतर्हि इत्संज्ञा न वक्तव्या ; लोपश्च न वक्तव्यः । संज्ञालिङ्गमनुबन्धेषु करिष्यते । न च संज्ञाया निवृत्तिरुच्यते । स्वभावतः संज्ञा संज्ञिनं प्रत्याय्य स्वयं निवर्तते । तेनानुबन्धानामपि निवृत्तिर्भविष्यति । सिद्ध्यत्येवम् । अपाणिनीयं तु भवति । यथान्यासमेवास्तु । ननु चोक्तम्—'संज्ञाधिकारः संज्ञासंप्रत्ययार्थः, इतरथा ह्यसंप्रत्ययो यथा लोके' इति । न च यथा लोके, तथा व्याकरणे। प्रमाणभूत आचार्यो**

**दर्भपवित्रपाणिः शुचाववकाशे प्राङ्मुख उपविश्य महता प्रयत्नेन सूत्राणि प्रणयति स्म । तत्राशक्यं वर्णेनाप्यनर्थकेन भवितुम्, किं पुनरियता सूत्रेण । किमतो यदशक्यम्? अतः संज्ञासंज्ञिनावेव ।**

प्र·—तमेवोपालभ्येति; यो हि सूत्रकारमुपालभते अगमकं ते सूत्रमिति, स कथं वृत्तिकारान् प्रामाण्येनाश्रयतीत्यर्थः । अपरितुष्यन्निति; त्वयापि परिहारान्तरं ब्रुवता आचार्याचारो न प्रमाणत्वेनाश्रित इत्यर्थः ॥ तच्चापीति; लिङ्गेन वेत्येतद्वक्तव्यमित्यर्थः । अनाकृतिः संज्ञेत्येतत्तु न्यायसिद्धत्वान्न वक्तव्यम् । अथवैतर्हीति; एवं सतीत्यर्थः । ङकारादिष्वनुबन्धेषु कलादिकमासङ्क्ष्यते । ततश्च तेषां संज्ञात्वे सति 'ङादात्मनेपदम्' इति करिष्यते । संज्ञाश्च संज्ञिनं प्रत्याय्य स्वयं निवर्तन्त इतीत्संज्ञा लोपश्च न वक्तव्यौ भवत इत्यर्थः ॥ प्रमाणभूत इति; प्रामाण्यं प्राप्त इत्यर्थः । 'भू प्राप्तौ' इत्यस्य "आधृषाद्वा" इति णिजभावे रूपम् । वृत्तिविषये च प्रमाणशब्दः प्रामाण्ये वर्तते । दर्भपवित्रेति; प्रमादाभावं दर्शयति ॥ प्राङ्मुख इति; प्राच्या अभ्युदयहेतुत्वात् । महतेति; मनःप्रणिधानं दर्शयति । एतच्च सर्वमागमाद्बोद्धव्यम् । एवमानर्थक्ये परिहृते संज्ञासंप्रत्ययाय पक्षान्तराणि प्रश्नमुखेन प्रतिक्षिपति—किमत इति ।

उ.—वृत्तिकारादिव्याख्यानस्य निर्णायकत्वाङ्गीकारात् तस्येत्येकत्वमयुक्तमित्याशङ्क्य तस्येति तत्संबन्धिपरमित्याह—यो हीति । अपरितोषं व्यनक्ति—त्वयापीति । तच्चापीत्यपिना अनाकृतिसमुच्चयशङ्कां वारयति—लिङ्गेनेति; चाप्योर्वाक्यालंकारार्थत्वमिति भावः । एवं सति; एवं तर्हि । ङकारादिषु; धातुस्थेषु । संज्ञात्वे सतीति; वृद्धिशब्दवत् ङकारादिष्वपि संज्ञालिङ्गासङ्गे यस्मिन् धातौ ङकारादिः स तस्य धातोः संज्ञेति सिध्यतीत्यर्थः । संज्ञात्वसिद्धेः प्रयोजनमाह—ङादिति । ङित इति त्यक्त्वा ङादिति वक्तव्यमित्यर्थः । अभूततद्भावे प्रमाणीभूत इति स्यात् । तदविवक्षायां प्रमाणमाचार्यः प्रकारान्तरेण भूत इति स्यात्; अत आह—प्रामाण्यमिति । पिशाचादिनिमित्तप्रमादः शुचित्वेन निरस्यत इत्याह—प्रमादेति । आगमात्; संप्रदायात् । पक्षान्तरनिरासस्य प्रयोजनमाह—संज्ञेति, परिशेषेणेत्यादिः ॥

**भा.—कुतो नु खल्वेतत् संज्ञासंज्ञिनावेवेति? न पुनः साध्वनुशासनेऽस्मिन्शास्त्रे साधुत्वमनेन क्रियते? कृतमनयोः**

साधुत्वम् । कथम्? वृधिरस्मायविशेषेणोपदिष्टः प्रकृतिपाठे, तस्मात् क्तिन्प्रत्ययः । आदैचोऽप्यक्षरसमाम्नाये उपदिष्टाः । प्रयोगनियमार्थं तर्हीदं स्यात्—वृद्धिशब्दात् परे आदैचः प्रयोक्तव्या इति । नेह प्रयोगनियम आरभ्यते । किं तर्हि? संस्कृत्य संस्कृत्य पदान्युत्सृज्यन्ते तेषां यथेष्टमभिसंबन्धो भवति । तद्यथा—'आहर पात्रम्; पात्रमाहर' इति । आदेशास्तर्हीमे स्युः—वृद्धिशब्दस्यादैच आदेशाः। षष्ठीनिर्दिष्टस्यादेशा उच्यन्ते । न चात्र षष्ठीं पश्यामः । आगमास्तर्हीमे स्युः—वृद्धिशब्दस्यादैच आगमाः । आगमा अपि षष्ठीनिर्दिष्टस्यैवोच्यन्ते । लिङ्गेन च । न चात्र षष्ठीं, न खल्वप्यागमलिङ्गं पश्यामः । इदं खल्वपि भूयः सामानाधिकरण्यमेकविभक्तित्वं च । द्वयोश्चैतद्भवति । कयोः? विशेषणविशेष्ययोर्वा; संज्ञासंज्ञिनोर्वा। तत्रैतत् स्याद्विशेषणविशेष्ये इति । तच्च न, द्वयोर्हि प्रतीतपदार्थकयोर्लोके विशेषणविशेष्यभावो* भवति । न चादैच्छब्दः प्रतीतपदार्थकः । तस्मात् संज्ञासंज्ञिनावेव ।

प्र.—कृतमनयोरिति; अदैच्छब्दस्य द्वन्द्वत्वादनयोरिति द्विवचननिर्देशः । आदैच इति । तेषां च द्वन्द्वनिर्देशोऽयम्, आदैच्छब्द इत्यर्थः ॥ प्रयोगनियमार्थमिति; आदैज्वृद्धिरिति प्रयोगो मा भूदित्यर्थः । नेहेति; प्रयुज्यत इति प्रयोगः । तत्र स्वतन्त्रस्य पदस्य प्रयुज्यमानस्य नियमो नारभ्यते; अपितु पदावयवस्य प्रकृतिप्रत्ययोपसर्जनागमादिरूपस्य । लोके च केवल एव वृद्धिशब्दः प्रयुज्यत इति न तस्यानेन नियमः क्रियते; लोके प्रयुक्तानामिदमनुशासनम् ॥ षष्ठीनिर्दिष्टस्येति; स्थानशब्दोऽर्थवाची । तिष्ठन्त्यस्मिन् शब्दा इति स्थानम् । न च वृद्धिशब्दार्थमादैचो वक्तुं शक्ताः । तेनात्र षष्ठ्यर्थाभावादिति तात्पर्यम् । तथा हि—षष्ठ्यभावेऽपि तदर्थसद्भावाद्भवत्येव स्थान्यादेशभावः; यथा—"नाभि नभं च" "परस्त्री परशुं च" इति ॥ आगमा अपीति;

---

* विशेषणविशेष्ययोग इति, अन्नभट्टसंमतः पाठः ।

अत्राप्यर्थोऽपेक्ष्यते। अनागमकानामर्थे सागमका इत्यर्थः॥ लिङ्गेन चेति; देशविशेषप्रतिपत्तये टकारादिलिङ्गं तत्र क्रियत इत्यर्थः॥ इदं खल्वपीति; विशेषणविशेष्यभावनिराकरणेन संज्ञापक्षं स्थापयति॥ 'देवदत्तः पचति' इत्यस्ति सामानाधिकरण्यं न त्वेकविभक्तित्वम्, 'गौरश्व' इत्यस्त्येकविभक्तित्वं, न तु सामानाधिकरण्यमित्युभयोरुपादानम्। संज्ञा-संज्ञिनोरप्यस्ति विशेषणविशेष्यत्वम्; प्रसिद्ध्यप्रसिद्धिवशात्तु भेदेनोपादानम्। तत्तु* सामानाधिकरण्यं शब्दयोरेव केचिदिच्छन्ति। द्वाभ्यां शब्दाभ्यां भिन्नप्रवृत्तिनिमित्ताभ्यामेकस्याधिकरणस्याभिधेयस्य प्रतिपादनात्, विशेषण-विशेष्यार्थप्रतिपादनाच्च विशेषणविशेष्यत्वम्। अन्ये तु 'नीलमुत्पलम्' इति प्रवृत्तिनिमित्तयोर्जातिगुणयोरेकमधिकरणमाश्रय इति सामानाधिकरण्यं विशेषणविशेष्यभावं चार्थयोरेव मन्यन्ते। न चादिच्छब्द इति; न ह्यस्य कश्चिल्लौकिकोऽर्थः प्रसिद्ध इत्यर्थः।

उ.—ननु वृद्धिः आत् ऐजिति पदत्रयं पस्पशायामुक्तम्; कथमनयोरित्युच्यते? अत आह—आदैच्छब्दस्येति। नचेतरेतरयोगद्वन्द्वे आदैचाविति भाव्यम्; समाहारद्वन्द्वे टचि सति आदै-चमिति स्यादिति वाच्यम्, पूर्वत्र "सुपां सुलुक्" इति लुक्संभवात्; द्वितीये समासान्त-विधेरनित्यत्वात् टजभावः। "द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहौ" इत्यत्र पादत्साहचर्यात् कृतसमासान्तस्यैव मूर्धेष्विति निर्देशे कार्ये मूर्धस्विति निर्देशात् समासान्तविधिरनित्य इति ज्ञाप्यते। तेन द्विमूर्धा त्रिमूर्धेति नान्तस्याप्यन्तोदात्तत्वं सिध्यतीति षष्ठे वक्ष्यमाणत्वात् समासान्तविधिरनित्यः। न च पस्पशाभाष्यविरोधः, समासावयवस्य विग्रहाभिप्रायेण तथोक्ति-संभवात्। भाष्यद्वयदर्शनात् द्विपदं त्रिपदं वेति कल्पद्वयं केचिदङ्गीकुर्वन्ति। पूर्वोक्तसंख्या-संदेहे प्राथम्यात् द्वित्वसंख्या ग्राह्या समासे वृद्धिशब्दावृत्तिं विना अन्वयः सेत्स्यति। असमासे आत् वृद्धिः, ऐच्च वृद्धिरिति वृद्धिशब्दावृत्तिः चशब्दाध्याहारश्च स्यात्। समुदायलक्षणसमाहार-स्य शब्दतः प्राधान्येनोपसर्जनत्वेन वानुपस्थितौ समुदायावयवसंनिधौ क्व तात्पर्यमिति वक्ष्यमाणविचारासंगतेश्च द्विपदत्वमेव सम्यगिति विवरणकृतः॥ भाष्ये—अविशेषेण। प्रत्ययविशेषमनपेक्ष्य। अक्षरसमाम्नाये जातिनिर्देशेनाकारादीनामुपदेशोऽप्यादैच्छब्दे किमाया-तम्? अत आह—तेषामिति। "तपरस्तत्कालस्य" "आदिरन्त्येन सहेता" इति कृतयो-रादैच्संज्ञयोस्तेषां प्रतिपादकत्वेन द्वन्द्वनिर्देश इत्यर्थः। नियमव्यावर्त्यमाह—आदैजिति। ननु "परश्च" इति प्रत्ययस्य प्रयोगो नियम्यत एव; अत आह—प्रयुज्यत इति। गत्युपसर्गनिरासाय स्वतन्त्रस्येति; तयोर्द्योतकत्वेन परतन्त्रत्वात्। अवयवस्येति गत्युपसर्ग-

* तत्र इति अन्नंभट्टसंमतः पाठः।

योरप्युपलक्षणम्। "ते प्राग्धातोः" "परश्च" "उपसर्जनं पूर्वम्" इति समस्तपदावयवस्य "आद्यन्तौ टकितौ" इत्यादिना आगमस्य नियम इत्यर्थः। पदनियमानारम्भे हेतुमाह—लोक इति। केवलः; न कस्यचिदपि नियमेन पूर्वो वा परो वेत्यर्थः; यथाश्रुते पदमात्रस्याप्रयोगादसङ्गत्यापत्तेः। अनेन; "वृद्धिरादैच्" इत्यनेन। भाष्ये—संस्कृत्य अन्वाख्याय। षष्ठ्यभावेऽपि नाभिनभादौ स्थान्यादेशत्वदर्शनादाह—स्थानेति। कथम्? अत आह—तिष्ठन्तीति॥ "षष्ठी स्थानेयोगा" इति सूत्रं द्विधा व्याख्यायते। स्थानशब्दोऽधिकरणव्युत्पत्त्यार्थवाची। षष्ठीति स्थानी लक्ष्यते। अर्थादादेशार्थे स्थानी ज्ञेयः; स्थान्यर्थाभिधानसमर्थ आदेशो भवतीति यावत्। षष्ठीविभक्तिरेव वादेशार्थाभिधाननिमित्तसंबन्धा ज्ञेया - यद्वा—स्थानशब्दः प्रसङ्गवाची। षष्ठी प्रसङ्गनिमित्तसंबन्धा ज्ञेया। "अस्तेर्भूः" इत्यस्तेरर्थे भूः, अस्तेः प्रसङ्गे वा भूरित्यर्थः। तथाचादैचां वृद्धिशब्दार्थाभिधानसामर्थ्याभावान्नादेशत्वमित्याह—न चेति। भाष्यस्य कोऽर्थः? अत आह—तेनेति; आदेशाभिधानयोग्यस्थान्यर्थाभावादित्यर्थः॥ एवं व्याख्याने हेतुमाह—तथा हीति; आदेशाभिधानयोग्यस्थान्यर्थसंज्ञात्वादित्यर्थः। "उगवादिभ्यो यत्" इत्यत्र गवादिषु "नाभि नभं च" इति पठ्यते; नाभेर्यत्, नाभिशब्दश्च नभरूपं प्राप्नोति; तस्य नभादेश इति यावत्। नाभये हितो नभ्योऽक्षः। शरीरावयवात्तु "शरीरावयवाच्च" इति यत्, तत्र न नभादेशः, नाभये हितं नाभ्यं तैलम्। "शिवादिभ्योऽण्" इत्यत्र [बिदादौ] "परस्त्री परशुं च" इति पठ्यते। परस्त्रिया अपत्यं पारशवः। षष्ठीनिर्दिष्टस्य स्थान्यर्थस्य वाचका आदेशा उच्यन्ते; न चात्रषष्ठीमादेशाभिधानयोग्यस्थान्यर्थां पश्याम इति भाष्यार्थः। अत्रापीति; यतोऽनागमकानां सागमका आदेशाः, अतः स्थान्यर्थोऽभिधेयत्वेनापेक्ष्यत इत्यर्थः। लिङ्गस्य कलादिपरत्वशङ्कां वारयति—देशेति। पक्षान्तरसंभावनामभ्युपेत्य तदभाव उक्तः; इदानीं संभावनैव नास्तीति वक्तुम् इदं खल्वपीति भाष्यम्। तस्य तात्पर्यमाह—विशेषणेति-अस्ति सामानाधिकरण्यमिति; न च तादृशस्थले संज्ञासंज्ञित्वमिति भावः। उभयोरिति; संज्ञासंज्ञित्वविशेषणविशेष्यत्वसंभावनास्थलत्वप्रदर्शनायेत्यर्थः। संज्ञासंज्ञिनोरपीति; "अथैष विश्वज्योतिः" इत्यादौ संज्ञाया भेदकत्वेन विशेषणत्वं भेद्ययागस्य विशेष्यत्वं च दृष्टमित्यर्थः। नीलोत्पलादाविव संज्ञासंज्ञिनोर्विशेषणविशेष्यत्वप्रसिद्धिर्नास्ति; किंतु संज्ञासंज्ञित्वप्रसिद्धिरेवेत्यर्थः॥ यद्यपि 'नाम ब्रह्म' 'चोरः स्थाणुः' इत्यादौ सामानाधिकरण्यैकविभक्तित्वे स्तः, तथापि तत्रोपासनार्थमध्यासे बाधायां च सामानाधिकरण्यम्, इहोपासनाबाधयोरसंभवात् भाष्ये द्वयोरित्युक्तम्। सामानाधिकरण्ये मतद्वयमाह—तत्रेति; नीलोत्पलादावित्यर्थः। भिन्नेत्यनेन पर्यायव्यावृत्तिः। एकस्येति समानपदार्थः। अधिकरणपदेनाभिधेयमुच्यते। समानमेकमधिकरणमभिधेयं ययोस्तत्त्वं सामानाधिकरण्यम्। विशेषणविशेष्यत्वमपि शब्दनिष्ठमेवेत्याह—विशेषणेति। भाष्ये विशेषणविशेष्ययोरित्यस्य तद्वाचकपदयोरित्यर्थः। संज्ञासंज्ञिनोरित्यत्र तद्वाचकशब्दोऽभिप्रेतः। आदैच्छब्दस्यापि संज्ञिशब्दत्वात् तत्स्वरूपमेव प्रवृत्तिनिमित्तम्। वृद्धिशब्दस्य तु तत्स्वरूपमिति प्रवृत्तिनिमित्तभेदः। अन्ये त्विति। अस्मिन्मते अधिकरणमाश्रयः। प्रवृत्तिनिमित्तयोरित्यनेन नीलमुत्पलमित्यादिशब्दप्रयोग एव सामानाधिकरण्यं प्रतीयते, नान्यत्रेति दर्शयति। वृद्ध्यादैच्छब्दयोरपि प्रवृत्तिनिमित्तशब्दस्वरूपद्वयस्यारोपितस्यैकार्थवृत्तित्वात् सामानाधिकरण्योपपत्तिः।

अस्मिन् पक्षे भाष्ये विशेषणविशेष्ययोरेकविभक्तिवमेकविभक्तिकशब्दप्रतिपाद्यत्वम्। भाष्ये—संज्ञासंज्ञिनोर्वेति; तत्प्रतिपादकशब्दप्रवृत्तिनिमित्तयोरित्यर्थः। व्याकरणे अर्थप्रतीतेर्न चेत्ययुक्तम्; अत आह—नहीति। भाष्ये—विशेषणविशेष्ययोगः; विशेषणविशेष्यभावः॥

भा.—तत्र त्वेतावान् संदेहः--कः संज्ञी का संज्ञेति। स चापि क्व संदेहः? यत्रोभे समानाक्षरे। यत्र त्वन्यतरल्लघु सा संज्ञा; यद्गुरु स संज्ञी। कुत एतत्? लघ्वर्थं हि संज्ञाकरणम्। तत्राप्ययं नावश्यं गुरुलघुतामेवोपलक्षयितुमर्हति। किं तर्हि? अनाकृतितामपि। अनाकृतिः सज्ञा; आकृतिमन्तः संज्ञिनः। लोकेऽपि ह्याकृतिमतो मांसपिण्डस्य 'देवदत्तः' इति संज्ञा क्रियते। अथवा आवर्तिन्यः संज्ञा भवन्ति। वृद्धिशब्दश्चावर्तते; नादैच्छब्दः। तद्यथा—इतरत्रापि देवदत्तशब्द आवर्तते; न मांसपिण्डः। अथवा पूर्वोच्चारितः संज्ञी; परोच्चारिता संज्ञा। कुत एतत्? सतो हि कार्यिणः कार्येण भवितव्यम्। तद्यथा—इतरत्रापि सतो मांसपिण्डस्य देवदत्त इति संज्ञा क्रियते। कथं वृद्धिरादैजिति? एतदेकमाचार्यस्य मङ्गलार्थं मृष्यताम्। माङ्गलिक आचार्यो महतः शास्त्रौघस्य मङ्गलार्थं वृद्धिशब्दमादितः प्रयुङ्क्ते। मङ्गलादीनि हि शास्त्राणि प्रथन्ते वीरपुरुषकाणि भवन्त्यायुष्मत्पुरुषकाणि चाध्येतारश्च वृद्धियुक्ता यथा स्युरिति। सर्वत्रैव हि व्याकरणे पूर्वोच्चारितः संज्ञी, परोच्चारिता संज्ञा "अदेङ् गुणः" इति यथा। दोषवान् खल्वपि संज्ञाधिकारः। अष्टमेऽपि हि संज्ञा क्रियते—"तस्य परमाम्रेडितम्" इति। तत्रापीदमनुवर्त्यं* स्यात्। अथवाऽस्थानेऽयं यत्नः क्रियते। नहीदं लोकाद्भिद्यते। यदीदं लोकाद्भिद्येत ततो यत्नार्हं स्यात्। तद्यथा, अगोज्ञाय कश्चित् गां सक्थनि कर्णे वा गृहीत्वोपदिशति—अयं गौरिति। न चास्मायाचष्टे इयमस्य संज्ञेति। भवति चास्य संप्रत्ययः। तत्रैतत् स्यात्—कृतस्तत्र पूर्वैरभिसंबन्धः इति। इहापि कृतः

* अनुवर्तयितव्यम् इत्यन्नंभट्टसंमतः पाठः।

**पूर्वैरभिसंबन्धः । कैः? आचार्यैः । तत्रैतत् स्यात्; यस्मै तर्हि संप्रत्युपदिशति—तस्याकृत इति । लोकेऽपि हि यस्मै संप्रत्युपदिशति तस्याकृतः । अथ तत्र कृतः; इहापि कृतो द्रष्टव्यः ।**

प्र.—आवर्तिन्य इति; देवदत्तादिशब्दा हि दानादिप्रतिपादनार्यो-वर्तन्ते ॥ अथवेति; सत्यसति वा संज्ञिनि बुद्ध्या विषयीकृते शब्देन पूर्वं निर्दिष्टे संज्ञा प्रवर्तत इत्यर्थः । ततश्च "अदेङ् गुण" इत्यादावदेङा-दयः संज्ञिनो गुणादयः संज्ञाः । इह तु मङ्गलार्थोऽन्यथा पाठक्रमः; आर्थस्त्वन्यथा क्रमः । अन्ये तु सिद्धिहेतवो भविष्यन्ति । "अपृक्त एकाल् प्रत्ययः" इति परिभाषा; न संज्ञेति नास्ति व्यभिचारः । अपृक्त-शब्देन ह्येकाकी कथ्यत इत्यनेनानियमेन ग्रहणे प्राप्ते नियमः क्रियते ॥ अस्थान इति; अन्तरेणापि संज्ञाशब्दप्रयोगं लोकव्यवहारवदत्र संज्ञासंज्ञि-संबन्धः सिध्यतीत्यर्थः ॥

उ.—भाष्ये—यत्रोभे इति; प्रत्ययः अनीयरित्यादौ । तर्हि सर्वनामसंज्ञायां वैपरीत्यं स्यात्; अत आह—भाष्ये—तत्रापीति ॥ देवदत्तशब्दावृत्तिं दर्शयति—'देवदत्तादीति; 'देवदत्ताय गां देहि, देवदत्ताय वस्त्रम्' इत्यादौ शब्द एवावर्तत इत्यर्थः। भाष्ये—सतोहीति; सत्ता-संबन्धविवक्षायामदर्शनस्याभावरूपस्य संज्ञित्वं न स्यात्; विद्यमानत्वविवक्षायामविद्यमानस्य लुगादिसंज्ञा न स्यात्; अत आह—सत्यसति वेति। मङ्गलार्थं इत्यनेन "प्रयोजनम्" इति विहितठञन्तो माङ्गलिकशब्द इति सूचितम्। आर्थ इति; तथा च विवक्षितक्रमे न व्यभिचार इत्यर्थः॥ भाष्ये, एकैकसूत्रस्य शास्त्रत्वात् शास्त्रौघस्येत्युक्तम् ॥ नन्वादितः प्रयुक्तस्य वृद्धिशब्दस्य संज्ञात्वे को हेतुः? अत आह—अन्ये त्विति; लाघवादिभिः संज्ञात्वनिश्चय इत्यर्थः। उक्तनियमस्य व्यभिचारं निराह—अपृक्त इति। परिभाषात्वमेवाह—अपृक्त शब्देनेति। अनियमेन; प्रत्ययस्याप्रत्ययस्य च; प्रत्ययस्यैवेति नियमः क्रियते। तेन—सुरां-सुनोतीति सुरासुत्, तमाचष्टे इति णिचि क्विपि टिलोपणिलोपयोः कृतयोर्धातुसकारस्याबन्तादिति लोपो न भवति; सुराः। भाष्ये—अनुवर्तयितव्यं स्यात्; तच्चासंबद्धव्यवायान्न संभवतीत्यर्थः भाष्ये—अस्थाने; अनवसरे। भिद्यते; भिन्नं भवति। "इहापि कृतो द्रष्टव्यः" इत्यन्तस्य भाष्यस्य संक्षेपेणार्थमाह—अन्तरेणेति। भाष्ये—संज्ञा; वाचकः। भाष्ये—अभिसंबन्धः; वाच्यवाचकभावसंबन्धः। संभवत्युपदेष्टृत्वे श्रोतुः कथं बोद्धृत्वमिति शङ्कते भाष्ये—तत्रैतत् स्यादिति। भाष्ये-अथ तत्रेति; पूर्वं संबन्धाकरणे इदानीमाप्तो गौरिति कथमुपदिशेदित्यर्थापत्त्य वर्पूक्तत्वं ज्ञात्वा श्रोता प्रतिपद्यत इत्यर्थः।

वा.—सतो वृद्ध्यादिषु संज्ञाभावात्तदाश्रय
इतरेतराश्रयत्वादप्रसिद्धिः ।

भा.—सतः संज्ञिनः संज्ञाभावात् तदाश्रये संज्ञाश्रये संज्ञिनि वृद्ध्यादिषु इतरेतराश्रयत्वादप्रसिद्धिः। का इतरेतराश्रयता? सतामादैचां संज्ञया भवितव्यम्; संज्ञया चादैचो भाव्यन्ते। तदेतदितरेतराश्रयं भवति। इतरेतराश्रयाणि च कार्याणि न प्रकल्पन्ते। तद्यथा—नौर्नावि बद्धा नेतरत्त्राणाय भवति। ननु च भो इतरेतराश्रयाण्यपि कार्याणि दृश्यन्ते। तद्यथा—नौः शकटं वहति, शकटं च नावं वहति। अन्यदपि तत्र किंचिद्भवति जलं स्थलं वा। स्थले शकटं नावं वहति। जले नौः शकटं वहति। यथा तर्हि त्रिविष्टब्धकम्। तत्राप्यन्ततः सूत्रकं भवति। इदं पुनरितरेतराश्रयमेव।

वा.—सिद्धं तु नित्यशब्दत्वात् ।

भा.—सिद्धमेतत्। कथम्? नित्यशब्दत्वात्; नित्याः शब्दाः नित्येषु शब्देषु सतामादैचां संज्ञा क्रियते। न च संज्ञया आदैचो भाव्यन्ते।

भा.—यदि तर्हि नित्याः शब्दाः, किमर्थं शास्त्रम्?

वा.—किमर्थं शास्त्रमिति चेन्निवर्तकत्वात् सिद्धम्।

भा.—निवर्तकं शास्त्रम्। कथम्? मृजिरस्माय विशेषेणोपदिष्टः। तस्य सर्वत्र मृजिबुद्धिः प्रसक्ता। तत्रानेन निवृत्तिः क्रियते—मृजेरक्ङित्सु प्रत्ययेषु मृजिप्रसङ्गे मार्जिः साधुर्भवतीति।

प्र॰—सतो वृद्ध्यादिष्विति; विधौ चायं दोषो नानुवादे "वृद्धिर्यस्य" इत्यादौ। तत्र च संज्ञाविधानस्य चरितार्थत्वात् "मृजेर्वृद्धिः" इत्यादौ वृद्धिशब्द एवादेशः प्राप्नोति॥ ननु च भो इति। नौशकटस्याभिमत देशान्तरप्राप्तिरितरेतराश्रयेति चोद्यम्॥ सामग्र्यन्तरानुप्रवेशेन चोत्तरम्॥ सिद्धं त्विति; न हि मृजेरपूर्व आकारो भाव्यते। किं तु मृजावुपदिष्टे मार्ष्टीत्यादीनामसाधुत्वबुद्धिः प्राप्नोतीति तेषां साधुत्वान्वाख्यानं क्रियते॥

उ.—वृद्ध्यादिषूच्चरितेषु आकारादीनामप्रसिद्धिरनवगमः। कुतः? इतरेतराश्रयत्वात्। तदपि कुतः ? सतः संज्ञाभावात् तदाश्रये संज्ञया भाव्ये संज्ञिनीति वार्तिकार्थः । तस्य तात्पर्यमाह- विधाविति ॥ ननु संज्ञाविधानसामर्थ्याद्भाविसंज्ञा विज्ञास्यते; अत आह—तत्र चेति। वृद्धिशब्द इति ; भाविसंज्ञाया अभावे "स्वं रूपं शब्दस्य" इति वचनात् वृद्धिशब्द एवादेशः प्राप्नोतीत्यर्थः । क्रियायामितरेतराश्रयत्वाभावेऽपि फलतस्तदाह—नौशकटस्येति। साम-र्थ्यन्तरं कारणान्तरम्। साधुर्भवतीत्यन्तं भाष्यं संक्षेपेण व्याचष्टे—न हीति ॥

वा.—वृद्धिगुणसंज्ञयोः प्रत्येकं वचनम् ।

भा.—वृद्धिगुणसंज्ञयोः प्रत्येकं ग्रहणं कर्तव्यम् । प्रत्येकं वृद्धिगुणसंज्ञे भवत इति वक्तव्यम् । किं प्रयोजनम् ? समुदाये मा भूतामिति ।

वा.—अन्यत्र सहवचनात् समुदाये संज्ञाऽप्रसङ्गः ।

भा.—अन्यत्र सहवचनात् समुदाये वृद्धिगुणसंज्ञयोर-प्रसङ्गः । यत्रेच्छति सहभूतानां कार्यं, करोति तत्र सह-ग्रहणम् । तद्यथा "सह सुपा" "उभे अभ्यस्तं सह" इति ।

वा.—प्रत्यवयवं च वाक्यपरिसमाप्तिः ।

भा.—प्रत्यवयवं च वाक्यपरिसमाप्तिर्दृश्यते ; तद्यथा—'देवदत्तयज्ञदत्तविष्णुमित्रा भोज्यन्ताम्' इति । न चोच्यते प्रत्येकमिति । प्रत्येकं च भुजिः परिसमाप्यते । ननु चाय-मप्यस्ति दृष्टान्तः समुदाये वाक्यपरिसमाप्तिरिति ; तद्यथा—'गर्गाः शतं दण्ड्यन्ताम्' इति । अर्थिनश्च राजानो हिरण्येन भवन्ति ; न च प्रत्येकं दण्डयन्ति । सत्येतस्मिन् दृष्टान्ते यदि तत्र सहग्रहणं क्रियते, इहापि प्रत्येकमिति वक्तव्यम्। अथ तत्रान्तरेण सहग्रहणं सहभूतानां कार्यं भवति, इहापि नार्थः प्रत्येकमिति वचनेन ।

प्र.—प्रत्येकमिति; यद्यपि नित्यशब्दत्वेनैतदपि व्यवतिष्ठते, तथापि न्यायव्युत्पादनायोपन्यासः। समुदाये मा भूतामिति; अन्यथा "मृजेर्वृद्धिः"

इत्यादौ समुदाय आदेशः प्राप्नोति। समुदायावयवसान्निधौ क तात्पर्यं, कस्य च नान्तरीयकत्वमिति विचार्यते। अन्यत्रेति; यत्नसाध्या समुदाय प्रतिपत्तिरिति यत्नाभावे न भवतीत्यर्थः॥ ननु सहग्रहणं नियमार्थं स्यात् समुदायस्यैव समाससंज्ञा यथा स्यात्, नावयवानामिति। नैतदस्ति; उभयत्र तात्पर्याभावाद्युगपदुभयत्र प्रसङ्गाभावाल्लिङ्गत्वमेव सहग्रहणस्यान्यत्र समुदाये तात्पर्यं नास्तीत्यस्यार्थस्य। उभे अभ्यस्तं सहेति; अत्र सहग्रहणं वार्तिककारस्य कर्तव्यत्वेन स्थितम्। भाष्यकारस्तूभेग्रहणस्यैतत्-प्रयोजनं स्थापयिष्यति॥ प्रत्यवयवं चेति; अत्र वाक्यशब्देन वाक्यार्थः फलमुच्यते। तच्च देवदत्तादीनां भोजनम्। तस्य चैतदेव रूपं यत् प्रत्येकपरिसमाप्त्या संपद्यते अन्नादनादिरूपत्वात् तृप्तिफलत्वाच्च भोजनस्य। नाट्यक्रिया तु समुदाये समाप्यते, गीतादिक्रियासमुदायरूपत्वात् तस्याः। संयोगसंज्ञा त्वन्वर्थत्वात् समुदाये प्रवर्तते। वृद्धिसंज्ञा तु लक्ष्य पृथगादैचां दर्शनात्, "मालादीनां च" इति लिङ्गाच्च प्रत्येकं व्यवतिष्ठते॥ गर्गाः शतं दण्ड्यन्तामिति; अत्र शतस्येप्सिततमत्वात् प्राधान्यम्; अपादानस्थानप्राप्ता गर्गा गुणकर्म। न च गुणभेदे प्रधानस्य भेद इति शतदण्डनं समूहे परिसमाप्यते॥ अर्थिनश्चेति; शतस्य प्राधान्यं प्रतिपाद्यते। दण्डपरायां हि चोदनायां शतस्य प्राधान्यम् अतो वाक्यादवगम्यते॥ अथ तत्रान्तरेणेति। न्यायादन्वर्थत्वाच्च समाससंज्ञायाः समुदाये परिसमाप्तौ सिद्धायां योगविभागार्थं तत्र सहग्रहणं स्थितमिति तत्रान्तरेणेत्युक्तम्॥

उ—यद्यपीति; समुदायस्य प्रयोगाभावादित्यर्थः। न्यायेति—न्यायान्तरेत्यर्थः। "वृद्धिर्यस्याचाम्" इत्यादौ समुदायाभावात् सामर्थ्यात् प्रत्येकं भविष्यतः; अत आह—अन्यथेति। वृद्धिशब्दसंपादितसमुदायोऽस्तीति वृद्धिसंज्ञापि तत्रैव स्यादिति भावः। प्रत्येकमित्यस्य वचनत्वशङ्कां वारयति—समुदायेति; द्वन्द्वपक्षे समुदायावयवप्रतीतिः शब्दादेव। त्रिपदत्वपक्षेऽपि प्रत्येकोपस्थितानां मनसा समुदायोपस्थितिरविरुद्धा। अत एव संनिधावित्युक्तम्। लित्वपक्षे "कृतमनयोः" इति द्वित्वानुपपत्तिरपि नास्ति, संज्ञिशब्दत्वेन द्वयमेकीकृत्य संज्ञासंज्ञिशब्दयोरिति निर्देशसंभवात्। अत एवादैच्छब्द इत्यादौ भाष्ये एकवचनोपपत्तिः। व्यापकनिवृत्त्या व्याप्यनिवृत्तिर्वार्तिककृदभिप्रेतेत्याह—यत्नेति। साध्या; व्याप्ता। लिङ्गत्वाभावं शङ्कते—नन्विति। वाक्यभेदप्रसङ्गेनोभयत्र तात्पर्याभावादुभयप्राप्त्यभावान्नियमो न संभव-

तीत्याह—नैतदिति। युगपदिति; पर्यायेणापि न संभवतीत्यपि ज्ञेयम्। अत्र सहग्रहणं वार्तिककारानुसारेणेत्याह—अत्रेति; "उभे अभ्यस्तम्" इति सूत्र इत्यर्थः॥ भाष्यकारास्त्विति; द्वे इत्यनुवर्तनात् संज्ञिलाभे उभे इत्येतत्सहार्थम्। न च तथाप्युभेग्रहणं श्रूयमाणाभ्यासपरं कर्तव्यम्, अन्यथा ईप्सन्तीत्यादौ अत् स्यात्, नान्त इति वाच्यम्, सप्तमे योगविभागेन तत्सिद्धेः—"अदभ्यस्तात्" ततः "आत्मनेपदेषु" ततः "अनतः" इति। अनत इति सूत्रद्वयस्य शेषः। तथाचाकारान्तादभ्यस्तादन्तो भविष्यतीत्यतिरिच्यमानमुभेग्रहणं सहार्थमिति स्थापयिष्यतीत्यर्थः। न केवलं ज्ञापकात्; युक्तितोपि प्रत्येकं वृद्ध्यादिसंज्ञेत्याह—प्रत्यवयवं चेति। प्रत्यवयवं चेति वार्तिकम्। प्रत्येकं वाक्यपरिसमाप्तावुक्तायां "प्रत्येकं च भुजिः परिसमाप्यते" इति भाष्यमयुक्तमत आह—अत्रेति। वाक्यार्थस्य प्रयोजकव्यापारस्य प्रयोज्यसमुदायविषयत्वा संभवात् फलग्रहणम्। प्रयोजकव्यापारस्य प्रयोज्यव्यापारः फलमित्याह—तच्चेति। गलकबलसंयोगरूपभुजेः स्वभावत एव प्रत्येकपरिसमाप्तिरित्याह—तस्येति। फलतोऽपि तथेत्याह—तृप्तिरिति। सर्वस्याः क्रियायाः प्रत्येकपरिसमाप्तिभ्रमं निराह—नाट्येति। गीतादीत्यादिना नृत्यादिग्रहः। अन्वर्थत्वात्; सयुज्यन्ते अस्मिन् समुदाये वर्णा इति प्रत्येकं संज्ञा न भवतीत्यर्थः। वर्धन्तेऽस्मिन् वर्णा इत्यन्वर्थत्वात् वृद्धिसंज्ञाऽपि प्रत्येकं न स्यात्; अत आह—वृद्धिसंज्ञेति। समुदायसंज्ञायां लक्ष्येऽपि समुदायस्यैव प्रसङ्गान्न लक्ष्यदर्शनं नियामकम्; अत आह—मालादीनामिति। "प्रस्थेऽवृद्धम्" इत्यवृद्धस्याद्युदात्तत्वं विधाय वृद्धानामपि मालादीनां मालाप्रस्थ इत्यादावाद्युदात्तविधानार्थमिदम्। समुदायसंज्ञात्वे अवृद्धत्वेनैव स्वरसिद्धेरेतत् सूत्रं व्यर्थं स्यात्; अतः प्रत्येकसंज्ञां ज्ञापयतीत्यर्थः। "अभिव्यक्तपदार्था ये स्वतन्त्रलोकविश्रुताः। शास्त्रार्थस्तेषु कर्तव्यः शब्देषु न तदुक्तिषु॥" इति न्यायादाधुनिकनामधेयमालादिशब्दानां "वा नामधेयस्य" इति पाक्षिकवृद्धसंज्ञानां स्वरविधानार्थमिदं न भवतीति ज्ञापकत्वमेवेति भाव इति प्राञ्चः। तच्चिन्त्यम्; संज्ञाशब्दानामपि लक्ष्यत्वस्य प्रदीपे समर्थनात्। 'देवदत्तीयः' इत्यादेरसाधुत्वापत्तेश्च। तस्माद्वार्त्तिके वक्ष्यमाणवृद्धसंज्ञामाश्रित्य न सूत्रप्रणयनमिति न नामधेयविषयत्वं सूत्रस्येत्याशयः। समुदायसमासौ हेतुमाह—अत्रेति। अपादानेति; "अकथितं च" इत्यपादानस्य कर्मसंज्ञा; न "कर्तुरीप्सिततमम्" इत्यनेनेत्यर्थः॥ अर्थिनश्चेति विशेषणादप्येवमेवार्थ इत्याह—शतस्येति; शरीरस्य हननदहनादिव्यावर्तनेनेति भावः। एतदेव स्पष्टयति—दण्डेति। अतः अर्थिनश्चेति विशेषणात्। भाष्ये—सत्येतस्मिन्निति; सिद्धान्तवादी। सत्यप्येतस्मिन्नित्यर्थः। भाष्ये—तत्र; "सह सुपा" इत्यत्र। भाष्ये—इहापीति; प्रतिबन्दीमात्रम्। मालादीनामिति लिङ्गेन प्रत्येकपरिसमाप्तिरुक्तैव। "उभे अभ्यस्तं सह" इति सहग्रहणेन यत्नं विना समुदाये ग्रहणं नास्तीति ज्ञापनादन्तरेणेत्ययुक्तम्; अत आह—न्यायादिति; शतदण्डनन्यायादित्यर्थः॥ ननु भुजिन्यायोऽप्यस्ति; अत आह—अन्वर्थत्वाच्चेति। समस्यते संबध्यते पदं पदान्तरेणास्मिन् समुदाय इति व्युत्पत्त्येत्यर्थः। सहग्रहणस्य प्रयोजनमाह—योगेति। अनुव्यचलदित्यादौ तिङन्तेनापि समासो योगविभागस्य प्रयोजनम्।

भा.—अथ किमर्थमाकारस्तपरः क्रियते ?

वा.—आकारस्य तपरकरणं सवर्णार्थम्।

भा.—आकारस्य तपरकरणं क्रियते॥ किं प्रयोजनम्? सवर्णार्थम्। "तपरस्तत्कालस्य" इति तत्कालानां सवर्णानां ग्रहणं यथा स्यात्। केषाम्? उदात्तानुदात्तस्वरितानाम्। किं च कारणं न स्यात्?

वा.—भेदकत्वात् स्वरस्य।

भा.—भेदका उदात्तादयः। कथं पुनर्ज्ञायते भेदका उदात्तादय इति? एवं हि दृश्यते लोके—य उदात्ते कर्तव्ये अनुदात्तं करोति खण्डिकोपाध्यायस्तस्मै चपेटां ददाति—'अन्यत् त्वं करोषि' इति। अस्ति प्रयोजनमेतत्। किं तर्हि? इति।

वा.—भेदकत्वाद्गुणस्य।

भा.—भेदकत्वाद्गुणस्येति वक्तव्यम्। किं प्रयोजनम्?। आनुनासिक्यं नाम गुणः, तद्भिन्नस्यापि ग्रहणं यथा स्यात्। किं च कारणं न स्यात्? भेदकत्वाद्गुणस्य। भेदका गुणाः। कथं पुनर्ज्ञायते भेदका गुणा इति? एवं हि दृश्यते लोके एकोऽयमात्मा उदकं नाम, तस्य गुणभेदादन्यत्वं भवति 'अन्यदिदं शीतम् अन्यदिदमुष्णम्' इति। ननु च भो अभेदका अपि गुणा दृश्यन्ते; तद्यथा—देवदत्तो मुण्ड्यपि जट्यपि शिख्यपि स्वामाख्यां न जहाति; तथा बालो युवा वृद्धो वत्सो दम्यो बलीवर्द इति। उभयमिदं गुणेषूक्तं भेदका अभेदका इति। किं पुनरत्र न्याय्यम्? अभेदका गुणा इत्येव न्याय्यम्। कुत एतत्? यदयं—"अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः" इत्युदात्तग्रहणं करोति, तज्ज्ञापयत्याचार्यः अभेदका गुणा इति। यदि हि भेदका गुणाः स्युः, उदात्तमेवोच्चारयेत्।

प्र.—अथ किमर्थमिति; किमाकृतिपक्षे भिन्नकालनिवृत्त्यर्थम्? अथवा व्यक्तिपक्षे गुणान्तरयुक्तानां ग्रहणार्थमिति प्रश्नः॥ आकारस्येति; व्यक्तिः पदार्थो भेदकाश्च गुणा इति दर्शने यद्गुणस्यैवोच्चारणं तद्गुणस्यैव संज्ञाप्रसङ्गे

गुणान्तरयुक्तानामपि संज्ञाप्रतिपत्त्यर्थं तपरत्वमित्यर्थः ॥ किं च कारणमिति; अभेदका हि गुणाः; मुण्डेन हि कृते चौर्ये कुन्तलित्वावस्थायामपि 'चौरोऽयम्' इति व्यपदिश्यत इति प्रश्नः ॥ भेदकत्वादिति; सर्वगुणसंग्रहार्थं गुणग्रहणं कर्तव्यमित्यर्थः । एकोऽयमिति; उदकत्वजातियोगादत्रैकत्वं न विवक्षितम्; किं तर्हि? विशिष्टभाजनस्थमेकमुदकद्रव्यम् । तदेव च गुणान्तरयोगादन्यत्वेन लोके व्यपदिश्यते ॥ उभयमिति । आम्नायशब्दा नियतस्वरा इति वेदे गुणानां भेदकत्वम् । लोके तूभयथा व्यवहारः । गोपिण्डो हि वत्साद्यवस्थाभेदात् क्रयविक्रयादिषु मूल्यादिभेदाद्भेदेन व्यवह्रियते; स एवायमिति प्रत्यभिज्ञानादभेदेनापीति प्रश्नः—किं पुनरिति । अत्रेति; शास्त्रे ॥ उदात्तमेवेति । तस्मात् गुणरहितस्योच्चारणाभावान्नान्तरीयकत्वादुच्चार्यमाणोऽपि गुणः प्रयत्नमन्तरेण न विवाक्षित इत्यर्थः । यद्येवं कथमन्यत्रोक्तमुदात्तनिपातनं करिष्यत इति, यावता तत्राप्यविवक्षा प्राप्नोति । नैष दोषः; तत्रापि स्थानेऽन्तरतमवचनादादेशस्य यः स्वरः प्राप्तस्तस्मिन्नुच्चारयितव्ये उदात्तोच्चारणं प्रयत्नेन विवक्षार्थं विज्ञायते । एवमनुनासिकस्य प्रयत्नाधिक्येनोच्चारणं तद्विवक्षार्थमेव; "उञ ऊँ" इति यथा । अन्ये त्वाहुः—एकश्रुत्या सूत्राणि पठ्यन्त इति क्वचिदुदात्तोच्चारणं तद्विवक्षार्थमिति ॥

उ.—किमर्थमिति प्रयोजनप्रश्नः कोटिद्वयावलम्बीत्याह—किमाकृतीति; आकृतिपक्षे भिन्नकालनिवृत्त्यर्थम् । व्यक्तिपक्षे गुणान्तरयुक्तस्य ग्रहणार्थमिति "तपरस्तत्कालस्य" इत्यस्य द्वेधा व्याख्यानादित्यर्थः ॥ गुणानामभेदकत्वेन वैयर्थ्यमाशङ्क्याह—भेदका इति । यद्गुणस्य तद्गुणस्येति बहुव्रीहिः । तपरकरणं क्रियते इति भाष्ये सामान्यविशेषभावेन सहप्रयोगः, करणमित्यविवक्षितं वा । प्रश्नाभिप्रायमाह—अभेदका इति । अभेदकत्वे दृष्टान्तः मुण्डेनेति । भाष्ये—अस्ति प्रयोजनमिति काक्वा सूचितमाशयं पृच्छति—किं तर्हीति । स्वरस्येत्यनुक्त्वा गुणस्येति वक्तव्यम्; तस्य प्रयोजनमाह—सर्वेति । उदकत्वजात्यात्मना एकत्वविवक्षायां व्यक्तिभेदादेव भेदोपपत्तेर्न गुणभेदकृतभेदे इदमुदाहरणं स्यात्; अत आह—उदकत्वजातीति । भाष्ये आत्मशब्दः स्वरूपपरः । भाण्डस्थमुदकस्वरूपमेकमित्यर्थः । यद्यप्येकस्मिन्पात्रे पूर्वं यत् शीतं तदिदानीमुष्णमित्यभेद एव प्रतीयते, तथापि शीतं गृहीत्वा क्वचिद्गत्वा समयान्तरे पुनरागतस्य उष्णत्वस्पर्शने कदाचिद्भेदबुद्धिर्भवतीत्याशयेनाह—तदेवेति । उभयमिति लोकवेदसाधारणं न भवतीत्याह—आम्नायेति । उभयथा व्यवहारमेवाह—गोपिण्ड इति । आदिद्वयेन हलवहनादौ क्रियाभेदग्रहः । किंपुनरित्येतदवतारयति—इति प्रश्न इति;

लोक एकत्रैव भेदाभेदव्यवहारदर्शनादिति तदर्थः । गोपिण्ड इत्यारभ्य वा अवतारिका । अत्रेति भेदकत्वाभेदकत्वयोर्निर्धारणसप्तमी न भवतीत्याह—शास्त्र इति । भाष्ये उदात्तमेवेति । भेदकत्वपक्षे अन्तरतमपरिभाषां बाधित्वा विधानसामर्थ्यादुदात्त एव स्यात् । अभेदकत्वे तूदात्तोच्चारणेऽप्यन्तरतमोऽनुदात्तः स्यात् । तन्निवृत्तये उदात्तग्रहणमभेदकत्वज्ञापकमित्यर्थः । नित्स्वरेणास्थ्यादय आद्युदात्ताः । उदात्तोच्चारणसामर्थ्यादुदात्तो भविष्यति; अन्यथा अनुदात्तमेवोच्चारयेत्; अत आह—तस्मादिति; उदात्तग्रहणादित्यर्थः । भाष्यान्तरविरोधं शङ्कते—यदीति । एवम्; प्रयत्नं विना अविवक्षायाम् । अन्यत्र; "सहस्य सः संज्ञायाम्" इत्यत्र । तत्रापीति; उदात्तोच्चारणस्यैव निपातनत्वादित्यर्थः । तस्मिन्निति; सहशब्द आद्युदात्तः, उदात्तानुदात्तवतः स्थाने आन्तरतम्यात् स्वरित एवादेशः प्राप्नोति; तामात् स्वरितयुक्तसशब्दोच्चारणे कर्तव्ये सतीत्यर्थः । साश्वत्थमित्याद्युदाहरणम् । गुणान्तरमुदाहरति—एवमिति । निरनुनासिकस्य उञः स्थाने तादृशस्यैवोच्चारणे कर्तव्ये अनुनासिकोच्चारणं विवक्षार्थमित्यर्थः । ननु चतसृशब्दे आद्युदात्तनिपातनं करिष्यते; स "चतुरः शसि" इत्यन्तोदात्तस्य बाधक इति तत्सूत्रभाष्यविरुद्धमिदम्; चतुर्शब्दस्य "त्रः संख्यायाः" इत्याद्युदात्ततया तदादेशस्य चतसृशब्दस्यापि स्थानिस्वरेणाद्युदात्ततया तदुच्चारणे यत्नाधिक्याभावादविवक्षाप्रसङ्गात्; अत आह—अन्ये त्विति । नन्वेवम् "अनुदात्तः" इति व्यर्थम्, उदात्तोच्चारणेनैवेष्टसिद्धेः; तथाच कथमभेदकत्वज्ञापकत्वमिति चेत्, अत्राहुः—ज्ञापकान्नाभेदकत्वम्, किंतु लौकिकन्यायादेव । अत एव भेदकत्वन्यायमाश्रित्य सवर्णग्रहणार्थमिति वार्तिककृतोक्तम् । भाष्यकृता त्वभेदकत्वन्यायेन तद्दूषितम्; ज्ञापकोपन्यासो भाष्ये अभ्युच्चयः । उदात्तोच्चारणमकृत्वा स्पष्टप्रतिपत्त्यर्थं सूत्र उदात्तग्रहणमिति कैयटाशयः ।

**भा.—यदि तर्ह्यभेदका गुणा अनुदात्तादेरन्तोदात्ताच्च यदुच्यते तत् स्वरितादेः स्वरितान्ताच्च प्राप्नोति। नैष दोषः। आश्रीयमाणो गुणो भेदको भवति। तद्यथा—'शुक्लमालभेत' 'कृष्णमालभेत'। तत्र यः शुक्ल आलब्धव्ये कृष्णमालभते, न हि तेन यथोक्तं कृतं भवति। असंदेहार्थस्तर्हि तकारः। ऐजित्युच्यमाने संदेहः स्यात्—किमिमावैचावेव? आहोस्विदाकारोऽप्यत्र निर्दिश्यत इति? संदेहमात्रमेतद्भवति। सर्वसंदेहेषु चेदमुपतिष्ठते—"व्याख्यानतो विशेषप्रतिपत्तिर्न हि संदेहादलक्षणम्" इति। त्रयाणां ग्रहणमिति व्याख्यास्यामः। अन्यत्रापि ह्ययमेवंजातीयकेषु संदेहेषु न कंचिद्यत्नं करोति। तद्यथा—"औतोम्शसोः" इति। इदं तर्हि प्रयोजनम्—आन्तर्यतस्त्रिमात्रचतुर्मात्राणां स्थानिनां त्रिमात्रचतुर्मात्रा आदेशा मा भूवन्निति। खट्वा इन्द्रः खट्वेन्द्रः, खट्वा उदकं खट्वोदकं, खट्वा**

ईषा खट्वेषा, खट्वा ऊढा खट्वोढा, खट्वा एलका खट्वैलका, खट्वा ओदनः खट्वौदनः, खट्वा ऐतिकायनः खट्वैतिकायनः, खट्वा औपगवः खट्वौपगव इति। अथ क्रियमाणेऽपि तकारे कस्मादेव त्रिमात्रचतुर्मात्राणां स्थानिनां त्रिमात्रचतुर्मात्रा आदेशा न भवन्ति? "तपरस्तत्कालस्य" इति नियमात्। ननु तः परो यस्मात् सोऽयं तपरः। नेत्याह। तादपि परस्तपरः। यदि तादपि परस्तपरः "ऋदोरप्" इतीहैव स्यात् 'यवः, स्तवः' 'लवः, पवः' इत्यत्र न स्यात्। नैष तकारः। कस्तर्हि? दकारः। किं दकारे प्रयोजनम्? अथ किं तकारे?। यद्यसंदेहार्थस्तकारः, दकारोऽपि। अथ मुखसुखार्थस्तकारः, दकारोऽपि॥ वृद्धिरादैच्॥

प्र.—अनुदात्तादेरिति; अजुपलक्षणार्थानुदात्तश्रुतिः स्यादिति प्रश्नः। उत्तरे त्वज्ग्रहणमेव कुर्यादित्यभिप्रायः॥ व्याख्यानत इति; "प्रस्थेऽवृद्धम्" इत्याद्युदात्तत्वे सिद्धे "मालादीनां च" इति मालाशब्दस्य वृद्धार्थत्वा-दुपादानस्याकारप्रश्लेषनिश्चय इत्यर्थः। इदं तर्हीति; ननु भाव्यमानत्वा-ददिचोऽत्र ग्राहका न भविष्यन्ति। नैतदस्ति। न ह्यत्र संज्ञाविधावादैचो भाव्यन्ते, *किं त्वौजिभरणत्वात् त्रिमात्रचतुर्मात्राणां ग्रहणात् संज्ञा-सङ्गात् वृद्धिगुणविधौ च तेषामपि प्रसङ्गात्तन्निषेधाय तपरत्वम्॥ एवं स्थिते चोदयन्ति यद्यैजर्थस्तकारस्तेनाकारस्य संबन्धाभावात् कथमादित्येतत् पदम्॥ उच्यते—तात्पर्येणैजर्थत्वं तकारस्योच्यते आनुषाङ्गिकं त्वाकारार्थत्वं तकार स्योच्यते ज्ञापकद्वारेण ह्याकारप्रश्लेषे विज्ञायमाने प्रतिपत्तिगौरवं भवति। सति तु तकारे आकारस्य स्वरूपप्रतिपत्तिः स्पष्टा भवतीति तकारसहि-तस्याकारस्यासंदिग्धानुकार्यप्रतिपादनार्थवत्त्वाद्विभक्तेरुत्पत्तौ सत्यामादित्येतत् पदं सिद्धम्॥ १॥

उ.—भाष्ये अनुदात्तादेरिति; "अनुदात्तादेरञ्" "बह्वचोऽन्तोदात्ताट्ठञ्"। भाष्ये स्वरितादेरिति; उदात्तादेरनुदात्तान्ताच्चेत्यपि विवक्षितं, हेतुसाम्यात्। तथाचोदात्ता-नुदात्तग्रहणं व्यर्थं स्यात्; अत आह—अजिति। अज्ग्रहणमेवेति; लाघवात्। तथा च नातिप्रसङ्ग इति भावः। व्याख्यानमात्रमतिप्रसक्तमिति तन्मूलमाह—प्रस्थ इति। सिद्ध इति; आकारस्य वृद्धिसंज्ञाया अभावे अवृद्धत्वादेवाद्युदात्तसिद्धिरित्यर्थः। "कार्यकालं संज्ञापरिभाषम्" इति पक्षमाश्रित्य शङ्कते—नन्विति। यथोद्देशपक्षमाश्रित्य

*"किं त्वत्र एङादिभिरि" यज्ञभट्टसंमतः पाठः।

परिहरति—नैतदिति । इदं तर्हीत्यादिभाष्यतात्पर्यमाह—एङादिभिरिति । भाष्ये—अथ किं तकार इति; तादपि परस्तपर इत्यनङ्गीकुर्वतस्तवेत्यर्थः । एवं स्थिते; तकारस्यैजर्थत्वे स्थिते । संबन्धाभावात्; शेषशेषिभावाभावात् । कथमिति; तथा-घादित्यस्य पदत्वाभावात् जश्त्वाभावे आतैजिति स्यादिति भावः । ज्ञापकः; "मालादीनां च" इति ज्ञापकः ।

## सू.—इको गुणवृद्धी ॥ १।१।३ ॥

**भा.—इग्ग्रहणं किमर्थम्?**

**वा.—इग्ग्रहणमात्सन्ध्यक्षरव्यञ्जननिवृत्त्यर्थम् ।**

**भा.** – इग्ग्रहणं क्रियते । किं प्रयोजनम्? आकारनिवृत्त्यर्थं सन्ध्यक्षरनिवृत्त्यर्थं व्यञ्जननिवृत्त्यर्थं च । आकारनिवृत्त्यर्थं तावत्—'याता, वाता'। आकारस्य गुणः प्राप्नोति । इग्ग्रहणान्न भवति । सन्ध्यक्षरनिवृत्त्यर्थम्—'ग्लायति, म्लायति'। सन्ध्यक्षरस्य गुणः प्राप्नोति। इग्ग्रहणान्न भवति । व्यञ्जननिवृत्त्यर्थम्—'उम्भिता, उम्भितुम्, उम्भितव्यम्'। व्यञ्जनस्य गुणः प्राप्नोति। इग्ग्रहणान्न भवति । आकारनिवृत्त्यर्थेन तावन्नार्थः। आचार्यप्रवृत्तिर्ज्ञापयति नाकारस्य गुणो भवतीति । यदयम् "आतोऽनुपसर्गे कः" इति ककारमनुबन्धं करोति। कथं कृत्वा ज्ञापकम्? कित्करण एतत्प्रयोजनम्—कितीत्याकारलोपो यथा स्यात्। यदि चाकारस्य गुणः स्यात्, कित्करणमनर्थकं स्यात् । गुणे कृते द्वयोरकारयोः पररूपेण सिद्धं रूपं स्यात् 'गोदः, कम्बलदः' इति। पश्यति त्वाचार्यो नाकारस्य गुणो भवतीति; ततः ककारमनुबन्धं करोति। सन्ध्यक्षरनिवृत्त्यर्थेनापि नार्थः। उपदेशसामर्थ्यात् सन्ध्यक्षरस्य गुणो न भवति। व्यञ्जननिवृत्त्यर्थेनापि नार्थः। आचार्यप्रवृत्तिर्ज्ञापयति न व्यञ्जनस्य गुणो भवतीति। यदयं जनेर्डं शास्ति। कथं कृत्वा ज्ञापकम्? डित्करण एतत्प्रयोजनम्—डिति टिलोपो यथा स्यात्। यदि व्यञ्जनस्य गुणः स्यात् डित्करण-मनर्थकं स्यात्। गुणे कृते त्रयाणामकाराणां पररूपेण सिद्धं रूपं स्यात् 'उपसरजः, मन्दुरजः' इति। पश्यति त्वाचार्यो न व्यञ्जनस्य गुणो भवतीति। ततो जनेर्डं शास्ति।

प्र॰ —इग्ग्रहणमिति; वक्ष्यमाणज्ञापकवशादाकारादिनिरासात् इक एव गुणवृद्धी भविष्यत इति प्रश्नः ॥ आत्सन्ध्यक्षरेति; आकारादीनां स्थानित्वस्य निवृत्त्यर्थमित्यर्थः ॥ आकारस्याङ्गान्त्यस्य वृद्धिविधावभावाद्विशेषाभावाच्चाकारस्य च "अतो लोपः" इति लोपविधानादाकारस्य गुणप्रसङ्ग मुदाहरति—यातेति ॥ ग्लायतीति; एचां द्विमात्रत्वाविशेषात् प्रयत्नाधिक्याभावादैकारोपदेशेऽप्येकारो गुणः स्यात् ॥ उम्भितेति; भकारस्यौष्ठ्यत्वादोकारो गुणः स्यात् । पररूपेणेति; अतो लोपस्तु न भवति, आर्धधातुकोपदेशे यदकारान्तं तस्य लोपविधानात् ॥ उपदेशसामर्थ्यादिति; प्रतिपत्तिलाघवार्थमेकारमेवोपदिशेदित्यर्थः ॥ यदयं जनेरिति; यद्येवं मिदेर्गुणो विधीयमानो ज्ञापकेन व्यञ्जनस्य निरस्तत्वादिग्ग्रहणाभावाच्च सर्वादेशः प्राप्नोति; मिद इः मिदिरित्याश्रयणादिकारस्यैव भविष्यतीत्यदोषः ॥

उ.—गुणवृद्धिग्रहणं "न धातुलोपः" इत्यादौ निषेध्यसमर्पकतयोपयुक्तमभिप्रेत्य इग्ग्रहणं किमर्थमिति भाष्यम् । तस्याभिप्रायमाह—वक्ष्यमाणेति । वार्तिके आदादिशब्दे स्थानित्वलक्षणेत्याह—आकारादीनामिति । नन्विक्परिभाषोपस्थानं गुणवृद्धिविधिषु । तत्र वृद्धिविधेः प्राथम्यादादौ वृद्धिप्रसङ्ग उदाहर्तव्यः । क्रमस्यैच्छिकत्वे पश्चादप्युदाहर्तव्यः, अकारस्य गुणप्रसङ्गो नोदाहृतः; अत आह—आकारस्येति । वृद्धिविधौ; "सिचि वृद्धिः" इत्यादौ । अयासीदित्यत्र परत्वात् सका भाव्यमित्याकारस्यान्त्यत्वाभावः । अभ्युपेत्याह—विशेषेति । अकारस्य वृद्धिप्रसङ्गं निराह—अकारस्येति । अचिकीर्षीदित्यादौ "ण्यल्लोपावियङ्यण्गुणवृद्धिदीर्घेभ्यः" इति पूर्वविप्रतिषेधात् वृद्धेः पूर्वमल्लोपः । यद्यपि *'विकासयति' इत्यकारस्य वृद्धिरस्ति, तथापि तत्र नेक्परिभाषोपस्थानम् । अकारस्य गुणविधौ विशेषाभावादाकारस्यैव गुणप्रसङ्गोदाहरणं युक्तमिति भावः । ऐकारोपदेशान्न गुणः स्यात्; अत आह—एचामिति । यद्यप्यैचोश्चोत्तरभूयस्त्वमस्ति, तथापि द्विमात्रत्वे न विशेष इति भावः । भकारस्य को गुणः ? अत आह—भकारस्येति । ननु परत्वादतो लोपेन भाव्यम्, न पररूपेण; अत आह—अतो लोपस्त्विति; कविधानसमये आकारान्तमिति नातो लोप इति भावः । "अतो लोपः" इत्यत्र "अनुदात्तोपदेश" इत्यत उपदेशग्रहणानुवृत्त्या आर्धधातुकोपदेशे यदकारान्तमिति लभ्यते । अत्र पररूपेणेति भाष्यदर्शनात् तत्र तदनुवृत्तिरनुमीयते । न तु तदननुवृत्तेस्तत्र प्रयोजनम् । अत एव गत इत्यत्रानुनासिकलोपः अतो लोपे कर्तव्ये असिद्ध इत्यतो लोपो न भवतीति वार्तिकोक्तम् "असिद्धवदत्राभात्" इत्यस्य प्रयोजनं दूषयन् भाष्यकार "अतो लोपः" इत्यत्रोपदेशग्रहणानुवृत्त्या तत्रातोलोपाभावं वक्ष्यतीति वदन्ति । प्रयत्नाधिक्याभावादित्येतं निराह—प्रतिपत्तीति । अतिप्रसङ्गं शङ्कते—यदीति । इग्ग्रहणेति; ततश्च

* अङ्क्लापयति इति पाठः शाकटायनमते साधुः ।

मिदेरिति स्थानषष्ठी, नावयवषष्ठीति सर्वादेशप्रसङ्ग इत्यर्थः। भाष्ये वक्ष्यमाणं प्रकार-माह—मिद इरिति।

**भा.—नैतानि सन्ति ज्ञापकानि। यत्तावदुच्यते क्त्करणं ज्ञापकं नाकारस्य गुणो भवतीति; उत्तरार्थमेतत् स्यात्—"तुन्द-शोकयोः परिमृजापनुदोः" इति। यत्तर्हि "गापोष्टक्" इत्य-नन्यार्थं ककारमनुबन्धं करोति। यदप्युच्यते–उपदेशसामर्थ्यात् सन्ध्यक्षरस्य गुणो न भवतीति। यदि यद्यत् सन्ध्यक्षरस्य प्राप्नोति तत्तदुपदेशसामर्थ्याद्बाध्यते, आयादयोऽपि तर्हि न प्राप्नुवन्ति। नैष दोषः। यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते; यस्य तु विधेर्निमित्तमेव नासौ बाध्यते। गुणं च प्रत्युपदेशोऽनर्थकः; आयादीनां पुनर्निमित्तमेव। यदप्युच्यते—जनेर्डवचनं ज्ञापकं न व्यञ्जनस्य गुणो भवतीति। सिद्धे विधिरारभ्यमाणो ज्ञापकार्थो भवति। न च जनेर्गुणेन सिध्यति। कुतो ह्येतत्—जनेर्गुण उच्यमानोऽकारो भवति, न पुनरेकारो वा स्यादोकारो वेति। आन्तर्यतोऽर्धमात्रिकस्य व्यञ्जनस्य मात्रिकोऽकारो भविष्यति। एवमप्यनुनासिकः प्राप्नोति। पररूपेण शुद्धो भविष्यति। एवं तर्हि गमेरप्ययं डो वक्तव्यः। गमेश्च गुण उच्यमान आन्तर्यत ओकारः प्राप्नोति। तस्मादिग्ग्रहणं कर्तव्यम्।**

प्र॰—यत्तावदिति; विशेषप्रतिपादनाय सकलज्ञापकाक्षेपः। केचिदाहुः—टकः क्त्त्वेन ज्ञापकेनाकारनिवृत्त्यर्थत्वे निराकृते यदप्युच्यत इति ज्ञाप-काक्षेपो ग्रन्थच्छायां न पुष्णाति॥ तस्मादार्थेन क्रमेण सर्वज्ञापकभङ्गोप-न्यासं कृत्वा यथासंभवं ज्ञापकसमर्थनं कर्तव्यम्॥ आयादयोऽपीति; ऐकारोच्चारणस्याविकृतरूपश्रवणार्थत्वादिति भावः॥ यं विधिमिति; आया-देशस्यैकार एव निमित्तमित्यायादेशो न बाध्यते। न हि ग्लायित्येवं पाठः शक्यः कर्तुम्, 'त्वया ग्लायते' इत्यादिरूपासिद्धिप्रसङ्गात्। "न ध्याख्या" इति निपातनाच्चात्वं गुणवन्न बाधिष्यते। पररूपेणेति; रूप-ग्रहणस्येदमेव प्रयोजनम्—यादृक् परस्य रूपं तादृगेव यथा स्यादिति।

गमेरप्ययमिति ; "सप्तम्यां जनेर्डः" इत्यतः "अन्येष्वपि दृश्यते" इत्यत्र डोऽनुवर्तमानो गमेरपि विधीयत इत्यज्ञापकं डित्वमिति व्यञ्जननिवृत्त्यर्थं सूत्रं स्थितम् ॥

उ.—विशेषेति ; 'टकः कित्त्वं ज्ञापकं' "यं विधिं प्रति" इत्यादिविशेषप्रतिपादनायेत्यर्थः । यथास्थितभाष्यसंनिवेशमाक्षिपति—केचिदिति । ग्रन्थच्छायाम् ; ग्रन्थमर्यादाम् । यदपीत्यादिना आक्षेपसमुच्चयप्रतिपादनादाक्षेपानन्तरमेवाक्षेपान्तरं युक्तं न समाधानानन्तरमित्यर्थः। समाधत्ते—तस्मादिति । आर्थेन ; सामर्थ्यलभ्येन । कर्तव्यमिति ; केचिदाहुरित्यन्वयः । अविकृतेति ; एकारोच्चारणे कार्ये ऐकारोच्चारणं ऐकारादेशमात्रनिरासायेति । ऐकार एवेति ; गुणस्य विकारादिकमपि निमित्तमित्येवकारार्थः। ननु प्रतिपत्तेर्लाघवाय ग्लाय् इत्येव पाठः स्यात् ; तदभावादायो न भविष्यति ; इत्यत आह—न हि इति । ग्लायत इति ; भावे लकारः । ननु ग्ला इत्युपदेशसंभवादात्वस्यैकार एव न निमित्तम् ; तथा च "आदेचः" इत्यात्वमपि न स्यात् ; अत आह—न ध्येति । ध्यायतेः कृतात्वस्य निर्देशात् ज्ञापकादात्वस्य न बाधः । अशितीति प्रतिषेधाङ्गीकारात् प्रत्ययपरत्वाभावेऽपि ध्येत्यात्वाविरोधः । गुणवदिति ; वैधर्म्यदृष्टान्तः । रूपेति ; 'एङि परम्' इत्येव सिद्धे रूपग्रहणस्येदं प्रयोजनमित्यर्थः । गमेरपीति ; 'अभ्युद्गः' इत्यादिसिद्धये दृशिग्रहणात् गमेरपि डो विधीयत इत्यर्थः। भाष्ये—आन्तर्यत इति ; "यत्रानेकविधमान्तर्यं तत्र स्थानत आन्तर्यं बलीयः" इति न्यायादिति भावः ।

**भा.—यदीग्ग्रहणं क्रियते 'द्यौः, पन्थाः, सः, इमम्' इत्येतेऽपीकः प्राप्नुवन्ति।**

**वा.—संज्ञया विधाने नियमः ।**

**भा.—संज्ञया ये विधीयन्ते तेषु नियमः। किं वक्तव्यमेतत्? न हि। कथमनुच्यमानं गंस्यते? गुणवृद्धिग्रहणसामर्थ्यात् । कथं पुनरन्तरेण गुणवृद्धिग्रहणमिको गुणवृद्धी स्याताम्? प्रकृतं गुणवृद्धिग्रहणमनुवर्तते । क्व प्रकृतम्? "वृद्धिरादैच् अदेङ्गुणः" इति । यदि तदनुवर्तते, अदेङ् गुणो वृद्धिश्चेत्यदेङां वृद्धिसंज्ञापि प्राप्नोति। संबन्धमनुवर्तिष्यते। "वृद्धिरादैच्"। "अदेङ् गुणः" इति 'वृद्धिरादैच्'। ततः "इको गुणवृद्धी" इति। गुणवृद्धिग्रहणमनुवर्तते । आदैजदेङ्ग्रहणं निवृत्तम्। अथवा मण्डूकगतयोऽधिकाराः। यथा मण्डूका उत्प्लुत्योत्प्लुत्य गच्छन्ति तद्वद्-**

**धिकाराः। अथवैकयोगः करिष्यते—"वृद्धिरादैजदेङ्गुणः"। ततः "इको गुणवृद्धी" इति। न चैकयोगेऽनुवृत्तिर्भवति।**

**अथवा—**

**अन्यवचनाच्चकाराकरणाच्च प्रकृतापवादो विज्ञायते, यथोत्सर्गेण प्रसक्तस्यापवादो बाधको भवति। अन्यस्याः संज्ञाया वचनाच्चकारस्य चानुकर्षणार्थस्याकरणात् प्रकृताया वृद्धिसंज्ञाया गुणसंज्ञा बाधिका भविष्यति। यथोत्सर्गेण प्रसक्तस्यापवादो बाधको भवति। अथवा वक्ष्यत्येतत्—"अनुवर्तन्ते च नाम विधयः। न चानुवर्तनादेव भवन्ति। किं तर्हि? यत्नाद्भवन्ति" इति। अथवा, उभयं निवृत्तम्। तदपेक्षिष्यामहे।**

प्र—संज्ञयेति; गुणवृद्ध्यनुवृत्त्यैव गुणवृद्ध्योरिकः सिद्धत्वात् द्वितीयं गुणवृद्धिग्रहणमाश्रितगुणवृद्धिशब्दव्यापारार्थं विज्ञायते। तेन गुण इत्येवं यो गुणः वृद्धिरित्येवं या वृद्धिरिति विज्ञायते। अथवा गुणवृद्धिमात्रग्रहणे गुणवृद्ध्यधिकारादेव सिद्धे पुनर्गुणवृद्धिग्रहणं गुणवृद्धिशब्दव्यापाराश्रयणार्थं विज्ञायते॥ अदेङामिति; पूर्वसूत्रे संज्ञिसंबन्धायोपात्तो यादृशो वृद्धिशब्दस्तादृश एवोत्तरत्रानुवर्तत इत्यदेङामित्युक्तम्। तेनैतन्न चोदनीयं—वृद्धिशब्दोऽनुवर्तमान आदैच. प्रत्याययतीत्यादैचां गुणसंज्ञा प्राप्नोतीति। संबन्धमिति; संबध्यत इति संबन्धम्; कर्मणि घञ्' नपुंसकस्याभिधेयत्वान्नपुंसकनिर्देशः। आदैज्ग्रहणसंबद्धं वृद्धिग्रहणमदेङ्गुण इत्यत्रानुवर्तते। तेनादेङ्भिर्न संबध्यते। इह त्वनुवृत्तमादैचो जहाति। कान्तारोत्तरणाय सार्थस्येव त्यागोपादाने॥ अथवेति; वृद्धिशब्दस्येहाकाङ्क्षावशादुपस्थानं, न तु "अदेङ्" इत्यत्र। अथवैकयोग इति; एको भवतिरध्याह्रियते वृद्धिरादैजदेङ्गुणो भवतीत्येकवाक्यत्वं संपद्यते। यद्यपि प्रतिपत्तिकाले भवतिक्रिया भिद्यते, तथाप्येककाला प्रतिपत्तिरित्यादैच्संबद्धा वृद्धिसंज्ञा, अदेङ्संबद्धा गुणसंज्ञेति नास्ति वृद्धिसंज्ञाया अदेङ्भिः संबन्धः॥ अथवान्यवचनादिति; यथा कप्रत्ययेन अण् बाध्यते, असंदिग्धत्वादनवकाशत्वात्तात्पर्याच्च कविधेः। अणस्तु विपर्ययात्। एवम् "अदेङ् गुणः" इत्यत्र वृद्धिग्रहणमनुवृत्तं सत् संदिह्यते—किमुत्तरार्थैवेहास्यानुवृत्तिः? अथेहा-

र्थापीति। सावकाशा च वृद्धिसंज्ञा। तात्पर्यं च नास्ति। गुणसंज्ञा तु तात्पर्यादसंदेहान्निरवकाशत्वाच्च वृद्धिसंज्ञासंबन्धमदेङां बाधते। प्रत्ययसंज्ञा तु संज्ञिविशेषेणासंयुक्ताधिकारेणैव विधीयमाना कृत्यादिसंज्ञाविषयेऽपि प्रवर्तते॥ अथवेति; "विभाषातिलमाषोमा" इत्यत्र ह्युमाभङ्गयोरधान्यत्वात् खञोऽप्राप्तौ चोदितायां खञ्ग्रहणस्यानुवृत्तिराश्रिता। अनुवर्तमानश्च खञ् यत्नाभावात् व्रीहिशाल्यादिभिर्न संबध्यते; अपि तु विभाषाश्रुत्या यत्नेन तिलादिभिरेव संबध्यते। तथेहापि वृद्धिग्रहणम् "अदेङ् गुणः" इत्यत्रानुवर्तमानमपि यत्नाभावाददेङ्भिर्न संबध्यते। इह तु पुनर्गुणवृद्धिग्रहणं यत्नो भवति॥ अथवेति; अपेक्षालक्षणं लौकिकमधिकारमाश्रयति। समुदायस्य चापेक्षायां नास्त्येतत् "अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा" इति गुणस्यैवापेक्षा युक्तेति, समुदायस्य भेदाभावात्।

उ.—भाष्ये—एते; औकारादयः। उदाहृतेष्विकः प्राप्नुवन्तीति योजना। भाष्ये स इति संपातायातम्; यद्वा तत्र इगभावादत्वमेव न स्यादिति भावः। न च "त्यदादीनामः" इत्यत्रेक्परिभाषोपस्थाने द्वीदमोरेवात्वमिति त्यदादिग्रहणं व्यर्थं स्यात्, अतोऽलोन्त्यविधिरेवात्र स्यादिति वाच्यम्; "तदोः सः सावनन्त्ययोः" इत्यत्रानुवृत्त्यर्थत्वेनोपपत्तेः। तदपेक्षिष्यामहे इत्यन्तभाष्यस्य तात्पर्यमाह—गुणवृद्धीति। आश्रितेति; आश्रितो गुणवृद्धिशब्दव्यापार उच्चारणं बोधकत्वं वा येष्वदेङादैक्षु विधीयमानेषु आश्रितगुणवृद्धिशब्दव्यापाराः, तदर्थमिति विग्रहः। फलितमाह—तेनेति। गुणवृद्धिशब्दविहिते ये गुणवृद्धी ते इक इति सूत्रार्थः। लक्षणायामावश्यक्यामननुवृत्तावपि लक्षणाद्योतकत्वोपपत्तेरनुवृत्तिर्नापेक्षितेत्याशयेनाह—अथवेति। गुणवृद्धिशब्दयोर्विधानव्यापारो येषु अदेङादैक्षु, तेषामाश्रयणार्थं ग्रहणार्थमिति विग्रहः। संज्ञिपरवृद्धिशब्दानुवृत्तौ भाष्यासङ्गतिमाशङ्क्याह—पूर्वसूत्र इति। यादृशः; स्वरूपपदार्थकः। नन्वेवं संज्ञिपरत्वाभावेऽनुवृत्त्यैव गुणवृद्ध्योरिकः सिद्धत्वादिति कथमुक्तमिति चेन्न, अत एवास्वरसादननुवृत्तिपक्षोक्तिरिति केचित्। संज्ञापरवृद्धिशब्दानुवृत्तिबलादत्रत्यवृद्धिशब्दस्य संज्ञया विधानलक्षकत्वमित्यन्ये। संज्ञामात्रानुवृत्तिं मत्वा अदेङां वृद्धिसंज्ञाशङ्का; संबन्धानुवृत्त्या तत्परिहारः। मण्डूकप्लुत्यादिपक्षाश्रयणेन प्रदीपेऽननुवृत्तिपक्षोक्तिरित्यपरे। सिद्धान्तानुसारेणानुवृत्तिपक्षोक्तिरिति तु नवीनाः। तस्य, तस्मात्, तेन, अस्य, अस्मात्, अनेन, इति सौत्रनिर्देशात् ज्ञापकादत्र संज्ञया विधाने नियम इत्याधुनिकाः; "घञजपः पुंसि" इति वचनान्नपुंसकायोगमाशङ्क्य भावविहितघञादिविषयकं तदित्यभिप्रेत्य कर्मणि घञित्याह; संबध्यत इति। संबन्धानुवृत्तेः प्रयोजनमाह—तेनेति। स्वसंज्ञिसंबन्धेन निराकाङ्क्षस्य संज्ञ्यन्तरसंबन्धो न संभवतीत्यर्थः। इह त्विति; अनुवृत्तो वृद्धिशब्दः संज्ञिपर एवेति भावः। कान्तारेति; आदैज्ग्रहणं न स्वकार्यायानुवर्तते; किंतु वृद्धिशब्दस्यान्यसंबन्धनिवृत्तय इति

त्यागोपपत्तिरिति भावः। अत्र आदैजदेङिति संज्ञ्यनुवृत्त्यैवैकस्थानिकत्वे लब्धे गुणवृद्धिग्रहणं संज्ञया विहितलक्षकमित्यप्याहुः। भाष्ये वृद्धिरादैजदेङ्गुण इति सूत्रक्रमनिर्देशः। पुनः 'वृद्धिरादैच्' इति "अदेङ्गुणः" इत्यत्र संबन्धानुवृत्तिप्रदर्शनाय। अचेतनस्य चेतनसदृशं गमनं न संभवतीत्यत आह—वृद्धिशब्दस्येति। आकाङ्क्षेति; एकस्य संज्ञाद्वयानुपयोगाददेङ्भिर्न संबन्धः। इह तु संज्ञया विधानस्यापेक्षितत्वात् संबन्ध इत्यर्थः। ननूद्देश्यविधेयभेदात् कथमेकयोगत्वम्; अत आह—एको भवतिरिति। प्रतिपत्तिकाल इत्यादिः। एक वाक्यत्वमिति—एकक्रियान्वयित्वलक्षणमौपचारिकमेक वाक्यत्वमित्यर्थः। नन्वेतावता कथमनुवृत्त्यभावः? अत आह—यद्यपीति। भवतिक्रियान्वयानुरोधेन समूहालम्बना प्रतिपत्तिः प्रतिपत्तिद्वयं वा युगपज्जायत इति क्रमिकोपस्थित्यभावान्नानुवृत्तिरित्यर्थः। ननु सामान्यविशेषविषयशास्त्रसाम्यमतद्विषयशास्त्रस्य कथम्? अत आह—यथेति। न ह्यनाकारान्तो धातुः कप्रत्ययस्य विषयो न वेति सन्देहः; नाप्याकारान्तधातुव्यतिरिक्ते तस्यावकाशः; नाप्याकारान्तव्यतिरिक्तो देशेन कविधिः; "आतोऽनुपसर्गे कः" इत्येव विधानादित्यर्थः। ननु गुणसंज्ञया वृद्धिसंज्ञेव कृत्यादिसंज्ञया प्रत्ययसंज्ञा सनादिषु सावकाशा बाध्येत; अत आह—प्रत्ययसंज्ञेति। तव्यदादीनामाकाङ्क्षया न प्रत्ययसंज्ञान्वयः, येन कृत्यसंज्ञया निराकाङ्क्षता स्यात्; किन्तु प्रत्ययसंज्ञाकाङ्क्षया। न च सन्निहितसनादिभिः सापि निराकाङ्क्षा, तथा सति "सनाद्यन्ता धातवः" इतिवत् सनादयः प्रत्यया इत्येव ब्रूयात्। तथाच संज्ञिविशेषसंबन्धं विनाधिकारेण च संज्ञाविधानसामर्थ्यात् यावत्स्वविषयत्वयोग्यप्रत्ययविषयत्वनिश्चयान्न कृत्यकृत्तद्धितादिसंज्ञाभिर्बाध इत्यर्थः। वक्ष्यमाणमेवाह—विभाषेति। खञिति; यदभावपक्ष इत्यादिः। अत्र 'मण्डूकगतयः' इत्यत्र सामान्येनोक्तं विशेषेणोच्यते; न परिहारान्तरमिति केचित्। अन्ये तु 'मण्डूकगतयः' इत्यत्र सत्यामप्याकाङ्क्षायां सन्निधिर्नास्तीत्युक्तम्; अत्र सत्यसति वा सन्निधावाकाङ्क्षा नास्तीयुच्यत इति परिहारभेदः, औदुम्बराधिकरणपर्णमय्यधिकरणयोः साधनत्वसाध्यत्वमिरासेन भेदवदित्याहुः। गुणवृद्धिग्रहणं यत्रो भवतीत्यर्थः। सर्वथा निवृत्तस्यापेक्षायोगात् स्वरितलिङ्गेनानुवृत्तिर्निवृत्तिशब्देनोक्तेत्यभिप्रेत्याह—अपेक्षेति। नन्वेवं "अनन्तरस्य" इति न्यायाद्गुणस्यैवापेक्षा स्यात्, न वृद्धेः; अत आह—समुदायस्येति। यद्यप्यत्र न शाब्दः समुदायः, तथापि बुद्धिकृतः संभवति; लक्ष्यानुरोधादनन्तरस्येति न्यायः क्वचिन्नाश्रीयत इति तात्पर्यम्।

**भा.—किं पुनरयमलोऽन्त्यशेषः आहोस्विदलोऽन्त्यापवादः?। कथं चायं तच्छेषः स्यात्,? कथं वा तदपवादः? यद्येकं वाक्यं तच्चेदं च,—अलोऽन्त्यस्य विधयो भवन्ति; इको गुणवृद्धी अलोऽन्त्यस्येति, ततोऽयं तच्छेषः। अथ नाना वाक्यं तच्चेदं च—अलोऽन्त्यस्य विधयो भवन्ति, इको गुणवृद्धी अन्त्यस्य चानन्त्यस्य चेति, ततोऽयं तदपवादः। कश्चात्र विशेषः?**

वा.—वृद्धिगुणावलोऽन्त्यस्येति चेत् मिदिमृजिपुगन्तलघूप-
धर्च्छिदृशिक्षिप्रक्षुद्रेष्विग्ग्रहणम् ॥

भा.—वृद्धिगुणावलोऽन्त्यस्येति चेत् मिदिमृजिपुगन्तलघूप-
धर्च्छिदृशिक्षिप्रक्षुद्रेष्विग्ग्रहणं कर्तव्यम्। "मिदेर्गुणः"; इक इति वक्तव्यम्। अनन्त्यत्वाद्धि न प्राप्नोति। "मृजेर्वृद्धिः"; इक इति वक्तव्यम्। अनन्त्यत्वाद्धि न प्राप्नोति। "पुगन्तलघूपधस्य गुणः"; इक इति वक्तव्यम्। अनन्त्यत्वाद्धि न प्राप्नोति। "ऋदृशोऽङि गुणः"; इक इति वक्तव्यम्। अनन्त्यत्वाद्धि न प्राप्नोति। "क्षिप्रक्षुद्रयोर्गुणः"; इक इति वक्तव्यम्। अनन्त्यत्वाद्धि न प्राप्नोति।

वा.—सर्वादेशप्रसङ्गश्चानिगन्तस्य।

भा.—सर्वादेशश्च गुणोऽनिगन्तस्य प्राप्नोति; 'याता, वाता'। किं कारणम्?। "अलोऽन्त्यस्य" इति षष्ठी चैव ह्यन्त्यमिकमुपसंक्रान्ता; अङ्गस्येति च स्थानषष्ठी। तद्यदिदानीमनिगन्तमङ्गं तस्य गुणः सर्वादेशः प्राप्नोति। नैष दोषः। यथैव हि "अलोऽन्त्यस्य" इति षष्ठी अन्त्यमिकमुपसंक्रान्ता, एवमङ्गस्येत्यपि स्थानषष्ठी। तद्यदिदानीमनिगन्तमङ्गं तत्र षष्ठ्येव नास्ति; कुतो गुणः? कुतः सर्वादेशः? एवं तर्हि नायं दोषसमुच्चयः। किं तर्हि? पूर्वापेक्षोऽयं दोषः। ह्यर्थे चायं चः पठितः—मिदिमृजिपुगन्तलघूपधर्च्छिदृशिक्षिप्रक्षुद्रेष्विग्ग्रहणं सर्वादेशप्रसङ्गो ह्यनिगन्तस्येति। "मिदेर्गुणः"; इक इति वचनादन्त्यस्य न, "अलोऽन्त्यस्य" इति वचनादिको न। उच्यते च गुणः। स सर्वादेशः प्राप्नोति। एवं सर्वत्र।

प्र.—किं पुनरिति; उभयथा संभवात् दोषदर्शनाच्च प्रश्नः। तत्र 'अङ्गस्य गुणः' इति षष्ठीनिर्देशाल्लिङ्गात् "अलोऽन्त्यस्य" इत्युपतिष्ठते; गुणश्रुत्या तु "इकः" इति। तत्र यदि पूर्वमिका अङ्गं विशेष्यते—इगन्ताङ्गस्य गुणो भवतीति। स च भवन् "अलोऽन्त्यस्य" इत्यन्त्यस्य भवति, तदा सोऽस्य शेषो भवति। यदा त्वङ्गस्येति पूर्वमेवान्त्यमलं षष्ठी नीयते—अङ्गान्त्यस्य गुण इति; पश्चादिकाऽन्त्योऽल् विशेष्यते - तदा तस्यायं

विशेषणत्वात् तच्छेषो भवति। अथ तु अङ्गस्येति गुणवृद्धिविधौ न स्थानषष्ठी; किं तर्हि? इगपेक्षया अवयवषष्ठी, तदा स्थानषष्ठ्यभावात् "अलोऽन्त्यस्य" इत्यस्यानुपस्थानमिति तदपवादपक्षो भवति। अप्राप्त्यनुमानमेव हि बाधः, वचनेन प्राप्तस्य *बाधायोगात्। ततश्चाङ्गावयवस्य यत्र तत्र स्थितस्येको गुणवृद्धी इत्यर्थः संपद्यते। समुच्चयस्त्वसंभवान्नोपन्यस्तः। न हि युगपद् द्वौ षष्ठ्यर्थौ संभवतः स्थानेयोगोऽवयवयोगश्चेति। विकल्पोऽपि न भवति, एकत्वात् षष्ठ्यर्थस्य। तस्मात् तच्छेषतदपवादपक्षावेवात्राशङ्कितौ॥ यद्येकमिति; अनेकयोगव्यवहितयोरप्येकस्मिन् कार्यप्रदेशे स्वस्वनिमित्तसंनिधापितयोरङ्गाङ्गिभावात् विशेषणविशेष्यभावादेकवाक्यतोपपत्तिः। अथ नानेति; अङ्गस्येतीगपेक्षयावयवषष्ठ्याम् इकः स्थानित्वात् तद्विशेषणत्वादङ्गस्य अनुपस्थानम् "अलोऽन्त्यस्य" इत्यस्य। ततश्चानयोर्भिन्नविषयत्वान्नानावाक्यत्वम्॥ वृद्धिगुणाविति; मिदादीनामनिगन्तत्वात् अलोऽन्त्यस्येत्येतदङ्गमिग्ग्रहणं न संनिपततीति तेषु प्रदेशेष्विग्ग्रहणं कर्तव्यम्॥ दोषान्तरमप्याह—सर्वादेशप्रसङ्गश्चेति। "अङ्गस्य" इत्येतत् भेदेन सर्वाङ्गेषु व्याप्रियते। तत्रेगन्तेष्वेव "अलोऽन्त्यस्य" इति विधिः; अन्यत्र तु षष्ठ्यान्त्येऽल्यनुपसंहारात् 'याता, वाता' इति सर्वादेशो गुणः प्राप्नोति॥ यथैव हीति; अङ्गस्येति षष्ठ्युच्चारितैवान्त्यमलं नीतेति नास्यापरं रूपमस्तीति नास्ति सर्वादेशगुणप्रसङ्गः॥ पूर्वापेक्षोऽयमिति। "मिदादिष्विग्ग्रहणं कर्तव्यम्" इत्यत्रैवार्थे हेतुत्वेनेदमुपात्तमित्यर्थः। उच्यते चेति; "मिदेः" इति चोदनया।

उ.—संशयबीजं वदन् विचारानुपयोगं निराह—उभयथेति। एकवाक्यत्वं तावदुपपादयति—तत्रेति; "सार्वधातुकार्धधातुकयोः" इत्यादिविधिप्रदेश इत्यर्थः। अत्र 'अङ्गस्य, गुणः' इति चानुवर्तेते। तत्राङ्गस्येति स्थानषष्ठी चेत् षष्ठीगुणलिङ्गात् परिभाषाद्वयोपस्थितौ विशेषणविशेष्यभावे कामचाराद् द्वेधा एकवाक्यत्वमाह—तत्रेति; परिभाषाद्वयोपस्थितौ। सोऽस्येति; इगन्तस्याङ्गस्यालो विशेषणादित्यर्थः। अङ्गस्येति षष्ठीत्यन्वयः। भाष्ये अलोऽन्त्यशेष इत्यत्र षष्ठीसमासो बहुव्रीहिर्वेति समासद्वयमभिप्रेत्य द्वेधा विशेषणविशेष्यभावोक्तिरिति ध्येयम्। अपवादपक्षमुपपादयति—अथ त्विति। अङ्गेनेग्विशेष्यते; वैयधिकरण्येन च संबन्ध इत्यर्थः। ननु प्राप्तस्य निवृत्त्यकरणात् कथं बाधलक्षणोऽपवादः? अत आह—अप्राप्तीति। एतदन्वयनिमित्तकत्वादङ्गस्येति स्थानषष्ठीत्वाभावादस्य तदपवादत्वमित्यर्थः।

* बाधाभावादिति पाठः।

बाधाभावात्; अत्यन्तबाधाभावात्। वचनप्राप्तस्यापि पाक्षिकबाधः षोडशिग्रहणादाविष्यत एव। अपवादपक्षे फलितमाह—ततश्चेति। समुच्चयविकल्पपक्षौ सकृदुच्चरितस्यार्थद्वयासंभवान्नोपन्यस्तावित्याह—समुच्चय इति। नन्वसंबद्धन्यायेनानुषङ्गाभावात् कथमेकवाक्यत्वम्; अत आह—अनेकेति। कार्यकालपक्षमाश्रित्याह अनेकेति इति केचित्; तच्चिन्त्यम्; यथोद्देशपक्षेऽप्येकवाक्यताया आवश्यकत्वात्। अवयवावयविभावनिरासाय पूर्वस्यैव व्याख्यानम्—विशेषणेति। एकवाक्यत्वप्रदर्शनपरे भाष्ये इको गुणवृद्धी इत्येतत्पूर्वपरान्वयि; तेन तस्य शेषः, सोऽस्य शेष इति पक्षद्वयं प्रदर्शितमिति ज्ञेयम्। वाक्यनानात्वमुपपादयति—अङ्गस्येति; अङ्गस्येत्यवयवषष्ठी, न स्थानषष्ठीत्यर्थः। परिभाषाद्वयस्यैकवाक्यत्वे अलोऽन्त्यस्येत्यनपेक्षमिग्ग्रहणं नोपतिष्ठत इत्याह—मिदादीनामिति। भाष्ये अनन्त्यत्वादिति; तच्छेषपक्षे इकोऽनन्त्यत्वादिक्परिभाषया गुणो न भवतीत्यर्थः। 'मेद्यति, मार्ष्टि, अर्पयति, भेत्ता, आनर्च्छे, अदर्शत्, क्षेपिष्ठः, क्षोदिष्ठः' इत्याद्युदाहरणानि। ननु परिभाषाद्वयविशिष्टस्याङ्गस्येत्यस्य पृथगुपस्थानाभावात् कथं सर्वादेशप्रसङ्गः? अत आह—अङ्गस्येति। भेदेन; तदेकवाक्यतां विनैव। तर्हि क्वचिदपि तदेकवाक्यत्वं न स्यात्; अत आह—तत्रेति; सर्वाङ्गेषु मध्य इत्यर्थः। इगन्तेष्वेवेति—तत्रैव परिभाषाद्वयेनैकवाक्यत्वमित्यर्थः। अन्त्यमलमिति; इक्परिभाषाशेषालोऽन्त्यपरिभाषयेत्यर्थः। अपरम्; गुणविधौ स्वातन्त्र्येणोपस्थानरूपम्। लघूपधगुणस्य "क्ङिति च" इति प्रतिषेधादाह—मिदेरिति।

**भा.—अस्तु तर्हि तदपवादः।**

**वा.—इङ्मात्रस्येति चेज्जुसिसार्वधातुकार्धधातुकह्रस्वाद्योर्गुणेष्वनन्त्यप्रतिषेधः॥**

**भा.—इङ्मात्रस्येति चेत् जुसिसार्वधातुकार्धधातुकह्रस्वाद्योर्गुणेष्वनन्त्यप्रतिषेधो वक्तव्यः। "जुसि गुणः"; स यथेह भवति 'अजुहवुः, अबिभयुः' इति, एवम् 'अनेनिजुः, पर्यवेविषुः' अत्रापि प्राप्नोति। "सार्वधातुकार्धकातुकयो गुणः"; स यथेह भवति 'कर्ता, हर्ता, नयति, तरति' इति, एवम् 'ईहिता, ईहितुम्, ईहितव्यम्' इत्यत्रापि प्राप्नोति।"ह्रस्वस्य गुणः"; स यथेह भवति 'हे अग्ने, हे वायो' इति, एवम् 'हे अग्निचित्, हे सोमसुत्' इत्यत्रापि प्राप्नोति। "जसि गुणः"; स यथेह भवति 'अग्नयः, वायवः' इति, एवम् 'अग्निचितः, सोमसुतः' इत्यत्रापि प्राप्नोति। "ऋतो ङिसर्वनामस्थानयोर्गुणः"; स यथेह भवति, 'कर्तरि, कर्तारौ, कर्तारः' इति, एवं 'सुकृति, सुकृतौ, सुकृतः' इत्यत्रापि प्राप्नोति। "घेर्ङिति गुणः"; स**

यथेह भवति 'अग्नये, वायवे' इति, एवम् "अग्निचिते, सोमसुते' इत्यत्रापि प्राप्नोति। "ओर्गुणः"; स यथेह भवति—'बाभ्रव्यः, माण्डव्यः' इति, एवं सुश्रुत्—'सौश्रुतः'। इत्यत्रापि प्राप्नोति। नैष दोषः।

वा.—पुगन्तलघूपधग्रहणमनन्त्यनियमार्थम्।

भा.—पुगन्तलघूपधग्रहणमनन्त्यनियमार्थं भविष्यति—पुगन्तलघूपधस्यैवानन्त्यस्य, नान्यस्यानन्त्यस्येति। प्रकृतस्यैव नियमः स्यात्। किं च प्रकृतम्? "सार्वधातुकार्धधातुकयोः" इति। तेन भवेदिह नियमान्न स्यात् 'ईहिता, ईहितुम्, ईहितव्यम्' इति। ह्रस्वाद्योर्गुणस्त्वनियतः; सोऽनन्त्यस्यापि प्राप्नोति। अथाप्येवं नियमः स्यात्—पुगन्तलघूपधस्य सार्वधातुकार्धधातुकयोरेवेति, एवमपि सार्वधातुकार्धधातुकयोर्गुणोऽनियतः सोऽनन्त्यस्यापि प्राप्नोति 'ईहिता, ईहितुम्, ईहितव्यम्' इति। अथाप्युभयतो नियमः स्यात्—पुगन्तलघूपधस्यैव सार्वधातुकार्धधातुकयोः, सार्वधातुकार्धधातुकयोरेव पुगन्तलघूपधस्येति एवमप्ययं जुसि गुणोऽनियतः; सोऽनन्त्यस्यापि प्राप्नोति 'अनेनिजुः, पर्यवेविषुः' इति।

प्र.—इङ्मात्रस्येति; यद्यङ्गस्येतीगपेक्षयावयवषष्ठी, तदा "अलोऽन्त्यस्य" इत्यस्य निमित्ताभावादनुपस्थानम्; स्थानषष्ठी हि तस्योपस्थाने निमित्तम्। ततश्च अङ्गावयवस्यान्त्यस्यानन्त्यस्य चेको गुणः प्राप्नोतीति दोषः। ह्रस्वस्य गुण इति; समानन्यायत्वादेतदुक्तम्। अङ्गस्यावयवो यो ह्रस्वस्तस्य गुण इति। न त्वत्रेक्परिभाषोपतिष्ठते, निर्दिष्टस्थानिकत्वात्। अन्ये त्वाहुः—अत्रापि परिभाषोपस्थाने सति ह्रस्वेनेग्विशेष्यते, ह्रस्वस्येको गुणो यथा स्यात्, दीर्घस्य मा भूदिति। "ओर्गुणः" इत्यत्राप्यस्या उपस्थानमनन्त्यस्याप्युकारस्य गुणार्थम्। असति ह्यस्या उपस्थानेऽङ्गस्येति स्थानषष्ठी स्यात्, अङ्गं चोकारेण विशेष्यत इत्युकारान्तस्यैवाङ्गस्य गुणः स्यात्॥ पुगन्तेति; मेतेत्यादौ गुणे सिद्धे पुनः श्रुतिर्नियमार्थेति गुरूपधस्य 'ईहिता' इत्यादौ न भविष्यति; नापि हे अग्निचिदित्यादौ,

उभयनियमाश्रयणादिति भावः ॥ ननु च भेत्तेति दकारस्य ह्रेपयतीति पकारस्य च यथा स्यादिति विध्यर्थमेतत् स्यात्। नैतदस्ति। पुकि अन्तः पुगन्तः; लध्वी उपधा लघूपधा; ततः समहा द्वन्द्वनिर्देश इत्यन्त्यस्य गुणंन न भाव्यम्। प्रकृतस्येति; एकेन वाक्येन नियमद्वयस्यालाभात् प्रकृतस्यैव गुणस्य नियमः स्यात्—पुगन्तलघूपधस्यैव सार्वधातुकार्धधातुकयोरिति; न तु सार्वधातुकार्धधातुकयोरेव पुगन्तलघूपधस्येति ॥ अथापीति; "अनन्तरस्य विधिर्वा" इति परिभाषा यदि नाश्रीयते इत्यर्थः ॥ अथापीति; *अभ्युपेत्यवादेनोच्यते आवृत्त्यादिन्यायाश्रयणेन वा। एकस्मिंस्तु वाक्ये नियमद्वयं न लभ्यते। अनेनिजुरिति; अत्र लघूपधं चाङ्गं सार्वधातुकं चास्तीति "जुसि च" इति गुणः प्राप्नोति। 'हे पिचव्य, हे बुद्धे, हे बुद्धयः' इत्यादौ चालघूपधत्वादनन्त्यस्य गुणोऽपरिहृतः ॥

उ.—भाष्ये—इग्मात्रस्येति; अन्त्यस्यानन्त्यस्य वेत्यर्थः। तदुपपादयति—यदीति। निमित्ताभावमेवाह—स्थानेति। डुभीभ्यां लङ्। शप्। शपः श्लुः। "श्लौ" इति द्वित्वम्। "सिजभ्यस्त" इति झेर्जुस्। एवं णिजिर्विषॢभ्यां "णिजां त्रयाणाम्" इत्यभ्यासगुणोऽधिकः। नन्वङ्गस्येगादिविशेषणत्वेनेगादेः प्राधान्यात् "जुसि च" इत्यादिभिः सप्तमीनिर्दिष्टैरिगादौ विशेषिते "तस्मिन्—" इति परिभाषयानन्तरस्यैवेगादेर्गुणो विधीयते, न व्यवहितस्येति चेत्, अत्राहुः—"मिदेर्गुणः" इत्यादावङ्गस्यैव शितीत्यादिभिः "तस्मिन्—" इति परिभाषया आनन्तर्येण विशेषणीयत्वात् प्रकरणावैरूप्याय "जुसि च" इत्यादिभिरप्यङ्गमेव विशेष्यत इत्यभिप्रेत्यानन्त्यस्यापि गुणप्रसङ्गोद्भावनमिति। समानन्यायत्वादिति; कश्चिद्गुणस्थानिनं प्रत्यङ्गस्य विशेषणत्वेऽप्यन्यायवैरूप्याय विशेषणत्वमित्यर्थः। अनुपस्थाने हेतुः—निर्दिष्टेति। प्रयोजनवत्योपस्थानमित्याह—अन्ये त्विति। "ओर्गुणः" इत्यत्र निर्दिष्टस्थानिकत्वेऽपि प्रयोजनसत्त्वात् तदुपस्थानमाह—ओर्गुण इति। अत्रापीत्यपिना "ह्रस्वस्य गुणः" इत्यत्राप्यनन्त्यह्रस्वस्य गुणार्थमेतदुपस्थानं सूचितम्। अनन्त्यस्यापीति; पूर्वपक्षे प्रयोजनमिदं, न तु सिद्धान्ते; तत्रो वर्णान्तस्यैव गुणाङ्गीकारात्। भाष्ये ह्रस्वादीत्यादिशब्दसंगृहीतविवरणावसरे "चेर्ङिति" इत्युदाहृतम्; तद्वर्णमात्रस्य घिसंज्ञामभिप्रेत्य। "सिद्धे सत्यारम्भो नियमार्थः" इति सिद्धिमुपपादयति—भेत्तेति। "सार्वधातुकार्धधातुकयोः" इत्येवान्त्यस्यानन्त्यस्य च गुण इत्यर्थः। उभयेति; लघूपधस्यैवेति नियमात् ईहितेत्यादौ, सार्वधातुकार्धधातुकयोरेवेति नियमात् अग्निचिदित्यादौ च न प्रसङ्ग इत्यर्थः॥ बहुव्रीहिं मत्वा शङ्कते—नन्विति। समाधत्ते—नैतदिति। ह्रस्वैकवचनोपपत्तिमाह—तत इति। उभयनियमाश्रयणादियुक्ते प्रकृतस्यैवेत्ययुक्तम्; अत आह—एकेनेति। वाक्यभेदस्यायुक्तत्वादिति भावः। तत्र विनिगमकमाह—

* अभ्युपगम्यवादेन इत्यन्नंभट्टसंमतः पाठः।

प्रकृतस्येति। पुगन्तलघूपधस्य सार्वधातुकार्धधातुकयोरेवेति नियमेन ह्रस्वादिगुणस्य लघूपधसंबन्धो निवर्तितः स्यात्; स चायुक्तः, अप्रकृतत्वात्; अत आह—अनन्तरस्येति; लक्ष्यसिद्ध्यर्थमिति भावः। अभ्युपगम्येति; एकस्यापि वाक्यस्य तात्पर्यसत्त्वेऽर्थद्वयपरत्वं "गङ्गायां मत्स्यघोषौ" इत्यादिवद्युक्तमिति भावः। तत्राप्यावृत्त्यैवार्थद्वयबोधकत्वं चेदाह—आवृत्त्येति। आदिना तन्त्रैकशेषग्रहः। व्याख्यानबीजमाह—एकस्मिन्निति। नियमद्वयेनापि निवृत्तिर्न संभवतीत्याह—लघूपधं चेति। नियमद्वयपक्षे स्वयं दोषान्तरमाह—बुद्ध्य इति। पुगन्तलघूपधस्य सार्वधातुकार्धधातुकयोरेवेति नियमेन घेर्ङिति गुणस्य 'अग्निचिते' इत्यादावप्रसङ्गेऽपि गुरूपधेऽनन्त्यप्रसङ्गो दुर्वार इत्यर्थः।

**भा.—एवं तर्हि नायं तच्छेषः, नापि तदपवादः। अन्यदेवेदं परिभाषान्तरमसंबद्धमनया परिभाषया। परिभाषान्तरमिति च मत्वा क्रोष्ट्रीयाः पठन्ति—"नियमादिको गुणवृद्धी भवतो विप्रतिषेधेन"। इति। यदि चायं तच्छेषः स्यात्, तेनैव तस्यायुक्तो विप्रतिषेधः। अथापि तदपवादः, उत्सर्गापवादयोरप्ययुक्तो विप्रतिषेधः। तत्र नियमस्यावकाशः "राज्ञः क च" राजकीयम्। "इको गुणवृद्धी" इत्यस्यावकाशः 'चयनं, चायकः, लवनं, लावकः' इति। इहोभयं प्राप्नोति 'मेद्यति, मार्ष्टि' इति। "इको गुणवृद्धी" इत्येतद्भवति विप्रतिषेधेन। नैष युक्तो विप्रतिषेधः। "विप्रतिषेधे परम्" इत्युच्यते। पूर्वश्चायं योगः, परो नियमः। इष्टवाची परशब्दः। विप्रतिषेधे परं यदिष्टं तद्भवतीति। एवमप्ययुक्तो विप्रतिषेधः। द्विकार्ययोगो हि विप्रतिषेधः। न चात्रैको द्विकार्ययुक्तः। नावश्यं द्विकार्ययोग एव विप्रतिषेधः। किं तर्हि? असंभवोऽपि। स चास्त्यत्रासंभवः। कोऽसावसंभवः? इह तावत् 'वृक्षेभ्यः, प्लक्षेभ्यः' इति; एकः स्थानी, द्वावादेशौ; न चास्ति संभवो यदेकस्य स्थानिनो द्वावादेशौ स्याताम्। इहेदानीं 'मेद्यति, मेद्यतः, मेद्यन्ति' इति; द्वौ स्थानिनौ, एक आदेशः; न चास्ति संभवो द्वयोः स्थानिनोरेक आदेशः स्यादित्येषोऽसंभवः। सत्येतस्मिन्नसंभवे युक्तो विप्रतिषेधः। एवमप्ययुक्तो विप्रतिषेधः। द्वयोर्हि सावकाशयोः समवस्थितयोर्विप्रतिषेधो भवति। अनवकाशश्चायं योगः। ननु च इदानीमेवास्यावकाशः प्रक्लृप्तः—**

**'चयनं, चायकः, लवनं, लावकः' इति। अत्रापि नियमः प्राप्नोति। नाप्राप्ते नियमेऽयं योग आरभ्यते। यावता च नाप्राप्ते नियमेऽयं योग आरभ्यते, ततस्तस्यापवादोऽयं योगो भवति। उत्सर्गापवादयोश्चायुक्तो विप्रतिषेधः। अथापि कथंचित् "इको गुणवृद्धी" इत्यस्यावकाशः स्यात्, एवमपि यथेह विप्रतिषेधादिको गुणो भवति 'मेद्यति, मेद्यतः, मेद्यन्ति' इति, एवमिहापि स्यात् 'अनेनिजुः, पर्यवेविषुः' इति।**

प्र.—एवं तर्हीति; परस्परानपेक्षयोः स्वस्वनिमित्तप्रयुक्तसंनिधानयोर्द्वयोः परिभाषयोः प्रदेशेषु स्वस्वकार्यप्रतिपादनम्। तत्र यदि कथंचिदेकविषये संनिपातो भवति, नैतावता परस्परापेक्षा भवतीत्यर्थः। अन्यदेवेति; अन्तरशब्दो विशेषवाचीत्यन्यान्तरशब्दयोरविरुद्धः प्रयोगः, अपर्यायत्वात्॥ चयनमिति; अलोऽन्त्यपरिभाषायाः प्रयोजनाभावात् अत्रानुपस्थानमित्याशयः। चायक इति; कथमिक्परिभाषात्रोपतिष्ठते, यावता 'अचः' इति स्थानी निर्दिष्टः॥ अत्राहुः—'अचः' इत्यस्याङ्गविशेषणतयोपयोगादचः स्थानित्वाभावाद् वृद्धिग्रहणेन लिङ्गेनेक्परिभाषात्राप्युपतिष्ठत एव'। मेद्यतीति; "इकः" इति वचनादिकारस्य प्राप्नोति, "अलोऽन्त्यस्य" इति वचनात् दकारस्य॥ नैष युक्त इति; इष्टासिद्धये इत्यर्थः। यथोद्देशपक्षे च परिभाषयोः पौर्वापर्यं, न तु कार्यकालतायाम्। द्विकार्ययोग इति; द्वाभ्यां कार्याभ्यां योगो यस्य स्थानिनः स विप्रतिषेधविषयत्वाद्विप्रतिषेधः। नावश्यमिति; द्विकार्ययोगत्वाभावे केवलोऽप्यसंभवो विप्रतिषेध इत्यर्थः। इह तावदिति; दीर्घत्वं यञ्यनन्तरे विधीयते; एत्वं च झल्यनन्तरे। न च संभवोऽस्ति, यद् द्वयोः स्वेन स्वेन निमित्तेनानन्तर्यं स्यात्। इहेदानीमिति; मिदेरित्येका षष्ठी; सा यद्यवयवसंबन्धे तदेकारस्य गुणेन भाव्यम्। अथ स्थानषष्ठी, तदा "अलोऽन्त्यस्य" इति वचनात् दकारस्य। न चास्ति संभवो युगपदुभयोर्गुणस्येत्यर्थः॥ एवमपीति; यदीदं नारभ्येत, गुणवृद्धी कस्य स्याताम्? अलोऽन्त्यस्येति चेत् "येन नाप्राप्ति" न्यायेन तदपवादत्वाद् विप्रतिषेधानुपपत्तिरित्यर्थः। एवं च क्रोष्ट्रीयमतमसंबद्धपरिभाषापक्षश्च नोपपद्यते॥

उ.—“सार्वधातुकार्धधातुकयोरङ्गस्य गुणः” इत्यत्र परिभाषाद्वयोपस्थितौ एकवाक्यतायाः आवश्यकत्वादसंबद्धतयेत्ययुक्तम्; अत आह—परस्परेति। स्थानषष्ठ्यलोऽन्त्यपरिभाषाया निमित्तम्; गुणवृद्धिग्रहणं चेक्परिभाषायाः। पौनरुक्त्यं निराह—अन्तरशब्द इति। शेषशेषिणोः परस्परापेक्षयैव प्रवृत्तेर्विप्रतिषेधो नास्तीति वक्तव्ये तयोरभेदमुपचर्य भाष्ये तेनैव तस्यायुक्तः इत्युक्तम्। भाष्ये अथापीति; एकत्र युगपत् प्राप्त्यभावात्, उत्सर्गप्रसङ्गस्थल एवापवादप्रवृत्तेश्चेति भावः। स्थानषष्ठीनिर्दिष्टान्तर्गतस्यान्त्यस्यानन्त्यस्य चात्र आदेशप्रसक्तौ अन्त्यस्यैव नानन्त्यस्येति नियमार्थत्वात् भाष्ये अलोऽन्त्यपरिभाषाया नियमस्येत्युक्तिः। नन्वङ्गस्येति स्थानषष्ठ्या लिङ्गेन नियमप्रवृत्तेरावश्यकत्वात् कथमयमिक्परिभाषाया अवकाशः? अत आह—अलोऽन्त्येति। नियमप्रयोजनस्यानन्त्यनिवृत्तेरङ्गेनेग्विशेषणेनापि लाभात् अलोऽन्त्यपरिभाषायाः “सार्वधातुकार्धधातुकयोः” इत्यत्रानुपस्थानमित्यर्थः। अच इत्यस्येति; अजन्तस्याङ्गस्य योऽवयव इक् तस्य ञ्णिति वृद्धिरिति सूत्रार्थ इत्यर्थः। यद्यपि ‘चायकः’ इत्यत्र “अचो ञ्णिति” इति वृद्धेरवकाश उक्तः, न तु मृजिवृद्धेः; तथा च ‘मार्ष्टि’ इत्यत्र विप्रतिषेधवचनं भाष्ये अयुक्तं, तथापि वृद्धिप्रकरणमेकमङ्गीकृत्य तथोक्तमित्यविरोधः। यद्यपि “मिदेः” इत्यस्यावयवषष्ठीत्वे इक एव प्राप्नोति; स्थानषष्ठीत्वे दकारस्यैवेत्युभयप्राप्तिर्न संभवति; तथापि षष्ठीश्रुतिमात्रेण परिभाषाद्वयोपस्थितौ किमनुसारेण षष्ठ्यर्थनिश्चय इति वीक्षायामिक्परिभाषानुसारेण तन्निश्चयः संभवतीत्याशयेनाह—इक इति वचनादिति; यद्यपि विरोधलक्षणो विप्रतिषेधः, स च युक्त एव; तथापि “विप्रतिषेधे परम्” इत्यनेन यत्रेष्टसिद्धिः स युक्तः; अपरस्त्वयुक्त इत्यभिप्रेत्याह—इष्टेति; भाष्योक्तं पौर्वापर्यं पाक्षिकमित्याह—यथेति। न त्विति; तथा च यौगपद्ये सति पौर्वापर्याभावात् सुतरामयुक्तो विप्रतिषेध इति भावः। द्विकार्य इति भाष्यसंगतये तदनुकूलं विग्रहमाह—द्वाभ्यामिति। भाष्ये असंभवोऽपीत्यपिना द्विकार्ययोगसमुच्चयशङ्कां वारयितुं केवलशब्दाध्याहारेण व्याचष्टे—द्विकार्येति; योगत्वाभावेऽपीत्यन्वयः। ननु “सुपि च” इत्यात्वमनन्त्यस्य, झल्येत्वमन्त्यस्य; वैपरीत्यं वा; तथा च कथमेकः स्थानी? अत आह—दीर्घत्वमिति। “तस्मिन्” इति सूत्रे निर्दिष्टग्रहणस्यानन्तर्यार्थकत्वादेकस्थानिकत्वमित्यर्थः। द्वयोः; आदेशयोः। “आद्गुणः” “वृद्धिरेचि” इत्यादौ द्वयोः स्थाने एक आदेशो दृष्टः; अत आह—मिदेरिति। अत्रापीत्ययुक्तम् प्रयोजनाभावेन नियमाप्रवृत्तेरुक्तत्वात्; अत आह—यदीति। अन्यदेवेत्यादिपर्यन्तेविषुरित्यन्तभाष्ये प्रतिपाद्यं निष्कर्षति—एवमिति। क्रोष्ट्रीयमतम्; नियमादिति विप्रतिषेधः। परिभाषान्त पक्षः; तदुपजीव्यः।

**भा.—एवं तर्हि ‘वृद्धिर्भवति, गुणो भवति’ इति यत्र ब्रूयात् ‘इकः’ इत्येतत् तत्रोपस्थितं द्रष्टव्यम्। किं कृतं भवति? द्वितीया षष्ठी प्रादुर्भाव्यते। तत्र कामचारः—गृह्यमाणेन वेकं विशेषयितुम्, इका वा गृह्यमाणम्। यावता कामचारः, इह**

तावत् मिदिमृजिपुगन्तलघूपधर्च्छिदृशिक्षिप्रक्षुद्रेषु गृह्यमाणेनेकं विशेषयिष्यामः —एतेषां य इगिति। इहेदानीं जुसिसार्वधातुकार्धधातुकह्रस्वाद्योर्गुणेष्विका गृह्यमाणं विशेषयिष्यामः एतेषां गुणो भवति 'इकः' इगन्तानामिति। अथवा सर्वत्रैवात्र स्थानी निर्दिश्यते। इह तावत् "मिदेः" इत्यविभक्तिको निर्देशः— मिद् एः मिदेरिति। अथवा षष्ठीसमासो भविष्यति—मिद इः मिदिः, मिदेरिति। 'पुगन्तलघूपधस्य' इति। नैवं विज्ञायते— पुगन्ताङ्गस्य लघूपधस्य चेति। कथं तर्हि? पुकि अन्तः पुगन्तः, लघ्वी उपधा लघूपधा; पुगन्तश्च लघूपधा च पुगन्तलघूपधं, पुगन्तलघूपधस्येति। अवश्यं चैतदेवं विज्ञेयम्; अङ्गविशेषणे * सतीह प्रसज्येत 'भिनत्ति, छिनत्ति' इति। ऋच्छेरपि प्रश्लिष्टनिर्देशोऽयम्—ऋच्छति ऋ ॠ ऋताम्, ऋच्छत्यॄतामिति।

दृशेरपि योगविभागः करिष्यते—"उरङि गुणः"। उः अङि गुणो भवति। ततो "दृशेः"। दृशेश्चाङि गुणो भवति। उरित्येव। क्षिप्रक्षुद्रयोरपि "यणादिपरं गुणः" इतीयता सिद्धम्। सोऽयमेवं सिद्धे सति यत् पूर्वग्रहणं करोति तस्यैतत् प्रयोजनम्—इको यथा स्यात्, अनिको मा भूदिति।

प्र॰—एवं तर्हीति; प्रदेशार्थत्वादनयोः परिभाषयोर्गुणत्वात् परस्परेण संबन्धाभावात् प्रदेशवाक्यपर्यालोचनया वाक्यार्थस्यावस्थानमित्यर्थः। अथवेति; तच्छेषपक्षोक्तदोषपरिहारः। क्षिप्रक्षुद्रयोरपीति; अत्र च योगविभागः क्रियते। 'स्थूलादीनां यणादिपरं लुप्यते'। ततः 'पूर्वस्य च गुणः' इति। अत्र च स्वरितत्वात् क्षिप्रक्षुद्रशब्दावेवानुवर्तेते, स्थूलादयो निवृत्ताः; तेषां तु यणादिलोपे सति "ओर्गुणः" इति गुणो भवतीति। "असिद्धवदत्राभात्" इत्यसिद्धत्वमनित्यत्वान्न भवति। तत्र क्षिप्रक्षुद्रयोर्यण आदिः पकारो दकारश्च; तस्माद्यणादेः परं लुप्यते, तस्मादेव च यणादेः पूर्वस्य गुण इति सिद्धं 'क्षेपिष्ठः, क्षोदिष्ठः' इति। यणादिपरमिति; पञ्चमीसमासः। यदि तर्हि "पुगन्तलघूपधस्य" इति स्थानी निर्दिश्यते, तच्छेषपक्षाश्रयणाच्चात्रैकपरिभाषा नोपतिष्ठते —तदा तस्य गुण

* हि सतीह इति अ॰ पाठः।

स्यानिग्लक्षणत्वात् 'भिन्नं, छिन्नम्' इत्यादौ "क्ङिति च" इति गुण-निषेधो न प्राप्नोति, यथा 'लैङ्गवायनः' इति ॥ नैष दोषः। क्नुसनोः कित्त्वविधानात् ज्ञापकादनिग्लक्षणत्वेऽपि लघूपधगुणस्य प्रतिषेधो भविष्यति।

उ.—तच्छेषपक्षं दूषयति—प्रदेशेति। प्रदेशः विधिः। संबन्धाभावात्; शेषशेषित्वेनेत्यादिः। "गुणानां च परार्थत्वादसंबन्धः समत्वात् स्यात्" इति न्यायादिति भावः। अथवेति समाधानं कस्मिन् पक्षे? अत आह—तच्छेषेति; अभ्युपेत्यवादेनेति भावः। भाष्ये—अङ्गविशेषणे हि सतीति; लघूपधस्याङ्गस्यावयवो य इक् तस्य गुण इत्युच्यमाने 'भिनत्ति' इत्यत्रापि स्यात्। नित्यत्वात् गुणात् पूर्वं श्नमा भाव्यम्; तस्मिन् सत्युपधात्वाभावात् गुणाप्रसङ्गः। क्ङितीति च निमित्तसप्तमी; तेन श्नमः पूर्वस्य गुणप्रसङ्गादिति ज्ञेयम्। ननु यण आदिर्यणादिः, ततः परं लुप्यते, ततः पूर्वस्य च गुण इत्युक्ते क्षिप्रक्षुद्रयोरिष्टसिद्धिः; स्थूलादेर्यणादेरुवर्णात् पूर्वथकारादेर्गुणः प्राप्नोति। यण् आदिर्यस्य यणादिः, तच्च तत्परं च लुप्यते, ततः पूर्वस्य गुण इत्युक्ते स्थूलादौ सिद्ध-मिष्टम्; क्षिप्रक्षुद्रयोः पकारदकारयोर्गुणप्रसङ्गः, अत आह—अत्र चेति। यणादिपरमिति; यण आदिर्यणादिः, तस्मात् परमिति विग्रहं वक्ष्यति। नन्वाभीयमाभीयेऽसिद्धमिति यणा-दिलोपस्यासिद्धत्वात् 'ओर्गुणः' न भवतीत्यत आह—असिद्धवदिति। अनित्यत्वादिति; "श्नसोरल्लोपः" इति तपरकरणमनित्यत्वे ज्ञापकम्। आभीयासिद्धत्वस्य नित्यत्वे अल्लोप इति तपरकरणं व्यर्थम्, 'आस्ताम्' इत्यादौ धात्ववयवागमाकारस्याभीयस्यासिद्धतया लोपाप्रसक्त्या तन्निवृत्त्यर्थत्वासंभवात्। कृतं च तदाभीयासिद्धत्वस्यानित्यत्वं ज्ञापयति। तत्र; क्षिप्रक्षुद्रयोरेवानुवर्तने सति। कर्मधारयसमासे पकारदकारयोरपि लोपः स्यात्। अत आह—पञ्चमीसमास इति। बहुलग्रहणादिति भावः। स्थानिनिर्देशपक्षे अनिष्टं शङ्कते—यदि तर्हीति। निर्दिष्टस्थानिकत्वमेको हेतुः। हेत्वन्तरमाह—तच्छेषेति। यत्राङ्गान्त्य इक् तत्रैवेक्परिभाषोपतिष्ठते तच्छेषपक्षे, न त्वनन्त्येक्स्थलेऽपीत्यर्थः। ततः किं तत्राह—तदेति। न चेग्व्यतिरिक्तलघूपधाया गुणनिवृत्तये इक्परिभाषोपतिष्ठत इति वाच्यम्, अनिग्लघूपधा ह्यकारः, तस्य गुणे सत्यसति वा नास्ति विशेष इति भावः। न च निर्दिष्टस्थानिकत्वेऽपि गुणस्येग्लक्षणत्वे निषेधसिद्धिः प्रयोजनमस्तीतीक्परिभाषोपतिष्ठत इति वाच्यम्, अस्य निवृत्त्यर्थं यत्र परिभाषोपस्थितिस्तत्रैव निषेधः। निषेधार्थमेव परिभाषाप्रवृत्त्यङ्गीकारे ओर्गुणस्यापि निषेधप्रसङ्ग इत्याशयेनाह—यथा लैङ्गवायन इति; लिगुशब्दान् नडादिफकि ओर्गुणो न स्यात्। प्रयोजनाभावेन क्नोः ककारस्येत्संज्ञा मास्त्विति मन्वानं प्रति सन्ग्रहणम्। "रुदविद" इति "हलन्ताच्च" इति सनः कित्त्वविधानम्। ककारस्येत्संज्ञाविधानेन क्नोः कित्त्वं लभ्यत इति तत्रापि कित्त्वविधानमित्युक्तम्।

**भा.—अथ वृद्धिग्रहणं किमर्थम्? किं विशेषेण वृद्धि-ग्रहणं चोद्यते; न पुनर्गुणग्रहणमपि? यदि किंचित् गुण-ग्रहणस्य प्रयोजनमस्ति, वृद्धिग्रहणस्यापि तद्भवितुमर्हति। को**

वा विशेषः ? अयमस्ति विशेषः—गुणविधौ न क्वचित् स्थानी निर्दिश्यते। तत्रावश्यं स्थानिनिर्देशार्थं गुणग्रहणं कर्तव्यम्। वृद्धिविधौ पुनः सर्वत्रैव स्थानी निर्दिश्यते—"अचो ञ्णिति" "अत उपधायाः" "तद्धितेष्वचामादेः" इति। अत उतरं पठति

वा.—वृद्धिग्रहणमुत्तरार्थम्।

भा.—वृद्धिग्रहणं क्रियते। किमर्थम्? उत्तरार्थम्। "क्ङिति" इति प्रतिषेधं वक्ष्यति; स वृद्धेरपि यथा स्यात्। कश्चेदानीं क्ङित्प्रत्ययेषु वृद्धेः प्रसङ्गः, यावता "ञ्णिति" इत्युच्यते?

वा.—तच्च मृज्यर्थम्।

भा.—मृजेर्वृद्धिरविशेषेणोच्यते। सा क्ङिति मा भूत्—'मृष्टः, मृष्टवान्' इति।

वा.— इहार्थं चापि।

भा.—इहार्थं चापि मृज्यर्थं वृद्धिग्रहणं कर्तव्यम्। मृजेर्वृद्धिरविशेषेणोच्यते। सेको यथा स्यात्; अनिको मा भूदिति।

वा.—मृज्यर्थमिति चेद्योगविभागात् सिद्धम्।

भा.—मृज्यर्थमिति चेत् योगविभागः करिष्यते। "मृजेर्वृद्धिरचः"। ततः "ञ्णिति"। ञिति णिति च वृद्धिर्भवति 'अचः' इत्येव। यद्यचो वृद्धिरुच्यते—'न्यमार्ट्' अटोऽपि वृद्धिः प्राप्नोति।

वा.—अटि चोक्तम्।

भा.—किमुक्तम्? "अनन्त्यविकारेऽन्त्यसदेशस्य कार्यं भवति" इति।

वा.—वृद्धिप्रतिषेधानुपपत्तिस्त्विक्प्रकरणात्।

भा.—वृद्धेस्तु प्रतिषेधो नोपपद्यते। किं कारणम्? इक्प्रकरणात्। इग्लक्षणयोर्गुणवृद्ध्योः प्रतिषेधः। न चैवं सति मृजेरिग्लक्षणा वृद्धिर्भवति। तस्मान्मृजेरिग्लक्षणा वृद्धिरेषितव्या।

प्र.—गुणविधाविति; क्वचिन्न निर्दिश्यत इति नञो व्यवहितेन संबन्धः। क्वचित् निर्दिश्यत एव "ओर्गुणः" इत्यादौ॥ मृजेर्वृद्धिरिति; तत्र हि सूत्रेऽभिमतस्थान्यनुपादानात् अलोऽन्त्यपरिभाषया अन्त्यस्यैव स्यादित्यर्थः। अटोऽपीति; नन्वडागमात् पूर्वमेव परत्वाद्वृद्धिर्भविष्यति। लक्षणस्य प्रवृत्तत्वादटि कृते पुनर्लक्षणं न प्रवर्तिष्यते॥ एवं तर्हि विप्रतिषेधानपेक्षयैवात्र चोद्यपरिहारावुक्तौ॥

उ.—यथाश्रुते स्थानी क्वापि न निर्दिश्यत इति प्रतीयते; तत्र दोषं वक्ष्यन् व्यवहितान्वयमाह—क्वचिदिति। भाष्ये कश्चेति; यद्यपि कर्मेणिङस्ति, तथाऽपि सा नेग्लक्षणेति "क्ङिति च" इति निषेधाप्रसङ्ग इति भावः। भाष्ये अविशेषेणेत्यस्यप्रत्ययविशेषमनुपादायेत्यर्थः। स एवाग्रेऽपि चेत् तदभिधानं व्यर्थमित्याशङ्क्याविशेषेणेत्यस्य स्थानिविशेषानुपादानेनेत्यर्थमाह—अभिमतेति। भाष्ये न्यमार्ट्; मृजेर्लङ्। शपो लुक्। वृद्धिः। "इतश्च" इतीकारलोपे हल्ङ्यादिलोपः। "रात् सस्य" इति नियमात् न संयोगान्तलोपः। व्रश्चेति षत्वम्। जश्त्वचर्त्वे। अटो वृद्ध्यप्रसङ्गं शङ्कते—नन्विति। पुनरिति; प्रतिलक्ष्यं सकृदेव लक्षणं प्रवर्तते; न तु पौनःपुन्येनेत्यर्थः। अनपेक्षयेति; तदनपेक्ष्यापि परिहारो वक्तुं शक्यत इत्यभिप्रायेणेत्यर्थः।

**भा. एवं तर्हि इहान्ये वैयाकरणा मृजेरजादौ संक्रमे विभाषावृद्धिमारभन्ते 'परिमृजन्ति परिमार्जन्ति, परिमृजन्तु परिमार्जन्तु, परिममृजतुः परिममार्जतुः' इत्याद्यर्थम्। तदिहापि साध्यम्। तस्मिन् साध्ये योगविभागः करिष्यते - "मृजेर्वृद्धिरचो" भवति। ततः—"अचि क्ङिति"; अजादौ च क्ङिति मृजेर्वृद्धिर्भवति। 'परिमार्जन्ति, परिमार्जन्तु, परिममार्जतुः'। किमर्थमिदम्? नियमार्थम्—अजादावेव क्ङिति, नान्यत्र। क्वान्यत्र मा भूत्? 'मृष्टः, मृष्टवान्' इति। ततो "वा"; वाचि क्ङिति मृजेर्वृद्धिर्भवति। 'परिमृजन्ति, परिमार्जन्ति, परिममृजतुः, परिममार्जतुः' इति। इहार्थमेव तर्हि सिजर्थं वृद्धिग्रहणं कर्तव्यम्। सिचि वृद्धिरविशेषेणोच्यते। सेको यथा स्यात्, अनिको मा भूदिति। कस्य पुनरनिकः प्राप्नोति? अकारस्य 'अचिकीर्षीत्, अजिहीर्षीत्'। नैतदस्ति। लोपोऽत्र बाधको भविष्यति। आकारस्य तर्हि प्राप्नोति 'अयासीत्, अवासीत्'। नास्त्यत्र विशेषः सत्यां**

वृद्धावसत्यां वा। सन्ध्यक्षरस्य तर्हि प्राप्नोति। नैव सन्ध्यक्षरमन्त्यमस्ति। ननु चेदमस्ति ढलोपे कृते 'उद्वोढाम्, उद्वोढम्, उद्वोढ' इति। नैतदस्ति। असिद्धो ढलोपः। तस्यासिद्धत्वान्नैतदन्त्यं भवति। व्यञ्जनस्य तर्हि प्राप्नोति 'अभैत्सीत्, अच्छैत्सीत्'। हलन्तलक्षणा वृद्धिर्बाधिका भविष्यति। यत्र तर्हि सा प्रतिषिध्यते "नेटि" इति; 'अकोषीत् अमोषीत्'। सिचि वृद्धेरप्येष प्रतिषेधः। कथम्? लक्षणं हि नाम ध्वनति, भ्रमति, मुहूर्तमपि नावतिष्ठते। अथवा "सिचि वृद्धिः परस्मैपदेषु" इति सिचि वृद्धिः प्राप्नोति। तस्या हलन्तलक्षणा वृद्धिर्बाधिका। तस्या अपि "नेटि" इति प्रतिषेधः। अस्ति पुनः क्वचिदन्यत्रापि अपवादे प्रतिषिद्धे उत्सर्गोऽपि न भवति?। अस्तीत्याह। 'सुजाते अश्वसूनृते, अध्वर्यो अद्रिभिः सुतम्, शुक्रं ते अन्यत्' इति। *पूर्वरूपे प्रतिषिद्धे अयादयोऽपि न भवन्ति। उत्तरार्थमेव तर्हि सिजर्थे वृद्धिग्रहणं कर्तव्यम्। सिचि वृद्धिरविशेषेणोच्यते; सा क्ङिति मा भूत्। 'न्यनुवीत्, न्यधुवीत्'। नैतदस्ति प्रयोजनम्। अन्तरङ्गत्वादत्रोवङादेशे कृते अनन्त्यत्वाद्वृद्धिर्न भविष्यति।

प्र.—आचिकीर्षीदिति; पूर्वविप्रतिषेधात् अतो लोपः, यथा चिकीर्षक इत्यादौ। अयासीदिति; परत्वादत्र सागिटोः कृतयोरनन्त्यत्वादाकारस्य नास्ति वृद्धिप्रसङ्ग इति यद्यपि परिहारोऽस्ति, तथापि विशेषाभावेन परिहृतत्वान्नायमाश्रितः। उदवोढामिति: ढलोपादीनामसिद्धत्वात् पूर्वं हलन्तलक्षणा वृद्धिः; ततो ढलोपादिषु कृतेषु ढलोपस्यासिद्धत्वादोकारस्य न भविष्यति। गोशब्दादाचारक्विपि कृते अगवीदिति सन्ध्यक्षरमन्त्यमस्ति; तस्य कस्माद्वृद्धिर्न भवति? उच्यते—"सिचि वृद्धिः" इत्यत्र धातुग्रहणम् "ऋत इद्धातोः" इत्यत औपदेशिकधातुग्रहणार्थमनुवर्तत इत्यदोषः॥ लक्षणं हीति; "नेटि" इति लक्षणमविशेषेण वृद्धिमात्रस्य निषेधं कथयतीति ध्वनतीत्युच्यते। यो ह्यव्यक्तं कथयति स ध्वनतीत्युच्यते। एवमिहाप्यस्या एव वृद्धेर्निषेध इति नास्ति व्यक्तिः।

* परपूर्वत्वे इत्यन्नंभट्टसंमतः पाठः।

स्यादेतत्—प्रतिषेधस्यैकनिषेध्ये चरितार्थत्वात पुनः प्रतिषेध्यान्तरे प्रवृत्तिर्न स्यादित्याह—भ्रमतीति; सर्वत्र व्याप्रियत इत्यर्थः। स्यादेतत्—यावदेकनिषेध्येऽस्य व्यापारस्तावदेव द्वितीयो विधिः प्रवृत्तः, प्रवृत्तस्य च निषेधोऽशक्यः कर्तुमित्याह—मुहूर्तमिति; उभयत्रापि व्यापारान्नैकत्र विश्राम्यतीत्यर्थः॥ तस्या अपीति; अपिशब्दात् सिचि वृद्धेरपि॥ अस्तीत्याहेति; "नान्तःपादमव्यपरे" इति पाठमाश्रित्यैतदुक्तम्। यद्यत्र 'वृक्षौ' इत्यत्र "नादिचि" इत्यनेन पूर्वसवर्णदीर्घवत् वृद्धेरपि निषेधप्रसङ्गः। नैष दोषः; "सङ्घोढौ" इत्यादेर्ज्ञापकादनन्तरस्यैव "नादिचि" इति निषेधात्॥ अन्तरङ्गत्वादिति; उवङादेशः सिचमेवापेक्षते; वृद्धिस्तु सिच्परस्मैपदे॥

उ.—भाष्ये सङ्क्रमो नाम गुणवृद्धिप्रतिषेधविषयः [क्ङित्]। भाष्ये सिचिवृद्धिरविशेषेण; स्थानिविशेषानाश्रयणेन। अचिकीर्षीदिति; कृञ् सन् "अज्झनगमां सनि" इति दीर्घः। "ऋत इद्धातोः"। रपरत्वम्; "हलि च" इति दीर्घः। द्वित्वे, अभ्यासकार्ये च कृते चिकीर्ष इति स्थिते, लुङ्। च्लेः सिच्। इतो लोपः। "अस्तिसिचः" इतीटि कृते, अतो लोपः। "इट ईटि" इति सिज्लोपः। सवर्णदीर्घः। एवं हृञः अजिहीर्षीत्। ननु परत्वाद्वृद्धिः स्यात्; अत आह—पूर्वविप्रतिषेधादिति; "ण्यल्लोपौ" इत्यनेन। पूर्वविप्रतिषेधस्यावश्यकतामाह—यथेति; अन्यथा परत्वाद्वृद्धौ सत्यां चिकीर्षायक इत्यनिष्टरूपं स्यादिति भावः। नात्यत्र विशेष इति भाष्यमभ्युपेत्यवादेनेत्याह—परत्वादिति। भाष्ये नैव सन्ध्यक्षरमिति; अनैमित्तिकतया प्रथमात्वेन भाव्यमिति वृद्धिविधानकाले सन्ध्यक्षरमन्त्यं नास्तीत्यर्थः। एतदजानानः शङ्कते भाष्ये—नन्विति। उदवोढानिति; उत्पूर्वाद्वहतेर्लुङ्। तसस्ताम्। "वदव्रज" इति वृद्धिः। "सहिवहोः" इत्योत्वम्। "झलो झलि" इति सिचो लोपः। धत्वढत्वष्टुत्वढलोपाः। एवमुदवोढमिति। यद्यपि लक्षणस्य प्रवृत्तत्वादोत्वे कृते पुनर्लक्षणं न प्रवर्तेत इति समाधानमस्ति, तथापि भाष्यकृता समाधानान्तरमुक्तमित्याशयेनाह—ढलोपादीनामिति। नामधातोर्वृद्धिविधानकाले अन्त्यं सन्ध्यक्षरमस्तीति शङ्कते—गोशब्दादिति। "सर्वप्रातिपदिकेभ्यः क्विब् वाचारे" इत्यनेन विहित इत्यर्थः। औपदेशिकेति; सिचीत्यनेनाक्षिप्तेऽपि धातौ पुनर्धातुग्रहणेन धातुरेव यो धातुरिति विज्ञानाद्धातुपाठस्थधातोरेव सिचि वृद्धिः, न नामधातोरित्यर्थः। भाष्ये यत्र तर्हीति; "नेटि" इत्यनेन। क्रियालाघवयापुनरुक्तं लक्षणेन संभावितमर्थमाह—नेटीतीति। इत्याह; इति शङ्कायामाह। एवमग्रेऽपि। हलन्तलक्षणवृद्धिप्रतिषेधद्वारा सिचि वृद्धेरपि "नेटि" इति प्रतिषेधान्निवृत्तिरपिशब्दात् सूच्यत इत्याह—अपिशब्दादिति। ननु प्रकृत्या स्वभावेनाविकृतरूपेण अवतिष्ठत इत्युक्त्या साक्षादेवोत्सर्गा-

पवादयोर्निवृत्तिः; न तूत्सर्गस्यापवादेन बाधितत्वात्; इत्यत आह—नान्तः पादमिति; अयादौ प्राप्ते "एङः पदान्तादति" इति तदपवादस्य पूर्वरूपस्य "नान्तः पादम्" इति निषेधे अयादेरपि न प्राप्तिरिति भाष्यार्थः। भाष्ये परपूर्वत्वे। परस्य पूर्वरूपत्वे। अपवाद-निषेधेनोत्सर्गस्याप्रवृत्तावनिष्टं शङ्कते—यदीति। वृद्धेरपीति; पूर्वसवर्णदीर्घनिषेधद्वारेत्यर्थः। सङ्घोद्घाविति; आदिना "आद्यन्तौ" "भ्रातृपुत्रौ" "हेमन्तशिशिरौ" इत्यादि संग्रहः। अनन्तरस्येति; पूर्वसवर्णदीर्घस्यैव प्रतिषेधः, न तु तद्द्वारा वृद्धेरपीत्यर्थः। भाष्ये न्यनुवीत्; णु स्तवने, धू विधूनने। कुटादी। उवङि सति हलन्तलक्षणा वृद्धिर्न भवति, "नेटि" इति निषेधादिति भावः। सिजपेक्षाया उभयत्र तुल्यत्वात् कथमन्तरङ्गत्वम्? अत आह—उवङ्ङादेश इति; अल्पापेक्षमन्तरङ्गम्; बह्वपेक्षं बहिरङ्गम्।

भा.—यदि तर्हि सिच्यन्तरङ्गं भवति 'अकार्षीत्, अहार्षीत्' गुणे कृते रपरत्वे चानन्त्यत्वाद्वृद्धिर्न प्राप्नोति। मा भूदेवम्। "हलन्तस्य" इत्येवं भविष्यति। इह तर्हि 'न्यस्तारीत्, न्यदारीत्' गुणे कृते रपरत्वे चानन्त्यत्वाद्वृद्धिर्न प्राप्नोति। हलन्तलक्षणा-याश्च "नेटि" इति प्रतिषेधः। मा भूदेवम्। "ल्रान्तस्य" इत्येवं भविष्यति। इह तर्हि 'अलावीत्, अयावीत्' गुणे कृते अवादेशे चानन्त्यत्वाद्वृद्धिर्न प्राप्नोति। हलन्तलक्षणायाश्च "नेटि" इति प्रतिषेधः। मा भूदेवम्। "ल्रान्तस्य" इत्येवं भविष्यति। "ल्रान्तस्य" इत्युच्यते, न चेदं ल्रान्तम्। "ल्रान्तस्य" इत्यत्र वकारोऽपि निर्दिश्यते। किं वकारो न श्रूयते?। लुप्तनिर्दिष्टो वकारः। यद्येवं 'मा भवानवीत्, मा भवान् मवीत्' अत्रापि प्राप्नोति। 'अविमव्योर्न' इति वक्ष्यामि। तद्वक्त-व्यम्। न वक्तव्यम्। णिश्विभ्यां तौ निमातव्यौ। यद्यप्ये-तेदुच्यते। अथ वैतर्हि णिश्व्योः प्रतिषेधो न वक्तव्यो भवति। गुणे कृते अयादेशे च यान्तानां नेत्येव प्रतिषेधो भविष्यति। एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति 'न सिच्यन्तरङ्गं भवति' इति; यदयम् "अतो हलादेर्लघोः" इत्यकारग्रहणं करोति। कथं कृत्वा ज्ञापकम्? अकारग्रहणस्यैतत् प्रयोजनम्-- इह मा भूत् 'अकोषीत्, अमोषीत्'। यदि सिच्यन्तरङ्गं स्याद्, अकारग्रहणमनर्थकं स्याद्। गुणे कृते अलघुत्वाद्वृद्धिर्न भविष्यति।

पश्यति त्वाचार्यो 'न सिच्यन्तरङ्गं भवति' इति। ततोऽकारग्रहणं करोति। नैतदस्ति ज्ञापकम्। अस्त्यन्यदेतस्य वचने प्रयोजनम्। किम्?। यत्र गुणः प्रतिषिध्यते तदर्थमेतत्स्यात् 'न्यकुटीत्, न्यपुटीत्'। यत्तर्हि णिश्व्योः प्रतिषेधं शास्ति, तेन 'नेहान्तरङ्गमस्ति' इति दर्शयति। यच्च करोत्यकारग्रहणं "लघोः" इति कृतेऽपि।

वा—तस्मादिग्लक्षणा वृद्धिः।

भा. - तस्मादिग्लक्षणा वृद्धिरास्थेया।

प्र·— लुप्तनिर्दिष्ट इति; "लोपो व्योर्वलि" इति भावः। किमत्र प्रमाणमितिचेत् अभियुक्तस्मरणमेव। णिश्विभ्यामिति; णिश्विग्रहणमकृत्वा अविमवी प्रतिषेधार्थं वक्तव्यौ॥ एवं सति गौरवाभावः। निमातव्याविति; मेङो रूपम्; परिवर्तनीयावित्यर्थः॥ "न सिचि" इति न्यायादप्येतत् सिध्यति, येन नाप्राप्तिन्यायेनान्तरङ्गस्य वृद्ध्या बाधनात्। प्रयोजनं च चिरिजिर्योर्यङ्लुगन्तानां च नयत्यादीनाम् 'अचिरायीत्, अजिरायीत्, अनेनायीद्, अचेचायीत्' इत्यादौ सिचि वृद्धिः। अन्यथा गुणायादेशयोः कृतयोर्यान्तत्वात् वृद्धिप्रतिषेधः स्यात्॥

उ.—भाष्ये अन्तरङ्गं भवतीति; बहिरङ्गात् पूर्वमित्यादिः। भाष्ये अकार्षिदिति; आर्धधातुकापेक्षो गुणोऽन्तरङ्गः। सिच्परस्मैपदापेक्षा वृद्धिरिति तस्या बहिरङ्गता। लृान्तस्येति भविष्यत्येवेति; भाष्ये "अतो लृान्तस्य" इत्येव भविष्यतीत्यन्वयः। भाष्ये लुप्तनिर्दिष्टः; निर्दिष्टः सन् लुप्तः। केन लुप्तः? अत आह—लोप इति; एवं वदता लकारात् पूर्वं वकारनिर्देश इत्युक्तं भवति। अत्र वकारनिर्देशे भगवद्वचनमेव प्रमाणमित्याह—किमत्रेति। भाष्ये—मा भवानिति; आटि सति वृद्धौ सत्यामसत्यां वा न विशेष इति माङ्प्रयोगः। माङाकारधात्वकारयोरेकादेशे पुनरप्यविशेष इति भवानित्युक्तम्। प्रयोजनाभावेऽप्यैकरूप्याय मा भवान्मवीदित्युक्तम्। नन्वधिकप्रवेशे सूत्रगौरवं स्यात्; अत आह—णिश्वि ग्रहणमिति। उद्भाष्यत्वशङ्कां निराह—मेङो रूपमिति। परिवर्तनम्; तत्त्यागेनैतत्प्रक्षेपः। भाष्ये यदित्यादिना तद्वक्तव्यमित्युक्तशङ्कोत्तरयोर्विवरणम्। यद्यपि; यदि। एतत्; अविमव्योः प्रक्षेप इत्येतत्। भाष्ये अथ वैतर्हि; एवमपि। भाष्ये—न वक्तव्यो भवति; तथा च न गौरवमिति भावः। भाष्ये अयादेशे चेति; गुणवदयादेशोऽप्यन्तरङ्ग एवेत्यर्थः। णिश्विस्थाने अविमविनिमानवादिनं प्रति णिश्विप्रतिषेधज्ञापकाभिधानमयुक्तम्; अत आह—

न्यायादिति। एतत्; गुणं बाधित्वा वृद्धिरेव भवतीत्येतत्। अन्तरङ्गस्य; अन्तरङ्गस्यापि गुणायादेशस्य। ननु 'न्यनुवीत' इत्यादौ अन्तरङ्गोवङा वृद्धिबाधेनैवेष्टसिद्धौ वृद्ध्यान्तरङ्गबाधनङ्गीकृत्य तस्येग्लक्षणत्वेन "क्ङिति च" इति प्रतिषेधात् न्यनुवीदित्यादिकल्पने गौरवमात्रमेव; न तु किंचित् प्रयोजनम्; अत आह—प्रयोजनं चेति। चिरिजिरी हिंसार्थौ इकारान्तौ स्वादी। णीञ् प्रापणे, चिञ् चयने, यङ्लुकि सिचिवृद्धिः। अकारग्रहणनपि ज्ञापकमेवेत्याह—भाष्ये—यच्च करोतीति। "न्यकुटीत्" इत्यादावन्तरङ्गगुणेन वृद्धौ बाधितायां गुणस्यापि बाधे वृद्धिः पुनर्न प्रवर्तते "देवदत्तस्य हन्तरि" इति न्यायात्। तथाच तत्र वृद्ध्यभावाय अत इति न वक्तव्यम्। कृतं तु सिच्यन्तरङ्गाभावं ज्ञापयति। तथाच गुणात् प्राक् वृद्धिप्रसङ्गे तन्निरासाय अत इति सार्थकमिति भावः। एवं ज्ञापकेन सिच्यन्तरङ्गाभावे स्थिते न्यनुवीदित्यादावुवङः प्रागेव प्राप्ताया वृद्धेर्निषेधायेग्लक्षणा सिचिवृद्धिरास्थेयेत्युपसंहरति भाष्ये—तस्मादिति।

**वा.—षष्ठ्याः स्थानेयोगत्वादिग्निवृत्तिः।**

**भा—षष्ठ्याः स्थानेयोगत्वात् सर्वेषामिकां निवृत्तिः प्राप्नोति। अस्यापि प्राप्नोति 'दधि, मधु'। पुनर्वचनमिदानीं किमर्थं स्यात्?**

**वा.—अन्यतरार्थं पुनर्वचनम्।**

**भा.—अन्यतरार्थमेतत् स्यात् 'सार्वधातुकार्धधातुकयोर्गुण एव' इति।**

**वा.—प्रसारणे च।**

**भा. प्रसारणे च सर्वेषां यणां निवृत्तिः प्रप्नोति। अस्यापि प्राप्नोति 'याता, वाता'। पुनर्वचनमिदानीं किमर्थं स्यात्?।**

**वा.—विषयार्थं पुनर्वचनम्।**

**भा.—विषयार्थमेतत् स्यात् "वचिस्वपियजादीनां कित्येव" इति।**

**वा.—उरण्रपरे च।**

**भा.—उरण्रपरे च सर्वेषामृकाराणां निवृत्तिः प्राप्नोति। अस्यापि प्राप्नोति 'कर्तृ, हर्तृ'।**

**वा.—सिद्धं तु षष्ठ्यधिकारे वचनात्।**

**भा.—सिद्धमेतत्। कथम्? षष्ठ्यधिकारे इमे योगाः कर्तव्याः। एकस्तावत् क्रियते तत्रैव। इमावपि योगौ षष्ठ्यधिकारमनुवर्तिष्येते। अथवा षष्ठ्यधिकारे इमौ योगावपेक्षिष्यामहे। अथवेदं तावदयं प्रष्टव्यः—"सार्वधातुकार्धधातुकयोर्गुणो**

**भवति" इतीह कस्मान्न भवति 'याता वाता'?। इदं तत्रापेक्षिष्यते —"इको गुणवृद्धी" इति। यथैव तर्हीदं तत्रापेक्षिष्यते, एवमिहापि तदपेक्षिष्यामहे "सार्वधातुकार्धधातुकयोः" इति।**

**॥ इको गुणवृद्धी ॥**

**इति श्रीमद्भगवत्पतञ्जलिविरचिते महाभाष्ये प्रथमस्याध्यायस्य प्रथमे पादे तृतीयमाह्निकम्।**

प्र.—षष्ठ्या इति; *स्वतन्त्रमिदं गुणवृद्ध्योर्विधायकमिति पूर्वः पक्षः। अन्यतरार्थमिति; नन्वनिकोऽपि यथा स्यादिति विध्यर्थं स्यात्, न तु नियमार्थम्, नियमाद्विधेर्बलीयस्त्वात्॥ एवं मन्यते—द्वितीयं गुणवृद्धिग्रहणमनुवर्तते। तेन गुणवृद्धिप्रदेशेषु 'इक' इत्यस्योपस्थानान्नास्त्यनिकः प्रसङ्गः॥ प्रसारणे चेति; तुल्यन्यायत्वादुपन्यासः। "इग्यणः" इत्यत्र यण इति स्थानषष्ठी। तेन यणः स्थाने इग्भवति; स च संप्रसारणसंज्ञ इति वाक्यार्थः स्यात्। वाक्यभेदेन च कार्यद्वयं विधीयते॥ कर्तृ हर्तृ इति; अन्तरतमस्याभावात् सर्वेऽप्यणः पर्यायेण प्राप्नुवन्ति॥ सिद्धमिति; स्वातन्त्र्यमेषां निवर्तयति। तेन यत्र षष्ठी तत्रैषामुपस्थानम् "अङ्गस्य" "वच्यादीनाम्" "ॠत इद्धातोः" इत्यादौ। इमावपीति; स्वरितत्वादनयोरन्तरालवर्तिभिश्चायोग्यत्वात् संबन्धाभावः॥ अथवेति; "षष्ठी स्थानेयोगा" इत्यत्र योगविभागः करिष्यते—"षष्ठी"; यदेतदनुक्रान्तं तद्यत्र षष्ठी तत्रोपतिष्ठत इत्यर्थः। तत्र योग्यत्वादनयोरेवापेक्षा; नान्येषाम्। ततः—"स्थानेयोगा" इति, षष्ठीत्येतदुपतिष्ठते॥ अथवेति; अन्यतरार्थं पुनरितिवदता अवश्यमेवं संबन्धः कर्तव्यः—'यत्र गुणवृद्धिशब्दोच्चारणेन गुणवृद्धी विधीयेते तत्रेक इति उपतिष्ठते' इति। अन्यथा 'याता, वाता' इत्यादिषु विद्ध्यर्थत्वे संभवति कथमन्यतरार्थं पुनर्वचनं स्यादित्युच्यते। अवश्यकर्तव्यायां चापेक्षायामेकवाक्यतयैवापेक्षास्तु। तेनैकरूप एवार्थः; न तु वाक्यभेदेन स्वातन्त्र्यं पारतन्त्र्यं च॥ तदपेक्षिष्यामहे इति; अस्य स्वातन्त्र्यं निरसितुमित्यर्थः॥

---

इत्युपाध्यायजैयटपुत्रकैयटकृते महाभाष्यप्रदीपे
प्रथमाध्यायप्रथमपादे तृतीयमाह्निकम्॥ ३ ॥

---

* इदानीं स्वतन्त्रमिदम् इत्यन्नंभट्टसंमतः पाठः।

उ.—ननु परिभाषाया विध्यङ्गत्वेन षष्ठ्या इत्यनुपपन्नम्; अत आह—स्वतन्त्रमिति। विधित्वनिरासेन परिभाषात्वं व्यवस्थापयितुमयमारम्भ इत्यर्थः। इदानीं पूर्वः पक्ष इत्यन्वयः। भाष्ये इग्निवृत्तिः; इङ्मात्रस्य पर्यायेण वृद्धिप्रसङ्ग इत्यर्थः। विध्यन्तरवैयर्थ्यमाशङ्कते भाष्ये—पुनरिति। नन्विति; एतस्य स्वतन्त्रविधित्वे विध्यन्तरमन्त्यस्या निको विधानार्थम्, न नियामकमित्यर्थः। विनिगमकमाह—नियमादिति। अस्मिन् शास्त्रे नियमः परिसंख्या। तस्याः स्वार्थत्यागः, परार्थस्वीकारः, प्राप्तबाधश्चेति त्रैदोष्यात्, अपूर्वविधेस्तदभावाद्विधिरेव युक्त इत्यर्थः। द्वितीयमिति; गुणवृद्ध्यनुवृत्ताविक इत्यस्यावृत्त्या एका परिभाषा; अन्यद्विधायकमित्यनिकः प्रसङ्गाभावान्नियम एवेत्यर्थः। असङ्गतिं निराह—तुल्येति; स्वातन्त्र्ये संभवति पारतन्त्र्यमन्याय्यमिति न्यायेन तुल्यप्रसङ्गसङ्गतिरिति भावः। यणः स्थाने इग्विधित्वे संप्रसारणमिति व्यर्थं स्यात्; तस्यापि विधेयत्वे वाक्यभेदप्रसङ्गः; अत आह—इग्यण इति। विधेयद्वयोपादानाद्वाक्यभेदो न दोषायेत्याह—वाक्यभेदेनेति। विषयार्थमिति भाष्ये; नियमार्थमित्यर्थः। नन्वत्राण् पूर्वणकारेण। तथा चान्तरतमाभावात् क आदेशः? अत आह—अन्तरतमस्येति; विधानसामर्थ्यादिति भावः; अनेन किं समाधानमुक्तम्; अत आह—स्वातन्त्र्यमिति। निवृत्तिप्रकारमेवाह—तेनेति; षष्ठ्यधिकारे वचनेनेत्यर्थः। भाष्ये एकः; "उरण् रपरः" इति योगः। अनुवृत्तौ हेतुः स्वरितत्वादिति। मध्यस्थानन्वये हेतुः अन्तरालेति। अनुवर्तन्तां नामेत्युक्तत्वादिति भावः।

ननु तद्योग्याकाङ्क्षां विना कथमनयोरनुवृत्तयोरपि तत्रान्वयः? यत्राकाङ्क्षा तत्रैवानुवृत्तस्यापि संबन्ध इत्युक्तत्वात्; अत आह—भाष्ये अथवेति। लौकिकाधिकार उक्तः; तमुपपादयति षष्ठीस्थान इति। योगविभागे सति षष्ठीति योगस्साकाङ्क्ष इति भावः। अतिप्रसङ्गं निराह—तत्रेति; "षष्ठी" इति योग इत्यर्थः। ननु योग्यत्वं सर्वनामसंज्ञायामप्यस्तीति सर्वनामसंज्ञापि "अव्ययसर्वनाम्नाम्" इत्यत्रैव स्यात्; "सर्वनाम्नः स्मै" इत्यादौ न स्यात्; तत्रावयवार्थयोगेन कृत्स्नादीनामपि ग्रहणं स्यात् अतो भाष्ये—अथवेति। तदुपपादयति—अन्यतरार्थमिति। तत्रैक इति; द्वितीयं गुणवृद्धिग्रहणमित्यत्रोपपादितमेतत्।

अवश्येति; विधिवाक्यस्येक्परिभाषापेक्षायामावश्यक्यामित्यर्थः। एकवाक्यतयेति; अस्य सूत्रस्येत्यादिः। एत्रकारव्यावर्त्यमाह—न त्विति। स्वातन्त्र्यमिति; वाक्यभेदपरिहाराय उक्तार्थत्वे तत्राप्युभयसंमतपरिभाषात्वे चावश्यके स्वातन्त्र्यमर्थान्निरस्तं भवतीत्याशयः। भाष्ये—इहापीति; परिभाषात्वेन विध्येकवाक्यत्वमेवास्य, न स्वातन्त्र्यमिति भावः। अत्र शङ्क्यते—अनिको व्यावृत्त्यर्थमेव पुनर्वचनमस्तु। इदं विध्यर्थमेवास्तु। तथा च न वाक्यभेदः। नापि नियमवादिनं प्रत्युक्तप्रतिबन्दीति। अत्राहुः—दृष्टकारिणा शास्त्रेण भवितव्यम्। अन्यथा सर्वेषां सूत्राणां यथाकथंचिदर्थान्तरस्य वक्तुं शक्यत्वादतिप्रसङ्गः। तस्मात् परिभाषया सर्वसामञ्जस्ये विधित्वपक्षो दुष्टः। दध्यादावतिप्रसङ्गस्य दुरुद्धरत्वादिति। एतेन "इग्यणः" इत्यत्रापि वाक्यभेदप्रसङ्गेन विधित्वं निरस्तम्। संज्ञाविधावितरद्वयमनुवदितव्यः। पुनर्विधेयकार्याङ्गीकारे वाक्यभेदः। "वचिस्वपि" इत्यादीनां दोषत्रययुक्तनियमप्रसङ्गश्चेति दिक्।

इति श्रीमदन्नम्भट्टस्य कृतौ

भाष्यप्रदीपोद्द्योतने प्रथमस्याध्यायस्य प्रथमे पादे तृतीयमाह्निकम्।

## अथ चतुर्थमाह्निकम् ।

### सू.—न धातुलोप आर्धधातुके ॥ १।१।४ ॥

**भा.—धातुग्रहणं किमर्थम्? इह मा भूत्—लूञ् लविता लवितुम्, पूञ् पविता पवितुम्। आर्धधातुक इति किमर्थम्? 'त्रिधा बद्धो वृषभो रोरवीति'।**

प्र.—न धातुलोप आर्धधातुके ॥ गुणवृद्ध्योः प्राधान्यादयं निषेधः, न तु तद्गुणभावादिकपरिभाषायाः। दीधीवेवीटामिति चासम्बद्धं परिभाषाया निषेधे स्यात्। कृत्स्नस्य धातोर्लोपे गुणवृद्धिप्रसङ्गाभावादनर्थको निषेधः स्यादिति सामर्थ्याद्धात्वेकदेशलोपोऽत्र धातुलोपोऽभिमतः, अवयवक्रियया‌पि समुदायस्य व्यपदेशदर्शनात्। यथा पटो दग्ध इति। अथवा समुदायशब्दोऽवयवे तद्रूपारोपाद्वर्तते। धातुग्रहणमिति; उपसर्जनस्यापि यथा परामर्शस्तथा "केषां शब्दानाम्" इत्यत्र प्रतिपादितम्। विनापि धातुग्रहणेन लोपविशेषणमार्धधातुकग्रहणं विज्ञास्यते। अनुबन्धलोपस्य चानैमित्तिकत्वाद्भवितेति गुणनिषेधो न भविष्यतीति प्रश्नः। सिद्धान्ते तु गुणवृद्धिविशेषणमार्धधातुकग्रहणमित्याभिप्रायः। अनुबन्धो न धात्वेकदेशो यस्मादुपदेश एवेत्संज्ञा। प्रयोगे तु लूशब्द एव धातुसंज्ञः। केवलमसौ ञित्कार्यं लभते। लूशब्दस्यैव हि क्रियावाचित्वमिति तस्यैव धातुसंज्ञा युक्ता। रोरवीतीति। सत्यार्धधातुकग्रहणे शब्दवत्वादन्यपदार्थस्य बहुव्रीहिरसंदिग्धो भवति, नान्यथा। क्रमेण सूत्रप्रत्याख्यानायार्धधातुकस्य च लोपविशेषणत्वे धातुग्रहणानर्थक्यप्रतिपादनाय प्रत्युदाहरणोपन्यासः।

उ.—ननु पूर्वसूत्रे परिभाषायाः प्राधान्यात्तस्या एव निषेधौचित्याद्भाष्ये गुणप्रत्युदाहरणमयुक्तमत आह—गुणेति। तयोः प्राधान्यं प्रथमानिर्दिष्टत्वेन। यथा राज्ञः पुरुष इत्यत्र वस्तुतः [1] प्रधानभूतस्यापि राज्ञः षष्ठीनिर्दिष्टतया अप्राधान्यं, प्रथमानिर्दिष्टपुरुषस्य शब्दतः प्राधान्यम्; तद्वत् इहापि। प्रधाने च कार्यसम्प्रत्यय इति भावः। नन्वत्र परिभाषाया एव विध्यङ्गभूतायाः प्राधान्याद्गुणवृद्ध्योस्तच्छेषत्वमेव युक्तम्; अत आह—दीधीति। परिभाषानिषेधस्यानिकोऽपि गुणवृद्धी प्रयोजनम्। तच्चात्र न। अलोऽन्त्यपरिभाषया अन्त्यस्येक एव तत्प्राप्तिरित्यनिकोऽभावाच्च। तथा च परिभाषानिषेधे निषेधप्रकरणे [2] नेदमनुबद्धं

[1] क—प्रधानस्य। [2] ख—प्रकरणेन इदमसंबद्धम्।

स्यादित्यर्थः। ननु श्रुत्या सर्वधातुलोपः प्रतीयते, अवयवपरत्वे लक्षणा स्यादतो लवितेत्युदाहरणमयुक्तमत आह—कृत्स्नस्येति। दूरमित्यत्र "दुरीणो लोपश्च" इति रक्सन्नियोगेन कृत्स्नधातुलोपोऽस्तीति गुणवृद्धिप्रसङ्गाभाव उक्तः। परम्परासम्बन्धे षष्ठीं वाजपेयस्य [1] यूपवदङ्गीकृत्य धातुशब्दस्य मुख्यार्थतामाह—अन्यत्रेति। पटे दाह इति तूदाहरणीयम्। पटो दग्ध इत्यत्र पटशब्दस्यावयवलक्षणा चेद् अत्रापि तथेत्याह—अथवेति। केषामिति बुद्ध्या निष्कृष्य स्वशब्देनोपादानात् "शब्दानुशासनम्" इत्यत्रोपसर्जनस्यापि शब्दस्य "केषां शब्दानाम्" इति परामर्शोपपत्तिरुक्ता। तद्वदत्रापीत्यर्थः। विनापि धातुग्रहणेन निषेधो न भविष्यतीत्यन्वयः। तत्र हेतुः लोपेति; आर्धधातुकनिमित्ते धातुलोपे सतीत्यर्थः। सिद्धान्त इति। प्रेद्ध इत्यत्र गुणसिद्ध्यर्थं गुणवृद्धिविशेषणत्वस्यावश्यकत्वाल्लोप इत्यस्य निषेधविशेषणत्वेन विशेषणान्तरसम्बन्धायोगाच्चेति भावः। गणे सानुबन्धस्यैव पाठात् तस्यैव धातुसंज्ञेत्याशङ्क्याह—अनुबन्ध इति। यस्मादिति। न च धातुसंज्ञां विनोपदेशत्वाभावादित्संज्ञा पश्चाद्भाविनीति वाच्यम्, प्रातिपदिकगणवद्धातुगणानामप्युच्चारणमात्रेणैवोपदेशत्वात्। प्रयोगार्हप्रत्ययोत्पत्तिकाले धातुसंज्ञाया उपयोगात् पश्चात् सेत्याह—प्रयोगे त्विति। उपदेशकाल एव लुप्तस्याप्यनुबन्धस्य स्मर्यमाणस्य कार्यनिमित्तत्वं संभवतीत्याह—केवलमिति; प्रयोगोपयोग इति केवलशब्दार्थः। क्रियावाचिनां [2] भ्वादीनां धातुसंज्ञा वक्ष्यते। अन्वयव्यतिरेकाभ्यां लूशब्दस्यैव क्रियावाचित्वं नानुबन्धसहितस्येति न तस्य धातुसंज्ञेत्याह—लूशब्दस्य(स्यैव) हीति। ननु धातोर्लोपो यस्मिन्निति बहुव्रीहिणा धातुलोपनिमित्तनिमित्तके गुणवृद्धी न स्त इति लाभाद्यङ्लुकोऽनैमित्तिकत्वादार्धधातुक इति व्यर्थमत आह—सतीति। नान्यथेति; धातोर्लोप इति तत्पुरुषमादाय रोरवीतीत्यत्रापि गुणनिषेधप्रसङ्गाद्बहुव्रीहिनिश्चयार्थमार्धधातुकोक्तिरित्यर्थः। पदप्रयोजनचिन्ता वृत्तिकारस्योचिता न भाष्यकृतः; अत आह—क्रमेणेति; प्रत्युदाहरणज्ञाने तस्यान्यथासिद्ध्या सूत्रप्रत्याख्यानं [3] युज्यत इत्यर्थः।

भा.—किं पुनरिदमार्धधातुकग्रहणं लोपविशेषणम्—'आर्धधातुकनिमित्ते लोपे सति ये गुणवृद्धी प्राप्नुतस्ते न भवतः' इति। आहोस्वित्, गुणवृद्धिविशेषणमार्धधातुकग्रहणम्—'धातुलोपे सत्यार्धधातुकनिमित्ते ये गुणवृद्धी प्राप्नुतस्ते न भवतः' इति? किं चातः? यदि लोपविशेषणम्, 'उपेद्धः, प्रेद्धः' अत्रापि प्राप्नोति। अथ गुणवृद्धिविशेषणम्, 'क्नोपयति' अत्रापि प्राप्नोति। यथेच्छसि तथास्तु। अस्तु लोपविशेषणम्। कथम् 'उपेद्धः, प्रेद्धः' इति? बहिरङ्गो गुणोऽन्तरङ्गः प्रतिषेधः, असिद्धं बहिरङ्गमन्तरङ्गे। यद्येवं नार्थो धातुग्रहणेन। इह

[1] Vide मी.—III—1—9.

[2] ख—भ्वादीनां omitted.

[3] ख—न युज्यते।

**कस्मान्न भवति लूञ् 'लविता, लवितुम्'? आर्धधातुकनिमित्ते लोपे प्रतिषेधः। न चैष आर्धधातुकनिमित्तो लोपः। अथवा पुनरस्तु गुणवृद्धिविशेषणम्। ननु चोक्तं 'क्नोपयति' इत्यत्रापि प्राप्नोतीति? नैष दोषः, निपातनात्सिद्धम्। किं निपातनम्? "चेले क्नोपेः" इति।**

प्र.—किं पुनरिति। आर्धधातुकग्रहणं लोपविशेषणं वा, गुणवृद्धिविशेषणं वा, बहुव्रीहिपक्षे तूभयविशेषणं वेति पक्षत्रयसम्भवात् प्रश्नः। प्रेद्ध इति। नन्वाद्गुणोऽनिग्लक्षण इति तन्निषेधो न भविष्यति; परिहारान्तराभिधानादेतन्नाश्रितमित्यदोषः। बहिरङ्ग इति। यदा पूर्वं प्रत्ययः पश्चादुपसर्गयोगस्तदा प्रतिषेधोऽन्तरङ्गः, गुणो बहिरङ्गः। यदा तु पूर्वमुपसर्गयोगः तदा गुणोऽन्तरङ्गः, पश्चात् प्रत्ययोत्पत्तौ निषेधो बहिरङ्गः। सर्वथा बहिरङ्गस्यासिद्धत्वादिष्टसिद्धिः। ननु नाजानन्तर्ये इति निषेधात् कथं परिभाषाप्रवृत्तिः। यत्र कार्यविधावानन्तर्येणाचोराश्रयणं तत्र निषेधादनुपस्थानं परिभाषायाः। यथा—अक्षद्यूरिति। तत्र हि "इको यणचि" इति वचनादिगचोराश्रयणम्। अस्मिंस्तु प्रतिषेधसूत्रे नास्त्यचोराश्रयणमित्यदोषः।

उ.—तृतीयपक्षोऽपि संभवतीत्याह—बहुव्रीहीति। भाष्ये—प्रेद्ध इति; इन्धेर्निष्ठायाम् "अनिदिताम्" इति नलोप आर्धधातुकनिमित्तः; तत्राद्गुणोऽपि न स्यादित्यर्थः। भाष्ये—क्नोपयतीति; क्नूयी शब्दे, अस्माण्णिचि "अर्तिह्री" इत्यादिना पुकि "लोपो व्योर्वलि" इति यकारलोपाद्गुणो न स्यादित्यर्थः। यदेति। पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेणेति पक्षाश्रयणेनेत्यर्थः। गुण इति। पश्चाद्भाविधातूपसर्गसम्बन्धनिमित्तत्वादिति भावः। धातुः पूर्वमुपसर्गेण युज्यते पश्चात् साधनेनेति पक्षमाश्रित्याह—यदेति। सर्वथेति; गुणस्य बहिरङ्गत्वेऽसिद्धत्वेन प्रतिषेधाविषयत्वम्, अन्तरङ्गत्वे तु पूर्वं निर्वृत्तस्य निवृत्त्ययोगान्निषेधाप्रवृत्तिः। अप्रवृत्त्यनुमानस्यैव बाधत्वादिति भावः। बहिरङ्गो गुण इति भाष्यमुपलक्षणमिति ज्ञेयम्। अत्र न्यायाप्रवृत्तिं शङ्कते—नन्विति। नाजानन्तर्ये इति; "नाजानन्तर्ये बहिष्ट्वप्रक्लृप्तिः" यत्र कार्येऽचोरानन्तर्यमस्ति तत्र 'असिद्धं बहिरङ्गम्' इति परिभाषा न प्रवर्तेत [1]इत्यर्थमाश्रित्य शङ्का। अक्षद्यूरिति; दीव्यतेः क्विपि "च्छ्वोः शूड्" इति ऊठि कृते प्रत्ययाश्रितोठो बहिरङ्गत्वाद्धातुमात्राश्रितान्तरङ्गे यणि कर्तव्येऽसिद्धतया यण् न स्यादिति तत्र नाजानन्तर्ये इति निषेधः प्रवर्तेत इत्यर्थः। 'कोऽसिचद्' इत्यादावेकपदाश्रयतयान्तरङ्गे षत्वे

[1] क—इति शङ्कार्थः।

कर्तव्ये "एङः पदान्तादति" इति पदद्वयाश्रितपूर्वरूपकार्यस्य बहिरङ्गत्वेनासिद्धतयैव षत्वाभावे सिद्धे पुनः "षत्वतुकोरसिद्धः" इति वचनादसिद्धं बहिरङ्गमिति परिभाषाया अनित्यत्वं ज्ञाप्यत इत्याहुः। निपातनादिति भाष्यम्। अत्र वर्णमात्राश्रयतयान्तरङ्गे यलोपे कर्तव्ये प्रत्ययापेक्षतया बहिरङ्गः गुणसिद्ध इति कथं यलोप इति शङ्का निपातनादेव निरस्तेति ज्ञेयम्।

**भा.—परिगणनं कर्तव्यम्**

**॥ वा ॥ यङ्यक्क्यवलोपे प्रतिषेधः ॥**

**भा.—यङ्यक्क्यवलोपे प्रतिषेधो वक्तव्यः। यङ्—बेभिदिता, मरीमृजः। यक्—कुषुभिता, मगधकः। क्य—समिधिता, दृषदकः। वलोपे—जीरदानुः।**

**भा.—किं प्रयोजनम्**

**॥ वा ॥ नुम्लोपस्त्रिव्यनुबन्धलोपेऽप्रतिषेधार्थम् ॥**

**भा.—नुम्लोपे स्त्रिव्यनुबन्धलोपे च प्रतिषेधो मा भूदिति। नुम्लोपे—अभाजि, रागः, उपबर्हणम्। स्त्रिवेः आस्त्रेमाणम्। अनुबन्धलोपे—लूञ्, लविता, लवितुम्। यदि परिगणनं क्रियते 'स्यदः, प्रश्रथः, हिमश्रथः' इत्यत्रापि प्राप्नोति। वक्ष्यत्येतत् 'निपातनात्स्यदादिषु' इति।**

प्र. -यङ्यक्क्यवलोप इति। व इत्यत्राकारोऽपि विवक्षितः। तेन धातुपाठे योऽकारान्तः पठितः तस्य ग्रहणम्। अन्यथा स्त्रिविः कथं निवार्येत? बेभिदितेति; बेभिद्यशब्दात्तृच्, इट्, "यस्य हल" इति यलोपः। मरीमृज इति; "यङोऽचि च" इति यङो लुक्। कुषुभमगधशब्दौ कण्ड्वादिगणपठितौ धातू, ताभ्यां यक्। ण्वुल्तृचौ। "यस्य हलः" इति यलोपः। समिद्दृषच्छब्दाभ्यां क्यजन्ताभ्यां प्रत्ययौ ण्वुल्तृचौ। "क्यस्य विभाषा" इति यलोपः। नुम्लोप इति। नुमिति नकारस्य पूर्वाचार्यसंज्ञा। उपबर्हणमिति। बृहि वृद्धौ, इदित्वान्नुम्। 'बृंहेरच्यनिटि' इति वार्तिकेन नलोपः। आस्त्रेमाणमिति। अस्रेमाणमित्यपि वेदे पठ्यते। तत्र नञ्पूर्वात् स्त्रिवेः मनिन्प्रत्ययः, वकारलोपः। ऊडादेशश्छान्दसत्वाद्वकारस्य न भवति। परिगणने सति धातुग्रहणं न कर्तव्यं भवतीत्यनुबन्धलोपः प्रयोजनत्वेन पठितः।

उ.—वकारेऽकारो विवक्षित इत्याह—वकार इति। स्त्रिविरिति; स्त्रिवु गत्यादाविति (तुदादि ?) तूदित्। मरीमृज इति। "यङोऽचि च" इति चकाराद्यङो लुक्। "रुग्रिकौ च लुकि" इत्यभ्यासरीगागमः। नन्वभाजि राग इत्यत्र "भञ्जेश्च चिणि" इति "घञि च भावकरणयोः" इति चौपदेशिकनकारस्यैव लोपः, न नुमो नकारस्य; अत आह—नुमितीति। नन्वास्रेमाणमित्ययुक्तम्, "ज्वरत्वर" इत्यादिना ऊठि [1]आस्नूयमाणमिति भाव्यम्; अत आह—ऊडिति; ऊडभावे "लोपो व्योर्वलि" इति वकारलोपे गुणे आस्रेमाणमिति सिद्ध्यतीत्यर्थः। ननु धातुग्रहणेनैवानुबन्धलोपव्यावृत्तेस्तद्ग्रहणं व्यर्थम्; अत आह—परिगणने सतीति। भाष्ये—निपातनादिति; "स्यदो जवे" "अवोदैधौद्मप्रश्रथहिमश्रथाः" इति निपातनम्। स्यन्देर्घञ् नलोपो वृद्ध्यभावश्च। अवपूर्वस्योन्देः घञ् नलोपः। इन्धेः घञ् नलोपगुणौ, एधः। उन्देरौणादिके मन्प्रत्यये नलोपगुणौ। प्रहिमपूर्वश्रन्थेर्घञ् नलोपो वृद्ध्यभावश्च निपात्यते। यद्यपि अवोद इत्यत्र आद्गुणेनापि सिद्ध्यति तथापि अवग्रहे ओद इति सिद्ध्ये गुणोऽपि निपात्यत इति भगवदाशयः। [2]अवोदैध इति सम्पातायातमित्यन्ये।

भा.—तत्तर्हि परिगणनं कर्तव्यम्। न कर्तव्यम्। नुम्लोपे कस्मान्न भवति ?

॥ वा ॥ इक्प्रकरणान्नुम्लोपे वृद्धिः ॥

भा.—इग्लक्षणयोर्गुणवृद्ध्योः प्रतिषेधः। न चैषेग्लक्षणा वृद्धिः। यदीग्लक्षणयोः गुणवृद्ध्योः प्रतिषेधः 'स्यदः, प्रश्रथः, हिमश्रथः' इत्यत्र न प्राप्नोति। इह च प्राप्नोति 'अवोदः, एधः, ओद्मः' इति।

॥ वा ॥ निपातनात्स्यदादिषु ॥

भा.—निपातनात्स्यदादिषु प्रतिषेधो भविष्यति, न च भविष्यति। यदीग्लक्षणयोर्गुणवृद्ध्योः प्रतिषेधः, स्त्रिव्यनुबन्धलोपे कथम् ?

॥ वा ॥ प्रत्ययाश्रयत्वादन्यत्र सिद्धम्।

भा.—आर्धधातुकनिमित्ते लोपे प्रतिषेधः। न चैष आर्धधातुकनिमित्तो लोपः। यद्यार्धधातुकनिमित्ते लोपे प्रतिषेधः 'जीरदानुः' अत्र न प्राप्नोति ॥

---

[1] ख—आस्नूमाणम्। [2] ख—अवोदेति।

॥ वा ॥ रकि ज्यः संप्रसारणम् ॥

**भा.**—नैतज्जीवे रूपम्, रक्येतज्ज्यः संप्रसारणं भवति। यावता चेदानीं रकि, जीवेरपि सिद्धं भवति। कथमुपबर्हणम्? बृहिः प्रकृत्यन्तरम्। कथं ज्ञायते 'बृहिः प्रकृत्यन्तरम्' इति? अचीति हि लोप उच्यते, अनजादावपि दृश्यते 'निबृह्यते'। अनिटीति चोच्यते, इडादावपि दृश्यते 'निबर्हिता, निबर्हितुम्' इति। अजादावपि न दृश्यते 'बृंहयति बृंहकः'। तस्मान्नार्थः परिगणनेन।

प्र.—इक्प्रकरणादिति; तेन यत्रेक्परिभाषा स्थान्यन्तरानिवृत्तये व्याप्रियते तत्रायं निषेधः। प्रत्ययाश्रयत्वादिति। लोपविशेषणमार्धधातुकग्रहणमित्यर्थः। जीरदानुरिति। वर्णनिमित्तोऽत्र वकारलोपो न प्रत्ययनिमित्तः। रकि ज्य इति। एवं च जीरेत्यवग्रहः सिद्ध्यति। बहुव्रीहित्वाच्च जीरदानुशब्दे रेफाकार उदात्तः। बृहिरिति। बृह बृहि वृद्धौ इति पाठात्।

उ.—प्रतिषेधनिमित्तस्य धातुलोपस्य प्रत्ययाश्रयत्वात्प्रत्ययनिमित्तकत्वाश्रयणादिति वार्तिकार्थमभिप्रेत्याह—लोपविशेषणमिति। ननु जीवे रदानुप्रत्यये वलोपस्य प्रत्ययरेफनिमित्तकत्वेन गुणनिषेधसिद्धेर्जीरदानुरित्यत्र न प्राप्नोतीत्ययुक्तम्; अत आह—वर्णेति। रक्प्रत्यय एव युक्त इत्याह—एवं चेति। जीरदानुशब्दो वेदे मध्योदात्तः पठ्यते, तत्कथम्? समासान्तो[दात्त]स्य युक्तत्वात्। रदानुप्रत्यये तु प्रत्ययाद्युदात्तत्वेनेष्टं सिद्ध्यति; इत्यत आह—बहुव्रीहित्वादिति। "दाभाभ्यां नुः" इति दानुशब्देन जीरशब्दस्य बहुव्रीहिरित्यर्थः। प्रत्ययमध्ये त्ववग्रहो न संभवति; पदस्यैव तदङ्गीकारादिति भावः। जीवेरपि रकि जीरशब्दे सिद्धे संप्रसारणक्लेशो व्यर्थ इत्याह—भाष्ये—यावतेति। प्रकृत्यन्तरत्वं साधयति—भाष्ये—अचीति। "बृंहेरच्यनिटि" इति वार्तिकेन नलोप [1] उच्यत इत्यर्थः। प्रकृत्यन्तरत्वे धातुपाठसंवादमप्याह—बृहेति।

**भा.**—यदि परिगणनं न क्रियते 'भेद्यते, छेद्यते' अत्रापि प्राप्नोति। नैष दोषः। धातुलोप इति नैवं विज्ञायते 'धातोर्लोपो धातुलोपो धातुलोपे' इति। कथं तर्हि? 'धातोर्लोपो यस्मिंस्तदिदं धातुलोपं धातुलोपे' इति। तस्मादिग्लक्षणा वृद्धिः।

---

1—आरभ्यते।

प्र.—भेद्यत इति । गुणो णिलोपश्चार्धधातुकनिमित्त इति पक्षद्वयेऽपि दोषः । अपवादविषयपरिहाराच्चान्तरङ्गोऽपि गुणोऽत्र न प्रवर्तत इत्युपन्यासः । कथं तर्हीति । बहुव्रीहौ सत्येकार्धधातुकनिमित्तत्वं लोपस्य गुणवृद्ध्योश्चाश्रितमिति भेद्यते इत्यादौ भिन्ननिमित्तत्वाद्गुणो न निषिध्यते ।

उ.—गुण इति । णिजाश्रितो गुणः । यगाश्रितो णिलोपः । पक्षद्वय इति । आर्धधातुक इत्यस्य लोपगुणोभयविशेषणत्वे[1] सतीत्यर्थः । नन्वन्तरङ्गे गुणे कार्ये बहिरङ्गणिलोपस्यासिद्धतया निषेधाप्रवृत्तेः 'भेद्यते' इत्यत्र गुणो भविष्यत्येव; इत्यत आह—अपवादेति । निषेधस्यापवादत्वात् तद्विषयेऽन्तरङ्गस्यापि गुणस्य न प्रवृत्तिरिति शङ्किताशय[2] इत्यर्थः । यद्यपि यत्र समानकालौ गुणनिषेधौ तत्र चरितार्थो निषेधो नान्तरङ्गतया पूर्वकालीनं गुणं बाधितुं क्षमत इति परिहारोऽस्ति; तथापि परिहारान्तराश्रयणान्नायमाश्रितो भगवतेति ज्ञेयम् । बहुव्रीहाविति । श्रुतपरित्यागेनाश्रुतान्यपदार्थकल्पने मानाभावादिति भावः । भाष्ये इक्प्रकरणादित्युक्तोपसंहारस्तस्मादिति शङ्कावसरदानाय । अत एवाह भाष्ये यदि तर्हीति ।

**भा.—यदि तर्हीग्लक्षणयोर्गुणवृद्ध्योः प्रतिषेधः, 'पापचकः, पापठकः, मगधकः, दृषदकः' अत्र न प्राप्नोति ।**

**॥ वा ॥ अल्लोपस्य स्थानिवत्वात् ॥**

**भा.—अकारलोपे कृते तस्य स्थानिवत्वाद् गुणवृद्धी न भविष्यतः ।**

उ.—पचिपठिभ्यां यङन्ताभ्यां ण्वुल् । "यङोऽचि च" इति चकाराद्यङो लुकि "दीर्घोऽकितः" इत्यभ्यासस्य दीर्घः । पापचकः, पापठकः । मगधशब्दः कण्ड्वादियगन्तः, ण्वुल्, "यस्य हलः" इति यलोपः—मगधकः । दृषदः क्यच्, ण्वुल्, "क्यस्य विभाषा" इति यलोपः—दृषदकः । अत्रेग्लक्षणत्वाभावाद्वृद्धेर्निषेधो न प्राप्नोतीति भाष्यार्थः । भाष्ये—अल्लोपस्येति; "अतो लोप" इति यङ्यक्क्यचामकारलोपे कृते पश्चाद्यलोपः । अल्लोपस्य स्थानिवत्वान्न ण्वुलिनिमित्तकवृद्धिरित्यर्थः ।

**॥ वा ॥ अनारम्भो वा ॥**

**भा.—अनारम्भो वा पुनरस्य योगस्य न्याय्यः । कथं 'बेभिदिता, मरीमृजकः, कुषुभिता, समिधिता' इति ? अत्राप्यकारलोपे कृते तस्य स्थानिवद्भावाद् गुणवृद्धी न भविष्यतः ।**

---

1 क—विषयविषयत्वे । 2 ख—इत्यर्थः omitted.

यत्र तर्हि स्थानिवद्भावो नास्ति तदर्थमयं योगो वक्तव्यः। क्व च स्थानिवद्भावो नास्ति? यत्र हलचोरादेशः 'लोलुवः, पोपुवः, मरीमृजः, सरीसृपः' इति। अत्राप्यकारलोपे कृते तस्य स्थानिवद्भावाद्गुणवृद्धी न भविष्यतः। लुकि कृते न प्राप्नोति। इदमिह संप्रधार्यम्—लुक् क्रियतामल्लोप इति। किमत्र कर्तव्यम्? परत्वादल्लोपः। नित्यो लुक्, कृतेऽप्यल्लोपे प्राप्नोति, अकृतेऽपि प्राप्नोति। लुगप्यनित्यः। कथम्? अन्यस्य कृतेऽल्लोपे प्राप्नोति, अन्यस्याकृते। "शब्दान्तरस्य प्राप्नुवन्विधिरनित्यो भवति"। अनवकाशस्तर्हि लुक्। सावकाशो लुक्। कोऽवकाशः? अवशिष्टः। अथापि कथंचिदनवकाशो लुक् स्याद् एवमपि न दोषः। अल्लोपे योगविभागः करिष्यते "अतो लोपः"। ततो "यस्य"। यस्य च लोपो भवति। अत इत्येव। किमर्थमिदम्? लुकं वक्ष्यति तद्बाधनार्थम्। ततो "हलः"। हल उत्तरस्य यस्य च लोपो भवतीति।

प्र.—यत्र हलचोरादेश इति। लुका कृत्स्नो यङ् लुप्यत इत्याशयः। अत्रापीति। कृतेऽप्यकारलोपे 'एकदेशविकृतमनन्यवद्भवति' इति यकारः प्रत्ययसंज्ञो भवत्येवेति भावः। नित्यो लुगिति। लुक्शास्त्रप्रवृत्तिर्नित्या। अनवकाश इति। नाप्राप्ते लोपे लुगारम्भात्। सावकाश इति। भिन्नविषयौ लुग्लोपौ। अकारस्य लोपः, यकारस्य लुक्। ततश्च नास्ति येन नाप्राप्तिन्यायः। अथापीति। "यङोऽचि च" इत्यत्र यकाराकारसमुदायस्य यङ् इति निर्दिष्टस्य विवक्षितत्वादवयवे च यङ्व्यपदेशस्य गौणत्वादिति भावः।

उ.—सूत्रं प्रत्याचष्टे भाष्ये—अनारम्भेति। लुकेति; यङोऽचि चेत्यत्र यङ इति समुदायस्यैव लुगित्यर्थः। समुदायलोपे न प्रमाणम्। प्रत्ययत्वं त्ववशिष्टस्याप्यस्तीत्याह—कृतेऽपीति। शब्दान्तरप्राप्त्या वक्ष्यमाणमनित्यत्वं निराकर्तुमाह—[1] एकदेशेति। नेति येन नाप्राप्तिन्यायेन। स नास्तीत्याह—भिन्नेति। समानविषयेऽयं न्यायः, न तु भिन्नविषयेऽपि। अन्यथा "इतश्च" इति लोपेन ङ्णोऽन्त्यादेशो बाध्येतेति भावः। समुदायनिर्देशे

[1] ख—लुक्शास्त्रेति।

प्रमाणं यङ इति निर्दिष्टस्येति। विवक्षितत्वादिति। विवक्षायां मानाभावादभ्युपेत्य-वादोऽयमिति भावः। भाष्ये—अत इत्येवेति। यस्य योऽकारः तस्य लोप इत्यर्थः। भाष्ये—लुकं वक्ष्यतीति। "यङोऽचि च" इति लुक् अतो लोपापवादः। अपवादश्च प्रायशः पश्चाद्भावीत्यभिप्रेत्य [1] भविष्यन्निर्देशः। भाष्ये, तद्बाधनार्थम्; समुदायलुग्बाधनार्थम्।

**भा.—इहापि तर्हि परत्वाद्योगविभागाद्वा लोपो लुकं बाधेत 'कृष्णो नोनाव वृषभो यदीदम्' नोनूयते नोनाव। समानाश्रयो लुक् लोपेन बाध्यते। कश्च समानाश्रयः? यः प्रत्ययाश्रयः। अत्र च प्रागेव प्रत्ययोत्पत्तेर्लुक् भवति। कथं 'स्यदः, प्रश्रथः, हिमश्रथः, जोरदानुः, निकुचितः' इति?**

**॥ वा ॥ उक्तं शेषे ॥**

**भा.—किमुक्तम्? "निपातनात्स्यदादिषु" "प्रत्यया-श्रयत्वादन्यत्र सिद्धम्" "रकि ज्यः संप्रसारणम्" इति। निकु-चितेऽप्युक्तम्। किम्? 'संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इति।**

प्र.—समानाश्रय इति। तुल्यकालत्वादिति भावः। नोनावेत्यत्र तु बहुलग्रहणानुवृत्तेर्नैमित्तिकोऽन्तरङ्गो लुक् प्रागेव प्रत्ययोत्पत्तेर्भवति। निकुचित इति। [2] कित्वसंयोगेन नलोपे सत्युदुपधत्वमिति निमित्तमकित्वस्य न भवति। यदि तर्ह्यकारलोपः क्रियते तदा जङ्गम इत्यत्र तस्य स्थानिवद्भावादुपधालोपः प्राप्नोति। नैष दोषः, अनङीति प्रतिषेधात्। अनर्थकोऽयमङिति चेत् लोपस्यापि तर्ह्यप्राप्तिः, अजादौ प्रत्यये तस्य विधानात्। ननु लोलुवादिषूवङादयः स्थानिवद्भावेन न सिद्ध्यन्ति तेषां स्थानिन्यदर्शनात्। संभवमात्रेणाप्यतिदेशो भवतीत्यदोषः।

उ.—लुग्लोपयोर्यङाश्रयत्वेन समानाश्रयत्वमाशङ्क्य आह—तुल्येति। लोलुवादा-वित्यादि। अत्र भिन्नकालत्वमेवाह—नोनावेति। बहुलेति। यङोऽचि च इति चकारा-दित्यर्थः। यङोऽचि चेत्यत्र चकारेण बहुलग्रहणानुकर्ष इत्यभिप्रायेणेदमित्याहुः। सन्निपात-लक्षणेन गुणाभावमुपपादयति—कित्वेति। अकित्वस्येति; "उदुपधाद्भावादिकर्मणोरन्यतर-

[1] क—भविष्यन्निषेधः। [2] क—सन्नियोगेन।

स्याम्" इति विहितस्य। कुञ्चेर्भावे निष्ठायामनिदितामिति नूलोपे सत्युदुपधत्वं स्वनिमित्त किल्वविघातकशास्त्रस्योदुपधादित्यस्य निमित्तं न भवतीत्यर्थः। यङोऽप्रत्ययेऽप्यकारलोपाङ्गी-कारेऽनिष्टं शङ्कते—यदीति। यकारलोपेऽकारस्य प्रत्ययत्वं ङित्वं चास्तीति "गमहन" इत्युपधालोपप्रसङ्ग इत्यर्थः। अर्थवद्ग्रहणपरिभाषया नायमङ्ग्रहणेन गृह्यत इति शङ्कते—अनर्थक इति। ङिन्मात्रस्य लोपनिमित्तत्वात् कथमप्राप्तिः; अत आह—अजादाविति; अङ्गस्येत्यनेन प्रत्ययस्याक्षेपात्। तत्र चार्थवत्परिभाषाप्रवृत्तिरिति भावः। स्थानिनीति; स्थानिनि दृष्टं कार्यं स्थानिवद्भावेन भवति। अत्राकारलोपात्प्राग्यकारो न लुप्त इति नाजादिप्रत्यय इति स्थानिन्यदर्शनम्। सम्भवेति; सत्यकारे यदि लोपस्तदा स्थानिन्युवङादिः संभवतीत्यर्थः। यद्वा स्थानिवद्भावानन्तरमुवङादेः संभवमात्रेणेत्यर्थः।

नन्वङ्गस्येत्यधिकारादजादौ प्रत्यये परे उवङ्विधीयते। तत्र चार्थवत्परिभाषया अत्र नोवङः प्राप्तिरिति चेत्। अत्राहुः। लक्ष्यानुरोधेनार्थवत्परिभाषा क्वचिन्नाङ्गीक्रियते। तथा च जङ्गम इत्यत्रानङीति प्रतिषेधान्नोपधालोपः, अत्र चोवङ्सिद्धिः। लोपस्यापीति समाधानमभ्युपेत्यवादमात्रमिति। यदि सूत्रमिदं न क्रियेत लोलुव इत्यादावुवङि कृते लघूपधगुणः स्यात्। न च तत्रापि स्थानिवद्भावः, अनादिष्टादचः पूर्वविधौ स्थानिवद्भावात्; उवङः आदिष्टादचः पूर्वत्वात्। एवं यायाः, पापाः, दरीदृश इत्यत्र "आतो लोप इटि च" "ऋदृशोऽङि गुणः" इति च स्यादिति हरदत्तः। अत्राहुः 'अङ्गवृत्ते पुनर्वृत्तावविधिर्निष्ठितस्य' इत्येवं गुणादयो न भविष्यन्तीति भाष्याभिप्राय इति।

## सू.—क्क्ङिति च ॥ १ । १ । ५ ॥

॥ वा ॥ क्क्ङिति प्रतिषेधे तन्निमित्तग्रहणम् [उपधारोरवीत्यर्थम्]।

भा.—क्क्ङिति प्रतिषेधे तन्निमित्तग्रहणं कर्तव्यम्। क्क्ङिन्निमित्ते ये गुणवृद्धी प्राप्नुतस्ते न भवत इति वक्तव्यम्। किं प्रयोजनम्?

॥ वा ॥ उपधारोरवीत्यर्थम् ॥

भा.—उपधार्थं रोरवीत्यर्थं च। उपधार्थं तावत् 'भिन्नः, भिन्नवान्' इति। किं पुनः कारणं न सिद्ध्यति? क्ङितीत्युच्यते। यत्र क्ङित्यनन्तरो गुणभावीगस्ति तत्रैव स्यात् 'चितं, स्तुतम्'। इह तु न स्यात् 'भिन्नः भिन्नवान्' इति। ननु च यस्य गुण उच्यते तं क्ङित्परत्वेन विशेषयिष्यामः। पुगन्तलघूप-

**घस्य चाङ्गस्य गुण उच्यते। तच्चात्र क्ङितिपरम्। पुगन्तलघूपधस्येति नैवं विज्ञायते पुगन्तस्याङ्गस्य लघूपधस्य चेति। कथं तर्हि? पुकि अन्तः पुगन्तः। लघ्वी उपधा लघूपधा। पुगन्तश्च लघूपधा च पुगन्तलघूपधं पुगन्तलघूपधस्येति। अवश्यश्चैतदेवं विज्ञेयम्। अङ्गविशेषणे हि सतीहापि प्रसज्येत 'भिनत्ति, छिनत्ति' इति। रोरवीत्यर्थं च। 'त्रिधा बद्धो वृषभो रोरवीति'।**

प्र.—क्ङिति प्रतिषेध इति। इक इत्यनुवर्तते गुणवृद्धी इति च तत्र यदीक् क्ङितीत्यनेन विशेष्यते क्ङिति परतो य इगिति तदा "तस्मिन्निति निर्दिष्टे पूर्वस्य" इति परिभाषोपस्थानान्निर्दिष्टग्रहणस्य चानन्तर्यार्थत्वात् चितं स्तुतं इत्यादावेव निषेधः स्यात्। न तु भिन्नो भिन्नवानित्यादाविति तन्निमित्तग्रहणं कर्तव्यम्। यदा तु क्ङिद्ग्रहणं गुणवृद्धिविशेषणं तदा परसप्तम्या अप्रसङ्ग एव। न हि विहितयोर्निषेधः अपि त्वनभिनिर्वृत्तयोरेवेति परिभाषानुपस्थानान्निमित्तसप्तम्येव क्ङितीति भवति। क्ङिन्निमित्ता हि तयोः प्रवृत्तिः। उपधारोरवीत्यर्थमिति। उपधाया अपीकः प्रतिषेधार्थम्, रोरवीतेर्यङ्निमित्तप्रतिषेधनिवृत्त्यर्थम्। अत्र हि तिङ्निमित्तो गुणो, न यङ्निमित्तः। ननु चेति। आकाङ्क्षया पुगन्तलघूपधस्येति संनिधानं मन्यते। तथा हि—'क्ङिति गुणवृद्धी न भवतः' इत्युक्ते कस्येत्याकाङ्क्षायां 'यस्य प्राप्ते' इत्यस्ति पुगन्तलघूपधस्यापेक्षा। अथवा क्ङितीति प्रत्ययग्रहणात् प्रत्ययेनाङ्गं संनिधाप्यते। ततश्च क्ङिति भिन्नमित्यादौ लघूपधस्यानन्तर्यात् सिद्धो निषेधः। लघूपधेति। ततश्च समुदायस्यानिर्देशादवयवस्य चेको व्यवधानात्तदवस्थैवाप्राप्तिरित्यर्थः।

उ.—तन्निमित्तग्रहणकर्तव्यता पाक्षिकीत्याह—इक इति। तत्र यदीति। प्राथम्यात् तस्मिन्निति परिभाषासंग्रहाच्चेति भावः। व्यवहितेऽपि पूर्वशब्दोऽस्तीति भिन्नमित्यादौ प्रतिषेधो भविष्यतीत्यत आह—निर्दिष्टग्रहणस्येति। यदा त्विति; आनन्तर्यात् प्राधान्याच्च तयोरित्यर्थः। न हीति; शास्त्रेण निर्वृत्तस्य बाधासम्भवादप्राप्त्यनुमानमेव बाधः; गुणवृद्धिभ्यां स्थानिनो निवृत्तत्वात्तयोरपि निषेधेन निवृत्तौ 'चितम्' इत्यादौ इक्श्रवणाभावप्रसङ्गाच्चेति भावः।

ननु "यस्य च भावेन" इत्यनेन निमित्तसप्तमी वाच्या विधायकान्तराभावात्। क्रियया क्रियान्तरज्ञापने च सा वाच्या, प्रकृते च किं क्रियाद्वयम्; अत आह—क्ङिन्निमित्ता हीति। क्ङित्प्रत्ययपरा आतीति क्रियया तयोः प्राप्तिक्रिया ज्ञाप्यत इति निमित्तसप्तमीत्वोपपत्तिरिति भावः। उपधायां रोरवीतीत्यत्र च प्रयोजनमिष्टसिद्धिरूपं यस्मात्तन्निमित्तग्रहणात्तत्तथेत्यभिप्रेत्योभयत्र प्रयोजनं दर्शयति—उपधाया इति। यन्निमित्तेति; परसप्तमीपक्षे यन्निमित्तो यः प्रतिषेधस्तन्निवृत्त्यर्थमित्यर्थः। सति तन्निमित्तग्रहणे गुणसिद्धिमाह—अत्र हीति। पुगन्तलघूपधस्यासंनिधानात्क्ङित्परत्वेन तस्य कथं विशेषणम्; अत आह—आकाङ्क्षेति। ननु विषयनिषेध्यापेक्षो निषेधः। विषयः क्ङित्परः, निषेध्ये गुणवृद्धी। श्रुतिसंनिधानाभ्यां द्वयं लब्धमिति कथं पुगन्तलघूपधाङ्गस्येहाकाङ्क्षा; अत आह—अथवेति। प्रत्ययेति; निषेध्यगुणवृद्धिसामर्थ्यात् प्रत्ययलाभः। तयोः प्रत्यय एव प्रसङ्गसम्भवादिति भावः। प्रत्ययेनाङ्गमङ्गेनेगितीष्टसिद्धिरित्याह—प्रत्ययेनेति। चोद्यस्य प्रथमव्याख्याने समाधानभाष्यं घटयति—ततश्चेति। द्वितीयव्याख्याने यद्यप्यङ्गस्य संनिधिरस्ति तथापि तस्योपधाविशेषणत्वेन प्रधानस्येक एव क्ङित्परत्वेन विशेषणं युक्तं नाङ्गस्येति परिहार इत्याहुः।

**भा.—यदि तन्निमित्तग्रहणं क्रियते, शचङन्ते दोषः; 'रियति, पियति, धियति, प्रादुद्रुवत्, प्रासुस्रुवत्' अत्र न प्राप्नोति।**

**॥ वा ॥ शचङन्तस्यान्तरङ्गलक्षणत्वात् ॥**

**भा.—अन्तरङ्गलक्षणत्वादियङुवङोः कृतयोरनुपधात्वाद्गुणो न भविष्यति। एवं क्रियते चेदं तन्निमित्तग्रहणम्। न च कश्चिद्दोषो भवति। इमानि च भूयस्तन्निमित्तग्रहणस्य प्रयोजनानि 'हतो हथः उपोयते औयत लौयमानिः पौयमानिः नेनिक्ते' इति। नैतानि सन्ति प्रयोजनानि। इह तावत् 'हतो हथः' इति। प्रसक्तस्यानभिनिर्वृत्तस्य प्रतिषेधेन निवृत्तिः शक्या कर्तुम्। अत्र च धातूपदेशावस्थायामेवाकारः। इह च 'उपोयते औयत लौयमानिः पौयमानिः' इति। बहिरङ्गे गुणवृद्धी अन्तरङ्गः प्रतिषेधः। असिद्धं बहिरङ्गमन्तरङ्गे। 'नेनिक्ते' इति। परेण रूपेण व्यवहितत्वान्न भविष्यति।**

प्र.—तन्निमित्तपक्षस्यापि दुष्टतामाह—शचङन्ते दोष इति। सार्वधातुकनिमित्तस्य गुणस्य निषेधेऽपि लघूपधलक्षणस्य निषेधाप्रसङ्ग इत्यर्थः। रियतिपियतिधियतीति। रि पि गतौ धि धारणे इति तुदादौ पाठः।

हतो हथ इति । यथैव "अदिप्रभृतिभ्यः शपः" इति शप् निवर्त्यते एवमकारोऽपि निषेधेन निवर्त्यतेत्याशयः । नन्विग्लक्षणोऽयं गुणो न भवतीति निषेधाप्रसङ्गः । सत्यम् । परिहारान्तरसंभवान्नैतदाश्रितम् । प्रसक्तस्येति । सामान्यलक्षणेन विशेषलक्षणापरामर्शेन यत् प्राप्तं पुनर्विशेषलक्षणपरामर्शनात्स्वरूपेणानभिनिर्वृत्तं तस्य निवृत्तिः क्रियते। परमार्थतस्तूत्सर्गापवादयोरेकवाक्यतायामप्राप्त्यनुमानं बाध इति सिद्धान्तः । 'चितम्' इत्यादौ च प्रसक्तानभिनिर्वृत्तगुणनिषेधे वचनस्य चरितार्थत्वात् 'हतः हथः' इति भूताकारनिवृत्तावव्यापारः । "अदिप्रभृतिभ्यः" इत्यनेन तु गत्यन्तराभावात् सन्नेव [1]प्रक्रियायां शब् निवर्त्यते। [2]यद्येवं 'भवत' इत्यादौ प्रसक्तोऽनभिनिर्वृत्त एव शबकारः कस्मादनेन न निवर्त्यते । नैष दोषः । शब् भवतीत्यस्यां चोदनायां गुणरूपेणाचोदनान्नायं गुणनिषेधविषयः । उपोयत इति । वेञो यकि संप्रसारणे कृते उभयपदाश्रितत्वाद्बहिरङ्गो गुणः । 'औयत' इत्यादौ बहिरङ्गाश्रयत्वात् वृद्धिर्बहिरङ्गा । नेनिक्त इति । क्ङित्परत्वेनाङ्गस्य विशेषणादङ्गस्य च कार्यित्वात् पूर्वः पक्षः । उत्तरस्त्वभ्यासस्य कार्यित्वात्तस्य च परेण रूपेण व्यवधानादिति ।

उ.—ननु परसप्तमीपक्षे उक्तदोषानुद्धाराद्यदीत्यनेन किमुच्यत इत्यत आह—तन्निमित्तेति। अनेन दोषसाम्यमुच्यते न स्वपक्षसामीचीन्यमित्यर्थः। ननु शचङ्निमित्तगुणस्य "क्ङिति च" इति निषेधात् कथमापादनम्; अत आह—सार्वधातुकेति; रि अ ति, भदुद्रु अ ति इति स्थिते "पुगन्तलघूपधस्य" इति तिङ्निमित्तगुणः कस्मान्न भवतीत्यर्थः। पिधी ह्रस्वान्तौ। तन्निमित्तग्रहणं निर्दुष्टमित्याह–भाष्ये—एवमिति। भाष्ये भूयः पुनः। प्रयोजनविशेषणत्वे भूयांसीति स्यात्। ननु प्रसक्तस्यानभिनिर्वृत्तस्य निषेधेन निवृत्तिः न तूपदेशकालावस्थितस्य; अत आह—यथैवेति। विद्यमानस्यापि शपो लुग्दर्शनादुपदेशकालीनस्यापि अकारस्य "क्ङिति च" इति प्रतिषेधेन निवृत्तिर्युक्तेत्यर्थः। परसप्तमीपक्षे क्ङिति प्रत्यये [3]परेऽनन्तरगुणवृद्धी न प्रयोक्तव्ये इति सूत्रार्थपर्यवसानमिति भावः। नन्विति; हकारस्थाकारस्यैकस्थाने गुणशब्देनाविहितत्वात् न निवृत्तिः संभवतीत्यर्थः। परिहरति—सत्यमिति। प्रसक्तस्यानभिनिर्वृत्तस्येत्यनयोर्विरोधं निराह—सामान्येति। एकत्र विधिप्रतिषेधप्रवृत्त्यङ्गीकारे विकल्पः

---

[1] प्रक्रियादशायाम् ।
[2] यद्येवम् ।
[3] अनन्तर—omitted in ख.

स्यात्; अत आह—परमार्थत इति। क्ङितीत्येतदनुवर्तमानेन नेत्यनेन संबद्ध्यते। पर्युदासार्थश्चायम्। 'नेक्षेतोद्यन्तमादित्यम्' इत्यादावसमासेऽपि नञः पर्युदासार्थत्वदर्शनात्। इहापि विकल्पपरिहाराय "नार्षेयं," "नानूयाजेषु" इतिवत् [1] पर्युदासो युक्तः। तथा च अक्ङितीति गुणवृद्धिनिमित्तसार्वधातुकादिविशेषणमिति क्ङिति प्रत्यये गुणवृद्ध्योरप्राप्तेर्न विकल्प इति भावः। उत्सर्गापवादयोः विधिनिषेधयोः। यथाश्रुते "आहवनीये जुहोति" "पदे जुहोति" "कर्मण्यण्" "आतोऽनुपसर्गे कः" इत्यादौ शीघ्रप्रवृत्तेन विशेषशास्त्रेण सामान्यशास्त्रस्य तदन्यमात्रविषयत्वरूपबाधाङ्गीकारादेकवाक्यत्वासम्भवाच्चासङ्गतिः स्यादिति ज्ञेयम्। यद्यपि पर्युदासपक्षे अक्ङितीत्यस्य विधिविशेषणतया न निषेधत्वम्; तथापि अङ्गीकृत्य निषेधत्वम्। भूताकारविषयत्वं निराह—चितमित्यादिना। शब्लुकि तु अनवकाशत्वात् भूतनिवर्तकत्वमङ्गीक्रियत इत्याह—अदिप्रभृतिभ्य इति। सतो निवर्तने शब्दनित्यत्वसिद्धान्तविरोधः; अत आह—प्रक्रियायामिति। वस्तुतस्तत्रापि न सतो निवृत्तिः क्रियते; किं तु लुग्विधानद्वारा [2] शपोऽनुत्पत्तिरेवान्वाख्यायत इत्याशयः। प्रसक्तानभिनिर्वृत्तस्य निषेधपक्षेऽप्यतिप्रसङ्गमाशङ्कते—यदीति। अनुबन्धानामेकान्तत्वमाश्रित्य परिहरति—नैष इति। गुण (इति) रूपेण अकारमात्रस्वरूपेण। यद्वा, गुणरूपेण गुणशब्देन; द्वितीयगुणवृद्धिग्रहणानुवृत्त्या गुण इति यो गुणः वृद्धिरिति या वृद्धिस्ते क्ङिति न भवत इति सूत्रार्थः। तथा चानुबन्धानामनेकान्तत्वपक्षेऽपि नोक्तदोष इत्यर्थः। गुणस्य बहिरङ्गत्वमुपपादयति—वेञ इति; यजादित्वात् संप्रसारणे "अकृत्सार्वधातुकयोः" इति दीर्घे च कृते इति ज्ञेयम्। उभयेति; उभयपदसंबन्धिवर्णाश्रयत्वादित्यर्थः। यकृपरत्वनिमित्तः प्रतिषेधोऽन्तरङ्गः। यद्यपीग्लक्षणयोर्गुणवृद्ध्योः प्रतिषेधस्तथापि परिहारान्तरसद्भावादेतन्नाश्रितमित्युक्तमिति भावः। अजाद्यङ्गं बाह्यप्रत्ययविशेषञ्चापेक्षत इति आटो बहिरङ्गत्वम्। एवं लोयमानिरित्यादौ बाह्यप्रत्ययापेक्षत्वाद्वृद्धिर्बहिरङ्गा, यगपेक्षो निषेधोऽन्तरङ्गः। नेनिक्त इत्यत्र व्यवधानेन [3] निषेधाप्रसरादुदाहरणत्वमयुक्तम्; अत आह—क्ङित्परत्वेनेति। क्ङित्परस्याङ्गस्य गुणो न भवतीत्यभ्यासगुणस्य निषेधः। [4] नेनेक्तीत्यत्राभ्यासगुणः सावकाश इति भावः। ननु कार्यी क्ङित्परत्वेन विशेषणीयः। अभ्यासश्च कार्यी। तस्य च न तत्परत्वमिति कथं निषेधः; अत आह—अङ्गस्य कार्यित्वादिति। अभ्याससम्बन्धिनां निजां त्रयाणामङ्गानां गुण इति सूत्रार्थेऽङ्गस्य कार्यित्वादित्यर्थः। उत्तर इति; निजामित्यभ्यासविशेषणम्, अन्यथाऽभ्यासस्य गुणो न स्यात्। ननु विधिबलात् तत्सिद्धिः। न च 'नेनिक्ते' इत्यत्र निषेधोल्लङ्घनेनोपधागुणार्थं "निजाम्" इति विधिः स्यादिति वाच्यम्; 'नेनिक्ते' इत्यादावभ्यासगुणविधानेन चरितार्थस्याङ्गसंबन्धिगुणः कोऽपि क्ङिति परतो न भवति, निषेधोल्लङ्घने मानाभावादिति चेत्, अत्राहुः। "अत्र लोपोऽभ्यासस्य" इत्यतोऽनुवृत्तस्य इतः प्रागूर्ध्वं च कार्यी। तस्मादङ्गविशेषणत्वे मानाभावादत्रापि स एव कार्यीति। तस्य चेति। यस्य गुणः स एव क्ङित्परत्वेन विशेष्यत इति भावः।

---

[1] मीमांसा - अ - X 8 - ।

[2] ख—अनिर्वृत्तिः

[3] ख—अनुदाहरणत्वम्; अतः

[4] ख—गुणस्य अत्र—

भा.—उपधार्थेन तावन्नार्थः। धातोरिति वर्तते। धातुं क्ङित्परत्वेन विशेषयिष्यामः। यदि धातुर्विशेष्यते, विकरणस्य न प्राप्नोति 'चिनुतः, सुनुतः, लुनीतः, पुनीतः' इति। नैष दोषः। विहितविशेषणं धातुग्रहणम् 'धातोर्यो विहितः' इति। धातोरेव तर्हि न प्राप्नोति। नैवं विज्ञायते 'धातोर्विहितस्य क्ङिति, इति। कथं तर्हि? 'धातोर्विहिते क्ङिति' इति। अथवा कार्यकालं संज्ञा-परिभाषम्, यत्र कार्यं तत्र द्रष्टव्यम्। 'पुगन्तलघूपधस्य गुणो भवति' इति उपस्थितमिदं भवति 'क्ङिति न' इति। अथवा यदेतस्मिन् योगे क्ङिद्ग्रहणं तदनवकाशम्। तस्यानवकाशत्वाद् गुणवृद्धी न भविष्यतः। अथवा आचार्यप्रवृत्तिर्ज्ञापयति 'भवत्युपधालक्षणस्य गुणस्य प्रतिषेधः' इति। यदयम् "त्रसि-गृधिधृषिक्षिपेः क्नुः", "इको झल् हलन्ताच्च" इति क्नुसनौ कितौ करोति। कथं कृत्वा ज्ञापकम्? कित्करण एतत् प्रयोजनम् 'गुणः कथं न स्यात्' इति। यदि चात्र गुणप्रतिषेधो न स्यात् कित्करणमनर्थकं स्यात्। पश्यति त्वाचार्यः 'भवत्युपधालक्षण-स्यापि गुणस्य प्रतिषेधः' इति। ततः क्नुसनौ कितौ करोति।

प्र.—धातुं क्ङित्परत्वेनेति। "न धातुलोपे" इत्यत्रोपसर्जनेऽपि धातौ धातुशब्दमात्रस्य स्वरितत्वादिहानुवृत्तिरित्यर्थः। यदीति। क्ङित्यनन्तरस्य धातोर्गुणवृद्धी न भवत इति वाक्यार्थं मत्वा प्रश्नः। धातोरेवेति। धातोर्विहितस्य क्ङित्यनन्तरे नेति मत्वा प्रश्नः। धातो-र्विहित इति। धातोर्विहिते क्ङित्यनन्तरो यो धातुर्विकरणो वा तस्य प्रतिषेध इत्यर्थः। अथवेति। यत्र गुणवृद्धी विधीयेते तत्र 'क्ङिति न' इत्युपतिष्ठते इत्येवमियं परिभाषा भवति। तत्र 'पुगन्तलघूपधस्य' इत्यत्रास्या उपस्थाने सति 'येन नाव्यवधानम्' इति 'भिन्नम्' इत्यादौ निषेधो भविष्यति। अथवेति। मा भूत् परिभाषा तथापि प्रतिषेधस्य प्रतिषेध्यापेक्षायां यावन्तो यादृशाः प्रतिषेध्यास्तावन्ति प्रतिषेधसूत्राणीति पुगन्तलघूपधगुणे प्रतिषेध्येऽनवकाशः प्रतिषेधो व्यवहितेऽपि प्रवर्तते। अथवा

यथोद्देशपक्षाश्रयेण भाष्यम् । तथा हि—प्रधानान्यात्मसंस्काराय संनिधीयमानानि गुणभेदं प्रयुञ्जत इति यदेतस्मिन्नित्युक्तम् । अथवेति । लिङ्गान्निर्दिष्टाङ्गविकला तस्मिन्निति परिभाषोपतिष्ठत इत्यर्थः । अनेकपरिहारोपन्यासो न्यायव्युत्पादनार्थः ।

उ.—स्वतन्त्रस्य धातोरित्यस्याभावात् समासैकदेशस्य चाननुवर्तनाद्वर्तेत इत्ययुक्तम् ; अत आह—धात्विति । शब्दाधिकारपक्षाश्रयणाच्चे (त्यपी) त्यर्थः । क्ङिपरत्वेनेति भाष्ये बहुव्रीहिः । तेन धातोर्विहिते क्ङिति परेऽनन्तरस्य यस्य कस्यापि गुणो न भवतीति सूत्रार्थ इति भावः । एवं स्थिते शङ्कानुत्थानाद्भ्रान्त्या तदुत्थानमाह—क्ङित्यनन्तरस्येति । क्ङिपरत्वेनेति भाष्यस्य क्ङित्यनन्तरो यो धातुस्तस्य गुणवृद्धी न भवत इत्यर्थं मत्वेत्यर्थः । विहितविशेषणमिति ; भाष्ये धातोर्यो विहितः क्ङित् तस्मिन् परतः यस्य कस्यापि गुणवृद्धी न भवत इत्यभिमतमित्यर्थः । उक्तरीत्या धातोरपि निषेधसिद्धेरियमपि भ्रान्तस्य शङ्केत्याह—धातोर्विहितस्येति । विकरणस्येत्यर्थः । ननु निषेधस्य कथं परिभाषात्वम् ; अत आह—यत्रेति ; निषेध्यगुणवृद्ध्योरत्र विध्यभावाद्यत्र तद्विधिस्तत्रास्योपस्थानमिति गुणवृद्धिलिङ्गिकेयमपि परिभाषेत्यर्थः । परिभाषापक्षे 'भिन्नम्' इत्यादौ निषेधसिद्धिमाह—तत्रेति ; परिभाषात्वे सतीत्यर्थः । ननु पूर्वस्मात् कोऽस्य भेदः ? 'चितम्' इत्यादौ सावकाशत्वादनवकाशमित्ययुक्तम् ; अत आह—मा भूदिति । यादृशाः व्यवहिता अव्यवहिता वा । परिभाषात्वपक्षेऽपि योजयितुमाह—अथवेति । अङ्गानां प्रधानसंस्कारकत्वात् स्वसंस्काराभावे संनिहितानि प्रतिप्रधानमङ्गावृत्तिन्यायेन भेदं प्रयुञ्जत इत्यर्थः । नन्वत्र तस्मिन्निति परिभाषोपतिष्ठते, न वा ? आद्ये कथं व्यवहिते निषेधः । द्वितीये फलतो निमित्तसप्तम्येव स्यान्न परसप्तमी ; अत आह—लिङ्गादिति ; ज्ञापकादित्यर्थः । नन्वेवं नेनिक्त इत्यभ्यासगुणस्यापि निषेधः स्यादिति चेत् ; अत्राहुः—निर्दिष्टाङ्गसहितैव परिभाषोपतिष्ठते । लिङ्गाद् एकवर्णव्यवधानव्यतिरिक्तमनेकवर्णव्यवधानं निर्दिष्टग्रहणेन वार्यते । निर्दिष्टाङ्गविकलेत्यस्य निर्दिष्टशब्दोक्तात्यन्ताव्यवधानप्रतिपादनविकलेत्यर्थः ; न तु निर्दिष्टग्रहणरहितैवेत्यर्थ इति । वस्तुतो लिङ्गादुपधागुणनिषेधो ज्ञाप्यत इति तत्त्वम् । व्युत्पत्तिः प्रतिपत्तिः । श्रोतॄणामनेकन्यायज्ञापनार्थ इत्यर्थः ।

**भा.**—**रोरवीत्यर्थेनापि नार्थः । क्ङितीत्युच्यते, न चात्र क्ङितं पश्यामः । प्रत्ययलक्षणेन प्राप्नोति । "न लुमता तस्मिन्" इति प्रत्ययलक्षणप्रतिषेधः । अथापि "न लुमताङ्गस्य" इत्युच्यते, एवमपि न दोषः । कथम् ? न लुमता लुप्तेऽङ्गाधिकारः प्रतिनिर्दिश्यते । किं तर्हि ? योऽसौ लुमता लुप्यते तस्मिन् यदङ्गं तस्य यत् कार्यं तन्न भवति इति । अथाप्यङ्गाधिकारः प्रतिनिर्दिश्यते, एवमपि न दोषः । कथम् ? 'कार्यकालं**

संज्ञापरिभाषम्' यत्र कार्यं तत्र द्रष्टव्यम्। "सार्वधातुकार्धधातुकयोर्गुणो भवति' इति, उपस्थितमिदं भवति 'क्ङिति न' इति। अथवा छान्दसमेतत्। दृष्टानुविधिश्छन्दसि भवति। अथवा बहिरङ्गो गुणः, अन्तरङ्गः प्रतिषेधः। 'असिद्धं बहिरङ्गमन्तरङ्गे'। अथवा पूर्वस्मिन् योगे यदार्धधातुकग्रहणं तदनवकाशम्। तस्यानवकाशत्वाद्गुणो भविष्यति।

भा.—इह कस्मान्न भवति 'लैगवायनः, कामयते'?

॥ वा ॥ तद्धितकाम्योरिक्प्रकरणात् ॥

भा.—इग्लक्षणयोर्गुणवृद्ध्योः प्रतिषेधः। न चैते इग्लक्षणे।

प्र.—बहिरङ्ग इति। ततश्चासिद्धत्वादसत्वान्निषेधानुपपत्तिरित्यर्थः। अथवेति। ननु बहुव्रीह्यर्थमुभयविशेषणायार्धधातुकग्रहणं स्यादिति कथमनवकाशत्वम्। उच्यते। विनाप्यार्धधातुकग्रहणेन बहुव्रीहिर्लभ्यते; यथा "एकाचो द्वे" इत्यत्र। 'रोरवीति' इत्यत्रानैमित्तिकत्वाल्लोपस्य गुणनिषेधः पूर्वेण न प्राप्नोतीत्यार्धधातुकग्रहणसामर्थ्यात् सूत्रान्तरप्राप्तोऽपि निषेधो बाध्यत इत्यर्थः। यङ्निमित्तश्च निषेधोऽन्तरङ्गत्वाद्बाध्यते, न सार्वधातुकनिमित्त इति रोरुत इत्यादौ निषेधो भवत्येव। एतच्च छान्दसत्वमभ्युपेत्य यङ्लुको भाष्यकारेणोक्तम्। भाषाविषयत्वे तु यङ्लुको बहूनि प्रयोजनानि आर्धधातुकग्रहणस्य संभवन्ति। तोतोर्ति, तोथोर्ति, दोदोर्ति, दोधोर्ति, जोहोर्ति, मोमोर्ति इत्यादिषु 'तुर्वी,थुर्वी,दुर्वी,धुर्वी' इत्यादिभ्यो यङ्लुकि तिपि वकारच्छकारयोः "राल्लोप" इति लोपे कृतेऽसत्यार्धधातुकग्रहणे [1]बहुव्रीहावाश्रिते "न धातुलोप" इति गुणनिषेधः प्राप्नोति स मा भूदित्येवमर्थमार्धधातुकग्रहणं स्यात्। अनेन चात्र व्यवधानान्नास्ति निषेध इति सति प्रयोजने कथमनवकाशं स्यात्। इग्लक्षणयोरिति; इक इत्येवं ये गुणवृद्धी तयोर्निषेध इत्यर्थः।

---

[1] बहुव्रीहावप्याश्रिते।

उ.—भाष्ये—अङ्गाधिकार इति; स्वरितलिङ्गयुक्ताङ्गस्येति निर्देशेनेत्यर्थः। भाष्ये—यदङ्गमिति; स्वरितलिङ्गरहितस्यैव न लुमतेति सूत्रे निर्देश इत्यर्थः। भाष्ये—कार्यकालमिति; तथा च गुणनिषेधस्याप्यङ्गाधिकारस्थत्वात् "न लुमता" इति प्रत्ययलक्षणप्रतिषेधसिद्धिरित्यर्थः-यथोद्देशपक्षेऽप्याह—भाष्ये—अथवा छान्दसमिति; "यङोऽचि च" इति चकारेण बहुलं छन्दसीत्यनुकृष्य लुग्विधानादित्यर्थः। भाष्ये—बहिरङ्ग इति; तिबाश्रयो गुणो बहिरङ्गः, यङाश्रयः प्रतिषेधोऽन्तरङ्गः। अन्तरङ्गेण बहिरङ्गस्य सुतरां बाधनं भवति; अत आह—ततश्चेति। असिद्धत्वादित्यसत्त्वे हेतुः। प्रसक्तस्यैव निषेधो नाप्रसक्तस्येति भावः। उभय' विशेषणाय बहुव्रीह्यर्थमित्यन्वयः। अनवकाशत्वम् [1]अप्रयोजनकत्वम्। यथेति। प्रथमस्येत्येतदेकाचो विशेषणं 'जजागार' इत्यादौ द्वितीयस्य द्वित्वनिरासाय। नासावन्यपदार्थ इति भावः। ननु 'न [2]धातुलोपे' इति निषेधस्य सार्वधातुकनिमित्तगुणाद्व्यावर्तने आर्धधातुकग्रहणस्य चरितार्थत्वात् सूत्रान्तरप्राप्तनिषेधव्यावर्तकत्वं न संभवतीति; अत आह—रोरवीतीत्यत्रेति। अत्र लोपनिमित्तप्रत्ययनिमित्तकस्य गुणस्य निषेधः। अनैमित्तिकलोपस्थले निषेधो न प्रवर्तेत इत्यार्धधातुकग्रहणमतिरिच्यमानं सूत्रान्तरप्राप्तनिषेधार्थं संपद्यते। अत्र योगविभागः क्रियते। 'न धातुलोपे' गुणवृद्धी भवत इत्येको योगः। ततः 'आर्धधातुके' इत्यपरः। तत्र न धातुलोप इत्यनुवर्तते। षष्ठीसमास आश्रीयते। तथा च [3]धात्वेकदेशलोपनिमित्तगुणवृद्धिनिषेधो यदि स्यात्तर्हि आर्धधातुक एवेत्यर्थलाभात्सार्वधातुके गुणवृद्धिप्रतिषेधो निवार्येत इति "क्ङिति च" इत्यस्यापि सिद्धिरित्यभिप्रेत्य सामर्थ्यादित्युक्तम्। पूर्वेण "न धातुलोपे" इत्यनेन। प्राप्नोतीति; अनेन सूत्रान्तरप्राप्तोऽपीत्यन्वयः। पूर्वेण प्राप्तौ[4] लोप स्यानैमित्तिकत्वं हेतुः। धात्वेकदेशलोपनिमित्तो नियमस्तदेकदेशाश्रितगुणनिषेधस्यैव निवर्तको,[5] न तु निषेधान्तरस्येत्याह—यन्निमित्त इति। भाषाविषयत्व इति; "हुश्नुवोः सार्वधातुके" इति हुश्नुग्रहणाद्भाषायामपि यङ्लुगस्तीति ज्ञाप्यते। अनेकाचोऽङ्गस्यासंयोगपूर्वोवर्णस्याजादौ सार्वधातुके यण्विधौ हुश्नुवोरेवार्थाद्भविष्यति। न हि लोके यङ्लुगन्तादन्यदनेकाजुवर्णान्तमसंयोगपूर्वं सार्वधातुकेऽस्ति। छन्दसि तु "छन्दस्युभयथा" इत्यार्धधातुकत्वादेव यणोऽप्रसङ्गाल्लोकेऽपि यङ्लुगस्तीति ज्ञाप्यते। 'योयुवति' इत्यादौ यण् मा भूदिति हुश्नुग्रहणमर्थवद्भवति। तुर्व्यादयो हिंसार्थाः। आदिना 'हुर्छा कौटिल्ये, मुर्वी बन्धने' इत्यनयोर्ग्रहणम्। [6]मुर्छेस्तु 'मोमूर्ति' इत्येव भवितव्यम्, गुरूपधत्वेन गुणाप्रसङ्गात्। [7]बहुव्रीहावाश्रितेति। छ्वकारलोपस्य झलादिप्रत्ययनिमित्तत्वात्। "राल्लोपः" इत्यत्र क्ङितीति नानुवर्तेत इति भावः। गुणनिषेधः लघूपधगुणनिषेधः। नन्वार्धधातुकग्रहणात् "न धातुलोपे" इति [8]निषेधाप्रवृत्तावपि "क्ङिति च" इत्यनेन निषेधः स्यात्, तथा चार्धधातुकग्रहणेनायमपि निषेधो न प्रवर्तनीय एव;

---

[1] क—अप्रयोजकत्वम्।
[2] ख—धातुलोपविशेषकस्य।
[3] ख—लोपे गुण-
[4] ख—"स्य नैमि"
[5] ख—सन्निधानाभावात् न।
[6] क, ख—मूर्च्छेस्तु।
[7] ख—श्रितेऽपीति।
[8] ख—धाप्राप्तावपि।

इत्यत आह—अनेन चेति । यङाश्रयनिषेधेऽन्तरङ्गे कर्तव्ये तिबाश्रयस्य शब्लोपस्य बहिरङ्गस्यासिद्धत्वेन द्वाभ्यां व्यवधानात् "क्ङिति च" इति निषेधो न प्रवर्तते, सनः कित्त्वेन लिङ्गेनैकवर्णमात्रव्यवधाने निषेधप्रवृत्तेर्ज्ञापनादित्यर्थः । "ओर्गुणः" इत्यस्येग्लक्षणत्वात् 'लैगवायन' इति न सिद्ध्येत्; अत आह—इक इत्येवमिति । निर्दिष्टस्थानिकत्वेनात्वेक्परिभाषा नोपतिष्ठत इति भावः ।

**॥ वा ॥ लकारस्य ङित्त्वादादेशेषु स्थानिवद्भावप्रसङ्गः ॥**

**भा.—लकारस्य ङित्त्वादादेशेषु स्थानिवद्भावः प्राप्नोति । 'अचिनवम्, असुनवम्, अकरवम्' ।**

**॥ वा ॥ लकारस्य ङित्त्वादादेशेषु स्थानिवद्भावप्रसङ्ग इति चेद्यासुटो ङिद्वचनात् सिद्धम् ।**

**भा.—यदयं यासुटो ङिद्वचनं शास्ति तज्ज्ञापयत्याचार्यः 'न ङिदादेशा ङितो भवन्ति' इति । यद्येतज्ज्ञाप्यते, कथम् "नित्यं ङितः" "इतश्च" इति? ङितो यत् कार्यं तद्भवति, ङिति यत् कार्यं तन्न भवतीति । किं वक्तव्यमेतत्? न हि । कथमनुच्यमानं गंस्यते? यासुट एव ङिद्वचनात् । अपर्याप्तश्चैव हि यासुट् समुदायस्य ङित्त्वे, ङित्तं चैनं करोति । तस्यैतत् प्रयोजनम् 'ङितो यत् कार्यं तद्यथा स्यात्, ङिति यत् कार्यं तन्मा भूत्' इति ॥ क्ङिति च ॥ ५ ॥**

प्र.—लकारस्येति । अनुबन्ध इत्संज्ञकत्वाल्लोपात् स्थानिनि न सन्निधीयत इत्यनल्विधाविति निषेधो न प्रवर्तते । 'पिद् ङिन्न भवति, ङिच्च पिन्न भवति' इति भाष्यकारस्य कल्पना न वार्तिककारस्येति दोषोपन्यासः । कथं नित्यं ङित इति । ननु ङितो लकारस्येति तत्रार्थः स्थितः, न तु ङित आदेशस्येति । अन्यथा पचावः पचन्ति इति लोपः स्यात् । एवं मन्यते यासुटो ङित्त्वेन ज्ञापकेन स्थानिन एव लकारस्य ङिद्व्यपदेश उच्छिद्यते । ङकारोच्चारणं तु "लुङ्लङ्लृङ्क्षु" इत्यादौ विशेषणार्थं स्यात् । ङितो यदिति । स्थानिवद्भावेन लादेशे ङिति यत् कार्यं पूर्वस्य तन्न भवतीति ज्ञाप्यते, न तु स्थानिन एव ङिद्व्यपदेश उच्छिद्यते । अन्यथा "नित्यं ङितः" इत्येतन्निर्विषयं स्यात् ।

यासुट एवेति। ङितो यत् कार्यं तद्यासुटो न किञ्चिदतिदेष्टव्यमस्ति। किं तु ङिति यत्कार्यं विधीयते संप्रसारणादिकं तदतिदिश्यते। तच्चेत् स्थानिवद्भावेन स्यादतिदेशोऽनर्थकः स्यादित्यतिदेशः क्रियमाणो ङिति यत्कार्यं तदभावस्यैव ज्ञापकः। अपर्याप्तश्चेति। समुदायस्य ङिद्व्यपदेशे कर्तव्ये यासुडसमर्थः। यासुट एव ह्यनेन ङित्वं क्रियते, न समुदायस्य। "क्ङिति च" इत्यत्र तन्निमित्तग्रहणस्य प्रत्याख्यातत्वादगुणनिमित्तेऽपि यासुटि ङिति गुणनिषेधः सिद्ध्यति। यदि च समुदाये स्थानिवद्भावेन ङित्कार्यमभविष्यद् यासुटो ङित्वं न व्यधास्यत्। विहितं तज्ज्ञापयति 'ङिति यत्कार्यं तद्धादेशे न भवति' इति। केषाञ्चित्पाठः—सुपर्याप्तश्चैव हीति। तत्रावयवङित्वद्वारेण समुदाये ङित्वं विधीयत इति व्याख्येयम्। एवं हि क्ङितीति निमित्तसप्तमीपक्षेऽपि गुणनिषेधः सिद्ध्यति। अस्मिन् पक्षे 'ङितं चैनं करोति' इति समुदायः परामृश्यते।

उ.—लोपात्; अतिदेशात्प्रागित्यर्थः। अनल्विधाविति। स्थान्यलाश्रितकार्ये स्थानिवद्भावप्रतिषेधः अनुबन्धस्य स्थान्यल्त्वाभावान्न स्थानिवद्भावनिषेध इत्यर्थः। ननु "सार्वधातुकमपित्" इत्यत्र योगविभागेन प्रसज्यप्रतिषेधाश्रयेण 'पिच्च ङिन्न भवति' इति वक्ष्यते। योगविभागेन या काचित् प्राप्तिः स्थानिवद्भावेनान्यथा वा सा सर्वापि निषिद्ध्यत इति कथं स्थानिवद्भावेन पिति ङित्वशङ्का; अत आह—पिदिति। ङिच्च पिन्न भवतीत्येतत् प्रसङ्गादुक्तं प्रकृतानुपयोगात्। ननु ङित इति। तथा च स्थानिवद्भावेन ङित्वं न प्रार्थनीयमिति भावः। अन्यथेति; "सार्वधातुकमपित्" इत्यादेशस्य ङित्वादित्सलोपौ स्यातामित्यर्थः। उच्छिद्यत इति; स्थानिवद्भावशास्त्राप्रवृत्तये। स्थानिवद्भावेनादेशस्य ङित्वं नास्तीति ज्ञाप्यत इति यावत्। तर्हि ङकारस्य किं प्रयोजनम्; अत आह—ङकारोच्चारणमिति। स्थानिवद्भावेनेति; अन्यत्र सावकाशस्य स्थानिवद्भावस्य बाधो युक्तः, न त्वनवकाशस्य ङिद्व्यपदेशस्येत्यर्थः। ननु ङितो यत् कार्यं तत् भवति ङिति यत् कार्यं तन्न भवति इति कथं नियमः विनिगमकाभावात्, वैपरीत्यस्यापि संभवाच्च; अत आह—ङित इति। सामर्थ्यात् ङिति[1] इति लभ्यत इत्यर्थः। 'उश्यात्' इत्यादौ संप्रसारणम्। 'चिनुयात्' इत्यादौ गुणनिषेधः आदिग्राह्यः। अतिदेशः ङित्कार्यातिदेशः। अतिदेशः क्रियमाण इति। यादृशकार्यप्राप्तयेऽतिदेशस्तादृशकार्यं स्थानिवद्भावेन न भवतीति ज्ञाप्यत इत्यर्थः। यासुट एव ङिद्वचनादिति भाष्ये एवकारेण समुदायो व्यावर्त्यते। तदेवोपपादयति भाष्ये—अपर्याप्तश्चैव हीति। तस्यार्थमाह—समुदायस्येति। तदुपपादयति—यासुट एवेति।

[1] क—ङित इतीति।

यासुट् ङिच्चेति सामानाधिकरण्यात् स्वरूपवाचकयासुट्छब्दस्य तदादिप्रत्ययलक्षणायां माना-भावादित्यर्थः। ननु चिनुयादित्यादौ गुणनिषेधो न स्यात्। यासुण्मात्रस्य गुणनिमित्तत्वा-भावादत आह—क्ङिति चेत्यत्रेति। अगुणेति; यासुण्मात्रस्य सार्वधातुकत्वाद्यभावादित्यर्थः। ज्ञापकत्वमुपपादयति—यदि चेति। क्ङितीति निमित्तसप्तमीपक्षे यासुण्मात्रस्य ङित्त्वेन गुणादिनिषेधो न प्राप्नोति। संप्रसारणमपि धात्वाक्षिप्ते क्ङिति प्रत्यये विधानान्न यासुण्मात्र-निमित्तकम्; अत आह—केषाञ्चिदिति। अस्मिन् पाठे भाष्ये यासुटो ङिद्वचनादेवेत्येव-कारान्वयः। तत्रावयवेति; यासुट्छब्दे तदादिप्रत्ययलक्षणेत्यर्थः।

## सू.—दीधीवेवीटाम् । १ । १ । ६ ।

**भा.—किमर्थमिदमुच्यते? गुणवृद्धी मा भूतामिति। 'आदीध्यनम्, आदीध्यकः, आवेव्यनम्, आवेव्यकः। अयं योगः शक्योऽकर्तुम्। कथम्?**

**॥ वा ॥ दीधीवेव्योश्छन्दोविषयत्वाद् दृष्टानुविधित्वाच्च छन्दस-श्छन्दस्यदीधेददीधयुरिति च गुणदर्शनादप्रतिषेधः ॥**

**भा.—दीधीवेव्योश्छन्दोविषयत्वात्। दीधीवेव्यौ छन्दोविषयौ। दृष्टानुविधित्वाच्छन्दसः। दृष्टानुविधिश्च छन्दसि भवति। 'अदीधेत् अदीधयुः' इति च गुणस्य दर्शनादप्रतिषेधः, अनर्थकः प्रतिषेधः अप्रतिषेधः। 'प्रजापतिर्वै यत्किञ्चन मनसा अदीधेत्' 'होत्राय वृतः कृपयन्नदीधेत्' 'अदीधयुर्दाशराज्ञे वृतासः'। भवेदिदं युक्तमुदा-हरणम् 'अदीधेत्' इति, इदं त्वयुक्तम् 'अदीधयुः' इति। अयं जुसि गुणः प्रतिषेधविषय आरभ्यते, स यथैव "क्ङिति न" इत्येतं प्रतिषेधं बाधते एवमिममपि बाधेत। नैष दोषः। जुसि गुणः प्रतिषेधविषय आरभ्यमाणस्तुल्यजातीयं प्रतिषेधं बाधते। कश्च तुल्यजातीयः प्रतिषेधः? यः प्रत्ययाश्रयः। प्रकृत्याश्रयश्चायम्। अथवा येन नाप्राप्ते तस्य बाधनं भवति। न चाप्राप्ते क्ङिति नेत्येतस्मिन् प्रतिषेधे जुसि गुण आरभ्यते। अस्मिन् पुनः प्राप्ते चाप्राप्ते च।**

प्र.—छन्दोविषयत्वादिति। भाषायामेतयोः प्रयोगाभावात्। दृष्टानुविधित्वाच्चेति। यद्यपि भाषायामपि दृष्टमेवानुविधीयते 'सिद्धे

शब्दार्थसम्बन्धे' इति न्यायात्; तथापि 'आदीध्यनम्' इत्यादिप्रयोगश्छन्दसि नास्ति; दृष्टस्यैव छन्दस्यनुविधानमित्यर्थः, न तु च्छन्दस्येव दृष्टानुविधानमिति। अथवा दृष्टानुविधिरित्यस्यायमर्थः,—गुणश्छन्दसि दृश्यते न तु सर्वत्र गुणनिषेध इति अदीधेदिति। लङ्, व्यत्ययेन तिप्। अदीधयुरिति। 'जाक्षित्यादयः षट्' इत्यभ्यस्तत्वाज्जुसादेशो झेः। प्रकृत्याश्रयश्चायमिति। ततश्चान्तरङ्गत्वादनेनैव भाव्यमित्यर्थः। येन नाप्राप्त इति। कार्यविशेषचिन्तापेक्षायामयं न्यायो न तु कार्यसामान्यं बाध्यमित्यस्यापेक्षायामेतन्न्यायावतारः।

उ.—भाष्ये दीधीवेव्योः ल्युण्वुलौ, गुणवृद्धिनिषेधे "एरनेकाचः" "इति यण्। अनन्यभावो विषयशब्दार्थ [1] इत्याह—भाषायामिति। आदीध्यनमिति। तथा च लक्ष्याभावाल्लक्षणानुपयोग इत्यर्थः। दृष्टस्यैवेति। भाषायां तु प्रयोगे संप्रत्यदृष्टस्यापि व्याकरणान्तरदृष्टस्यानुविधानं संभवतीत्यर्थः। अनुपयोगकथनपरतया व्याख्यायातिव्याप्तिकथनपरतया वार्तिकं व्याचष्टे—अथवेति। सर्वत्रेत्यनेन छन्दसि क्वचित् 'आदीध्यनम्' इति सत्त्वेऽपि छान्दसो गुणाभाव इति संभवात् सूत्रवैयर्थ्यमेवेति सूचितम्। ङित्वादात्मनेपदेन भाव्यम्; अत आह—व्यत्ययेनेति। भाष्ये—इममपीति। ततश्च नायमस्यातिव्याप्तिविषय इति भावः। ननु निषेधविषय आरभ्यमाणस्यात्रान्तरविशेषमनादृत्य सामान्येनैव बाधकत्वं स्यादत आह—ततश्चेति; प्रकृत्याश्रयत्वादित्यर्थः। अन्तरङ्गो निषेधो बहिरङ्गं गुणं बाधत इत्यर्थः। केचित्तु "दीधीवेवीटाम्" इति निषेधस्यापवादत्वात् जुसि गुणो बाधको मा भूत्, परत्वात्तु बाधकः किं न स्यात्; अत आह—ततश्चेति। "क्ङिति च" इत्यस्य "दीधीवेवीटाम्" इति बाधकोऽस्तु जुसि गुणो वेति विशयेऽन्तरङ्गत्वादयमेव बाधकः। तथा च "क्ङिति च" इत्यस्याप्राप्तौ तद्विषये आरभ्यमाणो जुसि गुणो न स्यादित्यर्थः इत्याहुः। तत्र परत्वात् "क्ङिति च इत्येतदपि सार्वधातुकादिगुणो बाधेतेति शङ्का तावत् कोमला; "क्ङिति च" इति निषधाभावेऽप्येतन्निषेधबाधनाय जुसि गुणारम्भसंभवात् समाधिरपि कोमल इति चिन्त्यम्। अयं न्यायोऽत्र पाक्षिक इत्याह—कार्यविशेषेति। भेदनिबन्धनो ह्ययं न्यायः निषधद्वयस्यापि प्रत्येकं बाध्यत्वे प्रवर्तते। निषेधत्वेन सामान्येन बाध्यत्वे तस्यैकत्वान्न प्रवर्तत इत्यर्थः। भाष्ये—अप्राप्ते चेति; दीधीवेवीभ्यामन्यत्रेत्यर्थः।

---

[1] ख—इत्याशयवानाह।

भा.—यदि तर्ह्ययं योगो नारभ्यते कथम् 'दीध्यत्' [1] इति?।

॥ वा ॥ दीध्यदिति च श्यन् व्यत्ययेन ॥

भा.—दीध्यदिति श्यन्नेष व्यत्ययेन भविष्यति। इटश्चापि ग्रहणं शक्यमकर्तुम्। कथम्—'अकणिषम्, अरणिषम्, कणिता श्वः, रणिता श्वः' इति? "आर्धधातुकस्येड्वलादेः" इत्यत्रेडित्यनुवर्तमाने पुनरिड्ग्रहणस्य प्रयोजनम् 'इट् इडेव यथा स्यात्। यदन्यत्प्राप्नोति तन्मा भूत्' इति। किं चान्यत् प्राप्नोति? गुणः। यदि नियमः क्रियते 'पिपठिषतेरप्रत्ययः पिपठीः' दीर्घत्वं न प्राप्नोति। नैष दोषः। आङ्गं यत्कार्यं तन्नियम्यते; न चैतदाङ्गम्। अथवा असिद्धं दीर्घत्वम्, तस्यासिद्धत्वान्नियमो न भविष्यति॥ दीधीवेवीटाम्॥ ६॥

प्र.—कथं दीध्यदिति। लेट्, तिप्, "इतश्च लोपः परस्मैपदेषु" इतीकारलोपः, "लेटोऽडाटौ" इति अडागमः। श्यन् व्यत्ययेनेति। श्यनो ङित्वाद्गुणाभावः। "यीवर्णयोर्दीधीवेव्योः" इतीकारलोपः। क्वचित्तु श व्यत्ययेनेति पाठः। तत्र शस्य ङित्वाद्गुणाभावः। "एरनेकाचः" इति यणादेशः। इडित्यनुवर्तमाने इति। "नेड्वशि कृति" इत्यतः। पिपठीरिति। पिपठिषतेः क्विप्। "अतो लोपः" इत्यकारलोपः। षत्वस्यासिद्धत्वात् "ससजुषो रुः" इति रुत्वम्। "पूर्वत्रासिद्धे न स्थानिवत्" इत्यल्लोपस्य रुत्वे स्थानिवद्भावाभावः। आङ्गमिति। अङ्गस्येत्यनुवर्तनादङ्गाधिकारविहितं यद्रूपान्तरमिटस्तदेव निवार्यते 'इडेव यथा स्यात्' इति नियमेनेत्यर्थः। "र्वोरुपधायाः" इति च दीर्घत्वं नाङ्गम्। यत्तु "ग्रहोऽलिटि दीर्घः" इति दीर्घत्वं तद्वचनाद्भवति। पिपठिषि ब्राह्मणकुलानीत्यत्र त्वकारलोपस्य स्थानिवद्भावात् झलन्तत्वाभावान्नुमभावः, तेन पिपठीषीति कथं "सान्तमहतः संयोगस्य" इति दीर्घत्वमिति न चोदनीयम्।

---

[1] वेव्यत् इति च।

'क्वौ विधिं प्रति न स्थानिवत्' इति अर्थो व्यवस्थापयिष्यते, न तु 'क्वौ लुप्तं न स्थानिवत्' इति। अथवेति। इडेवेत्यस्मिन् नियमे दीर्घत्वस्यासिद्धत्वान्नास्ति नियमेन व्यावृत्तिः। ततश्च शास्त्रदृष्ट्याविकृतरूप एवेट्; प्रयोग एव तु विकृतः। 'अलावीत्' इत्यत्र तु "सिज्लोप एकादेशे सिद्धः" इत्यसिद्धत्वनिषेधवचनात् सवर्णदीर्घत्वं भवति।

उ.—श्यनि गुणनिषेधोऽन्यथासिद्ध इत्याह—श्यनो ङित्वादिति। भाष्ये—अकणिषमित्यादि। कणिरणिभ्यां लुङि सिच इडागमः। मिपः "तस्थस्थमिपां" इत्यमादेशः। तत्र लघूपधगुणो न निषिद्ध्येत। आभ्यामेव लुट्। तद्द्योतनाय श्व इत्युक्तिः। "लुटः प्रथमस्य" इति डादेशे, तासेष्टिलोपे कणित्, रणित् आ इति स्थिते लघूपधगुणः प्राप्तोऽनेन निषिद्ध्यते। भाष्ये—इडेव; न तु रूपान्तरं प्रतिपद्यत इत्यर्थः। भाष्ये—अप्रत्ययः; अविद्यमानः प्रत्ययः। क्विबित्यर्थः। स्थानिवदिति; "अचः परस्मिन्" इत्यनेन। स्थानिवत्त्वे पदान्तत्वाभावाद्रुत्वं न स्यात्। [1] आङ्गस्य नियमे ग्रहोऽलिटि दीर्घो न स्यात्; अत आह—यस्त्विति। ग्रह इति। "वृतो वा" इत्यपि संगृहीतं तस्यैव विकल्पविधानात्। पिपठिषीत्यत्र नपुंसकप्रथमाबहुवचने कथं नुमभावः; अत आह—पिपठिषीति। स्थानीति; "अचः परस्मिन्" इत्यनेन। ननु स्थानिवद्भावेऽजन्तलक्षणो नुम् किं न स्यात् इति चेन्न; अजन्तलक्षणो नुमन्त्यादचः परः स्यान्न तु पूर्वस्मादचः पर इति पूर्वविधित्वाभावात् स्थानिवत्त्वाभावात्। अत एव झलन्तलक्षणनुम् आशङ्क्य परिहृतः। नुमभावसाधनस्य प्रयोजनमाह—तेनेति। "सान्तमहतः संयोगस्य" इङ्व्यतिरिक्ते यशांसीत्यादौ सावकाशत्वेनात्र दीर्घप्रापकत्वाभावेन वैयर्थ्याभावात् नुमभावेनैव दीर्घाभावादङ्गस्य दीर्घे व्यभिचारशङ्का नास्तीत्यर्थः। ननु "क्वौ लुप्तं न स्थानिवत्" इत्यतो[2] लोपस्य स्थानिवद्भावाभावात् झलन्तलक्षणनुम् स्यात्; अत आह—क्वौ विधिमिति; व्यवस्थाप्यते न पदान्तेत्यत्र। ततश्च क्विप्रत्ययनिमित्तकार्ये स प्रतिषेधः; नुम् तु न तथेति स्थानिवद्भाव एवेत्यर्थः। नन्वसिद्धत्वे दीर्घस्य प्रयोगो न स्यात्; अत आह—ततश्चेति। पूर्वशास्त्रं प्रत्युत्तरशास्त्रमसिद्धम्, न तु प्रयोगं प्रत्यपि। प्रसज्यमानदीर्घस्य नियमेन निवृत्त्यभावात्प्रयोगो न विरुद्ध इत्यर्थः। ननु पूर्वस्मिन् परिहारे सवर्णदीर्घस्यानाङ्गत्वान्नियमेन न व्यावृत्तिः। अस्मिंस्तु परिहारे नियमे कर्तव्ये तस्य सिद्धत्वात् व्यावृत्तिः स्यात्; अत आह—अलावीदिति। वचनादिति; सवर्णदीर्घार्थं सिद्धत्ववचनं तदभावेऽनर्थकं स्यादिति तद्वचनसामर्थ्यात् दीर्घत्वं संभवतीत्यर्थः।

---

1 क—ख. अङ्गस्य.    2 ख—अल्लोपस्य.

सू.—हलोऽनन्तराः संयोगः । १ । १ । ७ ।

**भा.—अनन्तरा इति। कथमिदं विज्ञायते 'अविद्यमानमन्तरं येषाम्' इति आहोस्वित् 'अविद्यमाना अन्तरा येषाम्' इति? किं चातः? यदि विज्ञायते 'अविद्यमानमन्तरं येषाम्' इति, अवग्रहे संयोगसंज्ञा न प्राप्नोति 'अप्स्वित्यप् सु' इति। विद्यते ह्यत्रान्तरम्। अथ विज्ञायते 'अविद्यमाना अन्तरा येषाम्' इति न दोषो भवति। यथा न दोषस्तथास्तु। अथवा पुनरस्तु 'अविद्यमानमन्तरं येषाम्' इति। ननु चोक्तम् 'अवग्रहे संयोगसंज्ञा न प्राप्नोति 'अप्स्वित्यप् सु' इति; विद्यते ह्यत्रान्तरम्' इति। नैव दोषो न प्रयोजनम्।**

प्र.—कथमिति; किमन्तरशब्दस्य नञा बहुव्रीहिः, अथवा अन्तराशब्दस्येति प्रश्नः। अन्तरं-विवरं, वर्णशून्यकाल इत्यर्थः। अविद्यमाना इति; मध्ये येषामन्ये वर्णा अविद्यमाना इत्याधेयस्य निषेधो न त्वाधारस्य। अवग्रह इति; अर्धमात्राकालोऽवग्रह इष्यते। अर्धमात्राकालं स्थित्वा वर्णान्तरं समुच्चार्यते. तत्र "गुरोरनृतः" इति प्लुतो न भवेत्; नैव दोष इति। दोषनिवृत्तये संज्ञा क्रियते, प्रयोजनाभिनिर्वृत्तये वा; इह चोभयाभावः। अधिकरणवृत्तेः दूराद्धूते संबन्धाभावात्। "विचार्यमाणानाम्" इत्यादौ तु 'वाक्यस्य टेः' इत्यनुवर्तते, न तु 'गुरोरनृतः' इति। अप्सव्यशब्दे दोष इति चेत् नैवंविधे विषये प्रकृत्यवयवस्यावग्रहं पदकाराः कुर्वन्ति। 'अप्सुयोनिः' इत्यादावपि समासघटकपदानामन्तोऽवगृह्यत इति सुशब्दात्पूर्वस्य नास्त्यवग्रहः।

उ.—अनेकवचनान्तस्य बहुवचनान्तस्य वा नञ्बहुव्रीहिरिति विचारशङ्कां वारयति—किमन्तरेति। बहुव्रीहिरिति; "नञोऽस्त्यर्थानाम्" इत्यनेन बहुव्रीहिरुत्तरपदलोपश्च। अन्तरेति; मध्यवाचिनोऽव्ययस्येत्यर्थः। विवरं रन्ध्रं वर्णेषु न प्रसक्तम्; अत आह—वर्णशून्य इति। व्यधिकरणबहुव्रीहिमाह—मध्य इति। केचित्त्वाधारवाचकान्तरशब्दस्य आधेयलक्षकत्वात् समानाधिकरणबहुव्रीहिरेव। मध्य इत्यादि तु तात्पर्यकथनम्, न विग्रहवाक्यमित्याहुः। न त्विति। पूर्वाभेदप्रसङ्गान्न वर्णशून्यकालस्य निषेध इत्यर्थः। अवग्रहे संयोगसंज्ञानङ्गीकारेऽनिष्टमाह—तत्रेति। दोषनिवृत्तय इति; संज्ञिविशेषणानाम-

तिव्याप्त्यादिनिरासः प्रयोजनमित्यर्थः। ननु संज्ञानङ्गीकारे प्लुतो न स्यात्; अत आह— अधिकरणेति; सप्तम्यन्ताप्शब्दस्येत्यर्थः। सूत्रान्तरेणापि प्लुतोऽत्र न संभवतीत्याह— विचार्येति। अप्स्वित्यस्य वाक्यत्वाभावान्न तेन प्रसङ्गः। न त्विति; "विचार्यमाणानाम्" इत्यत्र "गुरोः" इति सूत्रं नानुवर्तते। दूराद्धूतत्वाभावाच्च न तेन प्लुत इत्यर्थः। अप्सव्यशब्द इति; अप्सुशब्दात् भवार्थे दिगादित्वाद्यत्, "अपो योनियन्मतुषु" इत्यलुक्, "ओर्गुणः", "वान्तो यि प्रत्यये" इत्यवादेशः। संभवत्यस्य दूराद्धूतसंबन्ध इति भावः। प्रकृत्यवयवस्य तद्धितप्रकृत्यवयवस्य। अन्त इति; अप्स्वित्युकारान्तस्यावग्रहः न तु पकारान्तस्येत्यर्थः।

## ॥ वा ॥ संयोगसंज्ञायां सहवचनं यथान्यत्र ॥

भा. – संयोगसंज्ञायां सहग्रहणं कर्तव्यम्। 'हलोऽनन्तराः संयोगः सह' इति वक्तव्यम्। किं प्रयोजनम्? सहभूतानां संयोगसंज्ञा यथा स्यात् एकैकस्य मा भूदिति। यथान्यत्र। तद्यथा अन्यत्रापि यत्रेच्छति सहभूतानां कार्यं करोति तत्र सहग्रहणम्; तद्यथा "सह सुपा" "उभे अभ्यस्तं सह" इति। किं च स्याद् यद्येकैकस्य संयोगसंज्ञा स्यात्? इह 'निर्यायात्, निर्वायात्' "वाऽन्यस्य संयोगादेः" इत्येत्वं प्रसज्येत। इह च 'संहृषीष्ट' इति "ऋतश्च संयोगादेः" इतीट् प्रसज्येत। इह च 'संह्रियत' इति "गुणोऽर्तिसंयोगाद्योः" इति गुणः प्रसज्येत। इह च 'दृषत्करोति, समित्करोति' इति "संयोगान्तस्य" इति लोपः प्रसज्येत। इह च 'शक्ता, वस्ता' इति "स्कोः संयोगाद्योरन्ते च" इति लोपः प्रसज्येत। इह च 'निर्यातः, निर्वातः' "संयोगादेरातो धातोर्यण्वतः" इति निष्ठानत्वं प्रसज्येत। नैष दोषः। यत्तावदुच्यते "इह तावत्, 'निर्यायात्, निर्वायात्' 'वान्यस्य संयोगादेः' इत्येत्वं प्रसज्येत" इति। नैवं विज्ञायते 'संयोग आदिर्यस्य सोऽयं संयोगादिः, संयोगादेः' इति। कथं तर्हि? संयोगौ आदी यस्य सोऽयं संयोगादिः, संयोगादेः' इति। एवं तावत् सर्वमाङ्गं परिहृतम्। यदप्युच्यते 'इह च 'दृषत्करोति, समित्करोति' "संयोगान्तस्य" इति लोपः प्रसज्येत' इति; नैवं विज्ञायते

'संयोगोऽन्तो यस्य तदिदं संयोगान्तम्, संयोगान्तस्य' इति। कथं तर्हि ? 'संयोगावन्तौ यस्य तदिदं संयोगान्तम्, संयोगान्तस्य' इति यदप्युच्यते "इह च 'शक्ता, वस्ता' इति 'स्कोः संयोगाद्योः' इति लोपः प्रसज्येत" इति; नैवं विज्ञायते 'संयोगावादी संयोगादी, संयोगाद्योः' इति। कथं तर्हि ? 'संयोगयोरादी संयोगादी, संयोगाद्योः' इति। यदप्युच्यते "इह च 'निर्यातः, निर्वातः' इति 'संयोगादेरातो धातोर्यण्वतः' इति निष्ठानत्वं प्रसज्येत" इति। नैवं विज्ञायते 'संयोग आदिर्यस्य सोऽयं संयोगादिः, संयोगादेः' इति। कथं तर्हि ? 'संयोगावादी यस्य सोऽयं संयोगादिः, संयोगादेः' इति।

प्र.—संयोगसंज्ञायामिति। वृद्धिसंज्ञावदानन्तर्यव्यवस्थितानां हलां प्रत्येकं संयोगसंज्ञा प्राप्नोति। किं च स्यादिति। द्वयोरानन्तर्ये एकैकस्यापि संयोगसंज्ञायां गुरुसंज्ञाप्रतिबद्धकार्यसिद्धिरिति प्रश्नः। निर्यायादिति। सति रेफे यकारः संयोग इति एत्वप्राप्तिः। ननु समुदायस्यापि संज्ञित्वे "अचो रहाभ्यां द्वे" इति यकारस्य द्विर्वचने कृते कस्मादेत्वं न भवति, यथा 'निर्ग्लेयात्' इति। एत्वे कर्तव्ये "पूर्वत्रासिद्धम्" इति द्विर्वचनस्यासिद्धत्वान्नायं दोषः। शक्तेति। तकारे झलि परतः ककारः संयोगो भवत्यादिश्चेति लोपप्रसङ्गः। संयोगाविति। कथं वृत्तावुपसर्जनार्थस्य द्वित्वावगतिरिति चेत् आदिग्रहणसामर्थ्यात्; अन्यथा संयोगादिति वक्तव्यं स्यात्। संयोगात्परो य आकारः तदन्तस्याङ्गस्यैत्वमित्यर्थलाभात्। संयोगावन्ताविति। अत्रापि संयोगस्य लोप इत्येव संयोगेन पदस्य विशेषणात्तदन्तविधौ लब्धेऽन्तग्रहणमाश्रितसंख्याभेदः संयोगो यथा गृह्येतेत्येवमर्थं विज्ञायते। संयोगयोरिति। षष्ठीसमास आश्रीयत इत्यर्थः। संयोगयोरिति। द्विवचननिर्देशः स्कोर्द्वित्वात्तत्समीपयोरपि हलोर्द्वित्वात्कृतः। तेनायमर्थः 'झलि परतो यः संयोगः पदान्ते च यः संयोगः तस्यादिः समीपो यः ककारस्सकारश्च तयोर्लोप इति। न चैवं सति 'शक्ता, वस्ता' इत्यत्र लोपः प्राप्नोति। संयोगादेरात इति। अत्रापि संयोगादात इत्येव संयोगात्परो य आकारस्तदन्ताद्धातोर्नत्वमिति सिद्धे आदिग्रहणं द्वित्वसंख्याश्रयणार्थम्।

उ.—प्रत्येकसंज्ञायां दृष्टान्तः—वृद्धीति। गुरुसंज्ञेति; शिक्षेत्यादौ "गुरोश्च हलः" इत्यप्रत्ययसिद्धिरित्यर्थः। आदिना "असंयोगाल्लिट् कित्" इत्यादिसंग्रहः। ननु रेफः संयोगस्तदादित्वं न धातोरिति कथमेत्वम्; अत आह—सतीति। बहुषु द्वयोः संयोगसंज्ञा नास्तीति न वाच्यमित्याह—यथेति। समाधत्ते—एत्व इति। "असिद्धं बहिरङ्गमन्तरङ्गे' इति नोक्तम्; 'पूर्वं धातुरुपसर्गेण युज्यते' इति पक्षे द्विर्वचनस्यैवान्तरङ्गत्वात्। भाष्ये—दृषत्करोतीति; संयोगान्तस्येति बहुव्रीहिः, पदमन्यपदार्थः। तथा च "अलोऽन्त्यस्य" इति तकारस्य लोपप्रसङ्ग इत्यर्थः। प्रत्येकं संयोगसंज्ञायां स्कोः संयोगावयवत्वासंभवेन संयोगयोराद्यावयवयोरिति षष्ठीसमासासंभवात् कर्मधारयमाह—संयोगो भवत्यादिश्चेति; अर्थात् संयोगस्यैवादिः[1] संपद्यते। न चैवं झलीति व्यर्थम्, भवस्य, क्व[2] इत्यादौ [3]सकारककारलोपाभावाय तत्सार्थक्यादिति भावः। कथमिति; बहुव्रीहेरन्यपदार्थप्रधानतयोभयोरप्युपसर्जनत्वात् समासे एकत्वसंख्याव्यतिरिक्तसंख्याभानस्य मानान्तराधीनत्वादित्यर्थः। अन्यथा; बहुव्रीहौ द्वित्वावगत्यनङ्गीकारे। न च दरिद्रातेरेत्वनिरासाय अङ्गादिसंयोगग्रहणाय तदिति वाच्यम्; तस्यार्धधातुके आलोपविधानेनैत्वाप्रसङ्गात्। नाप्याचारक्विबन्तखट्वादेरेत्ववारणायाङ्गादिग्रहणम्; "स्यसिच्सीयुट्" इत्यतः उपदेश इत्यनुवृत्त्या नामधातुव्यावर्तनात्। यद्यपि न संयोगद्वयस्यादित्वं तथापि आदिस्तत्सहचरितश्चादिशब्देन ग्रहीष्यत इति भावः। भाष्ये नैवं विज्ञायत इति कर्मधारयो निरस्तः, कथं तर्हीत्यादिना षष्ठीसमास उक्तः। तत्र संयोगयोरित्युक्त्या पूर्ववदुपसर्जनार्थद्वित्वप्रतिपादनपरं भाष्यमिति शङ्कां निरस्यति—षष्ठीसमास इति। तर्हि संयोगस्येति वक्तव्यम् न संयोगयोरिति; अत आह—द्विवचनेति। तत्समीपयोरिति; स्कोः संयोगसंज्ञासंपादकयोः। ततः परयोरित्यर्थः। झलीत्यस्य संयोगादिविशेषणत्वे षष्ठीसमासस्य कर्मधारयान्न विशेषः; अत आह—तेनेति; षष्ठीसमासेनेत्यर्थः। यद्यपि संयोग उपसर्जनम्, तथापि झलीति संयोगादिविशेणत्वे आदीति व्यर्थम्; झलि परतः संयोगस्यादित्वाव्यभिचारात्। तथा पदान्तस्यापि संयोगादिविशेषणत्वे आदीति व्यर्थम्; पदान्तयोः सकारककारयोर्हलः परत्वे संयोगान्तलोपात्, हलः पूर्वत्वे आदित्वाव्यभिचारात्। अतो झलि पदान्ते चेति संयोगविशेषणमेवेत्यभिप्रेत्याह—झलीत्यादि। प्रत्येकसंज्ञापक्षेऽवयववाचिन आदिशब्दस्य न षष्ठीसमासः; अत आह—समीप इति। न चैवमिति; झलि परतः संयोगः ककारस्सकारश्च तयोर्न स्वसमीपत्वम्। भेदगर्भत्वात्सामीप्यस्येति भावः। यद्यपि "उपोपसर्गः सामीप्ये तन्प्रतीतिः समाप्यते" इत्यभेदेऽपि सामीप्यमुक्तम्, तथाऽपि व्यवहारदशायां तत्रापि कल्पितभेदेनैव सामीप्यमित्यदोषः। अत्रापि आदिग्रहणाद्द्वित्वलाभ इत्याह—संयोगादात इति।

---

1 ख—गश्चैव।
2 ख—चक्रुः।
3 ख—स्कलोपाभावाय।

भा.—कथं कृत्वा एकैकस्य संयोगसंज्ञा प्राप्नोति? 'प्रत्येकं वाक्यपरिसमाप्तिर्दृष्टा' इति। तद्यथा वृद्धिगुणसंज्ञे प्रत्येकं भवतः। ननु चायमप्यस्ति दृष्टान्तः 'समुदाये वाक्यपरिसमाप्तिः' इति। तद्यथा गर्गाः शतं दण्ड्यन्ताम्। अर्थिनश्च राजानो हिरण्येन भवन्ति। न च प्रत्येकं दण्डयन्ति। सत्येतस्मिन् दृष्टान्ते यदि तत्र प्रत्येकमित्युच्यते इहापि सहग्रहणं कर्तव्यम्। अथ तत्रान्तरेण प्रत्येकमिति वचनं प्रत्येकं गुणवृद्धिसंज्ञे भवतः इहापि नार्थः सहग्रहणेन।

प्र.—कथं कृत्वेति। संयोगसंज्ञाया अन्वर्थत्वात् संयुज्यन्तेऽस्मिन् वर्णा इति समुदायः संयोग इत्यर्थस्याश्रयणात् सहग्रहणं न कर्तव्यमित्यर्थः।

उ.—प्रत्येकं संज्ञामङ्गीकृत्य दोषाः परिहृताः। वस्तुतः समुदायस्यैव संज्ञेत्याह—भाष्ये—कथं कृत्वेति। "मालादीनां च" इति ज्ञापकाद्वचनमन्तरेणापि प्रत्येकं गुणवृद्धिसंज्ञे भवतः! अत्र वचनमन्तरेण कथं समुदायसंज्ञा; अत आह—संयोगसंज्ञाया इति।

भा.—अथ यत्र बहूनामानन्तर्यं किं तत्र द्वयोर्द्वयोः संयोगसंज्ञा भवति? आहोस्विदविशेषेण? कश्चात्र विशेषः?

॥ वा ॥ समुदाये संयोगादिलोपो मस्जेः ॥

भा.—समुदाये संयोगादिलोपो मस्जेर्न सिद्ध्यति। 'मङ्क्ता, मङ्क्तुम्'। इह च 'निग्लेयात्, निग्लायात्, निम्लेयात्, निम्लायात्, इति "वान्यस्य संयोगादेः" इत्येत्वं न प्राप्नोति। इह च 'संस्वरिषीष्ट' इति "ऋतश्च संयोगादेः" इतीट् न प्राप्नोति। इह च 'संस्वर्यते' इति "गुणोऽर्तिसंयोगाद्योः" इति गुणो न प्राप्नोति। इह च 'गोमान् करोति, यवमान् करोति' इति "संयोगान्तस्य लोपः" इति लोपो न प्राप्नोति। इह च 'निग्लानः निम्लानः' इति "संयोगादेरातो धातोर्यण्वतः" इति निष्ठानत्वं न प्राप्नोति।

**भा.—अस्तु तर्हि द्वयोर्द्वयोः संयोगः ।**

**॥ वा ॥ द्वयोर्हलोः संयोग इति चेद् द्विर्वचनम् ॥**

**भा.—द्वयोर्हलोः संयोग इति चेद् द्विर्वचनं न सिद्ध्यति । इन्द्रमिच्छति इन्द्रीयति, इन्द्रीयतेः सन् इन्दिद्रीयिषति । "न न्द्राः संयोगादयः" इति द्विर्वचनं न प्राप्नोति ।**

**॥ वा ॥ न वाज्विधेः ॥**

**भा.—न वा एष दोषः । किं कारणम् । अज्विधेः । न्द्राः संयोगादयो न द्विरुच्यन्ते । अजादेरिति वर्तते ।**

प्र.—आहोस्विदिति; द्वयोरित्यस्य विशेषस्यानाश्रयणाद्बहूनामेवेत्यर्थः । यथा पपाचेत्यत्र समुदायस्यैकाचो द्विर्वचनं नावयवस्यैकाचः । यदा तु द्वयोरेव हलोरानन्तर्यं तदा द्वयोर्भवत्येव । हल इति जातौ बहुवचननिर्देशात् । मङ्क्तेति । "मस्जिनशोर्झलि" इति नुमि कृते नसजानां संयोगसंज्ञा, न तु सजयोरिति सलोपाप्रसङ्गः । निर्ग्लेयादिति । यः संयोगो नासावङ्गादिः यश्चाङ्गादिर्गकारलकारसमुदायो नासौ संयोगः । इन्दिद्रीयिषतीति अत्र द्वौ संयोगौ नदौ दरौ च, तत्र दकारस्य संयोगादित्वाद् द्विर्वचननिषेधप्रसङ्गः । न वाज्विधेरिति अजाश्रयः प्रतिषेधविधिः । अजादेरिति कर्मधारयः । तेनाच आदेः परेऽनन्तरा न्द्रा न द्विरुच्यन्ते । इन्द्रशब्दे तु दकारो नकारेण व्यवहितत्वात् द्विरुच्यत एव ।

उ.—नन्वविशेषेणेत्यस्य द्वयोर्बहूनां चेत्यर्थः; तथा च मस्जेः संयोगादिलोपः सिद्ध एवेति वक्तव्यत्वाभिधानमयुक्तम्; अत आह—द्वयोरिति । समुदायावयवसंनिधौ समुदाये कार्यसंप्रत्यय इत्यत्र दृष्टान्तमाह—यथेति । अनेनिजुरित्यत्र नीत्यस्यैव द्विर्वचने जकारेण व्यवधानाद् जुस् न स्यात् । समुदायद्विर्वचने तु जकारस्याभ्यस्तान्तर्गतत्वात् जुस् सिद्धिः समुदायद्विर्वचनप्रयोजनम् । बहूनामेवेत्येतत् बहुसंनिधावेवेत्याशयेनाह—यदेति । हल इति । बहुवचनान्न द्वयोः संयोगसंज्ञा; अत आह—जाताविति । अनन्तरा इति विशेषणादन्वर्थत्वाङ्गीकाराच्च नैकस्य हलः संयोगसंज्ञेति भावः । भाष्ये—मङ्क्तेति; मस्जेस्तृच्तुमुनौ । तत्र सलोपाप्रसङ्गमुपपादयति—मस्जीति । भाष्ये धातुः पूर्वमुपसर्गेण युज्यत इत्याश्रित्य क्वचित्, क्वचिच्च वाक्ये पदानामुद्धृत्य संस्कारपक्षमाश्रित्य दोषोपन्यासः ।

ननु आदिशब्दस्य समीपवाचकत्वादेत्वं[1] स्यादेव ; अत आह—यः संयोग इति। आदिशब्दोऽवयववाचीत्यर्थः। एवमुत्तरत्रापि ज्ञेयम्। भाष्ये—स्त्ररिषीष्टेति ; स्तृ शब्दोपतापयोः, आशीर्लिङ्, सीयुट् "सुट् तिथोः", षत्वष्टुत्वे, इड्गुणौ। भाष्ये—स्वर्यत इति ; स्वरतेर्यक्। गोमान् करोतीत्यत्र तकारस्य संयोगान्तत्वाभावाल्लोपो न स्यात्। दकारस्य द्वित्वाप्राप्तिमुपपादयति—अत्रेति। विधिशब्दो निषेधपरः, मध्यपदलोपी च समास इत्याह—अजाश्रय इति। अजादेरिति बहुव्रीहौ दकारस्य द्वित्वं न प्राप्नोति ; इत्यत आह—कर्मधारय इति। परत्वं दकारस्यापि ; अत आह—अनन्तरा इति ; "तस्मादित्युत्तरस्य" इत्यत्र निर्दिष्टग्रहणमनुवर्तत इति भावः।

**भा.—अथ यद्येवं बहूनां संयोगसंज्ञा, अथापि द्वयोर्द्वयोः, किं गतमेतदियता सूत्रेण? आहोस्विदन्यतरस्मिन् पक्षे भूयः सूत्रं कर्तव्यम्? गतमित्याह। कथम्? यदा तावद्बहूनां संयोगसंज्ञा तदैवं विग्रहः करिष्यते 'अविद्यमानमन्तरमेषाम्' इति। यदा द्वयोर्द्वयोः संयोगसंज्ञा तदैवं विग्रहः करिष्यते 'अविद्यमाना अन्तरा येषाम्'[2] इति। द्वयोश्चैवान्तरा कश्चिद्विद्यते वा, न वा। एवमपि बहूनामेव प्राप्नोति। यान् हि भवानत्र षष्ठ्या प्रतिनिर्दिशति एतेषामन्येन व्यवाये न भवितव्यम्।**

प्र.—अविद्यमानमिति। बहूनां चाविवरत्वे समुदायाद्द्विर्वचनवद्बहूनामेव संयोगसंज्ञा, न द्वयोर्द्वयोः। अविद्यमाना इति। मध्ये य आधेयः स द्वयोरेव मध्ये भवतीति संसर्गवद्विप्रयोगस्यापि विशेषावगतिहेतुत्वाद्बहुषु द्वयोर्द्वयोः संयोगसंज्ञा भवतीति पक्षः। द्वयोश्चैवान्तरेति। "अन्तरान्तरेण युक्ते" इति द्वितीया कस्मादत्र न भवति। उच्यते। यदा मध्यापेक्षया नियतावधिरूपता[3] विवक्षिता 'त्वां च मां चान्तरा कमण्डलुः, अग्नी अन्तरा, धवखादिरावन्तरेति' तदा द्वितीया। यदा तु नियतावधित्वं न विवक्ष्यते, अपि तु संबन्धमात्रं तदा षष्ठ्येव भवति। तथा[4] न ज्ञायते 'किं तयोरेवावधित्वमुतान्यसहितयोरिति। अवधिनियमाभावात् द्वितीयाया युक्तग्रहणान्नियता-

---

1 ख—वाचित्वात्।

2 अन्तरैषाम्।

3 पत्वं विवक्ष्यते।

4 तदा हि न ज्ञायते।

वधिविवक्षाविषयायाः अभावः। यान् हीति। येषामिति[1] बहुवचननिर्देशादिति न बोद्धव्यम् बहुत्वस्याविवक्षणात्। अन्यथा 'शिक्षा' इत्यादौ द्वयोर्न स्यात्। तस्माद्योसावन्तरा स द्वयोर्भवति न वेति यदुक्तं तत्रोच्यते—यदा द्वयोर्द्वयोरन्तरा न भवति तदा बहवोऽनन्तरा इति तेषामेव प्राप्नोति। यदा हि बहूनां मध्ये भिन्नजातीयोऽज् भवति तदा मा भूत्। तदभावे तु प्रवर्तितव्यमेव बहूनां संज्ञया समुदायाद्द्विर्वचनवदित्यर्थः।

उ.—अनन्तरत्वं वर्णरहितकालशून्यत्वम्, तद्बहूनामपि संभवति। तत्र बहुसंनिधौ बहूनामेव संज्ञा स्यादित्याह—बहूनां चेति। द्वयोश्चेति भाष्यस्य अन्तरा कश्चिद्विद्यते वा न वेति यत्तद्द्वयोर्भवतीति योजनामभिप्रेत्याह—मध्य इति। विद्यत इति [भाष्ये] दृष्टान्तार्थम्। यथा 'अन्तरा कश्चिद्विद्यते' इत्युक्ते द्वयोस्संप्रत्ययः तथा 'अन्तरा कश्चिन्न' इत्युक्तेऽपीत्यभिप्रेत्य संसर्गवदित्युक्तम्। विप्रयोगस्य संसर्गाभावस्य अदण्डमानयेत्यादौ विशेषावगतिहेतुत्वम्। अवधिरूपता; मध्यस्य सप्रतियोगिकत्वात् प्रतियोगिविशेषावधिरूपता। संबन्धमात्रविवक्षायां हेतुमाह—तथा न ज्ञायत इति। अवधिविशेषविवक्षालाभे हेतुमाह—युक्तग्रहणादिति। अन्तरान्तरेणशब्दाभ्यां द्वितीयाविधिनिरासाय युक्तग्रहणमिति न वाच्यम्, अन्तरान्तरेणशब्दयोस्साहचर्येणाव्ययोर्ग्रहणेन "अव्ययात्" इति लुक्संभवेन श्रवणे विशेषाभावात्। न च "सपूर्वायाः प्रथमायाः विभाषा" इत्येतदप्रवृत्तये प्रथमानिरासाय [2]द्वितीयोपयोगः। व्यवस्थितविभाषयापि तदप्रवृत्त्युपपत्तेः। न च द्वितीयान्तेनानयोरर्थतः संबन्धलाभाय युक्तग्रहणम्, विभक्तिविधेः पदविधित्वेन समर्थपरिभाषोपस्थित्या सामर्थ्यलक्षणसंबन्धस्यापि सिद्धेः। तस्मात् संबन्धविशेषप्रतिपादनाय युक्तग्रहणम्, विशेषश्च नियतावधित्वम्; तस्योपलक्षणत्वात्प्रतियोगित्वमपि, 'अन्तरेण प्रयोगम्, अन्तरेण पौरुषम्' इत्यादिप्रयोगदर्शनादित्याहुः। द्वयोश्चेति निर्दिष्टयोर्यानिति निर्देशानुपपत्तेः येषामिति भाष्ये निर्दिष्टानां परामर्शः। सूत्रे हल इति बहुत्वं विवक्षितम् इति केचित्; तन्निरस्यति—येषामिति। शिक्षेति; "गुरोश्च हलः" इत्यप्रत्ययो न स्यादित्यर्थः। तर्हि यानिति कस्य परामर्शः; अत आह—तस्मादिति। द्वयोश्चेतिभाष्यस्यार्थतः पाठः—योऽसाविति। बहूनां संनिधौ बहूनामेव संज्ञा स्यात् न द्वयोर्द्वयोरित्येवं परम् एवमपीति भाष्यमित्याह—यदेति। बहूनां संनिधाववयवसंज्ञावादिना द्वयोर्द्वयोरित्यङ्गीकार्यम्। तथा च यानिति निर्देशोपपत्तिरिति भावः। एतेषामन्येन व्यवाये न भवितव्यमिति भाष्यार्थमाह—यदा बहूनामिति। पूर्वोक्तं स्मारयति—समुदायेति।

---

1 एषामिति। 2 ख—द्वितीयाप्रयोगः।

**भा.—अस्तु तर्हि समुदाये संज्ञा। ननु चोक्तम् 'समुदाये संयोगादिलोपो मस्जेः' इति। नैष दोषः। वक्ष्यत्येतत् 'अन्त्यात्पूर्वो मस्जेः मिदनुषङ्गसंयोगादिलोपार्थम्' इति। अथवा-विशेषेण संयोगसंज्ञा विज्ञास्यते 'द्वयोरपि, बहूनामपि।' तत्र द्वयोर्या संयोगसंज्ञा तदाश्रयो लोपो भविष्यति। यदप्युच्यते 'इह च निर्ग्लैयात्, निर्ग्लायात्, निर्म्लैयात्, निर्म्लायात्' इति "वान्यस्य संयोगादेः" इत्येत्वं न प्राप्नोति' इति; अङ्गेन संयोगादिं विशेषयिष्यामः 'अङ्गस्य संयोगादेः' इति। एवं तावत्सर्वमाङ्गं परिहृतम्। यदप्युच्यते 'इह च गोमान्करोति, यवमान्करोति इति "संयोगान्तस्य लोपः" इति लोपो न प्राप्नोति' इति पदेन संयोगान्तं विशेषयिष्यामः 'पदस्य संयोगान्तस्य' इति। यदप्युच्यते 'इह च निर्ग्लानः, निर्म्लान इति "संयोगादेरातो धातोर्यण्वतः" इति निष्ठानत्वं न प्राप्नोति' इति। धातुना संयोगादिं विशेषयिष्यामः 'धातोः संयोगादेः' इति।**

प्र—अन्त्यात्पूर्व इति। तच्चानुषङ्गलोपार्थमवश्यं वक्तव्यम्। अन्त्यादचः परे नुमि सति अनुपधात्वात् मग्न इत्यत्र नलोपो न स्यात्। कृतेऽपि संयोगादिलोपे तस्यासिद्धत्वादनुपधात्वमेव नकारस्य। अविशेषेणेति। बहुष्वनन्तरेषु द्वयोर्द्वयोरपि भवति बहूनामपीत्ययमिदानीमविशेषः। कार्यार्थत्वात्संयोगसंज्ञाया विरोधाभाव.देकया संज्ञया सर्वेषामनुग्रहासिद्ध्या द्विवचनन वैषम्यादविशेषेणेत्युक्तम्। बहूनाम् सन्निधौ बहूनामेव संयोगसंज्ञेत्यस्मिन् पक्षे आश्रीयमाणे मस्जेर्दोषः "अन्त्यात्पूर्व" इति परिहृतः; शेषान् दोषान् परिहर्तुमाह—यदप्युच्यत इति। 'पाठक्रमादार्थक्रमो बलीयान्' इति 'मस्जेरन्त्यात्पूर्वम्' इत्यस्यानन्तरमिदं द्रष्टव्यम्। निर्ग्लैयादित्यादिषु यद्यपि त्रयो हलः संनिहितास्तथापि कार्यार्थत्वात्संज्ञायास्त्रिषु कार्याभावादङ्गपदधात्ववयवस्य संयोगस्य तेषु तेषु लक्षणेष्वाश्रितत्वात् समुदाये कार्याभावे चावयवानां स्वकार्यारम्भाद् द्वयोरेव संज्ञा प्रवर्तत इति भाष्यार्थः। व्याख्यानान्तरमत्र क्लिष्टत्वान्नोक्तम्।

उ.—एवमपीत्युक्तमङ्गीकरोति भाष्ये—अस्तु तर्हीति। द्वयोः संज्ञापक्षेऽपि अन्त्यात् पूर्वत्वमवश्यं वक्तव्यमित्याह—तच्चेति। अनुषङ्गः नकारः। मग्न इति; टुमस्जो शुद्धौ, निष्ठायां सकारनकारयोर्लोपः, "चोः कुः" इति कुत्वम्, "ओदितश्च" इति निष्ठानत्वम्।

नलोपः "अनिदिताम्" इत्यनेन। ननु द्वयोर्द्वयोः संज्ञापक्षे सकारलोपे नकारस्योपधात्वं स्यात; अत आह—कृतेऽपीति। ननु पूर्वमविशेषेणेत्यस्य बहूनामेवेति व्याख्यानात् द्वयोरपीति भाष्यमयुक्तम्; अत आह—बहुष्विति। द्वयोरपि संज्ञायां हेतुमाह—कार्येति। बहुसंनिधानेऽपि यत्र द्वयोः संज्ञया[1] प्रयोजनं न बहूनां तत्र द्वयोरपि संभवति। समुदायद्विर्वचनवैषम्यमाह—विरोधेति। तत्रावयवद्विर्वचने 'अनेनिजुः' इत्यादौ जुस् न स्यादिति कार्यविरोधः। इह तु न तथा; प्रत्युत कार्यसिद्धिरेवेत्यर्थः। हेत्वन्तरमाह—एकयेति। समुदायद्विर्वचनेऽवयवस्याप्यर्थाद् द्विर्वचनसिद्धिः, नेह समुदायसंज्ञयावयवकार्यसिद्धिरित्यर्थः। अविशेषपक्षे यदप्युच्यत इत्ययुक्तम्; अत आह—बहूनामिति। पाठक्रमादिति; पाठस्यार्थप्रतीत्यर्थत्वेनार्थस्य प्राधान्यादग्निहोत्रयवागूपाकन्यायेनार्थक्रमो बलीयान् इत्यर्थः। इत्यस्यानन्तरम्। इत्यस्य वार्तिकस्यानन्तरम्। अस्मिन्पक्षे बहूनां संनिधौ द्वयोः संज्ञाया अभावात् भाष्यायोगः; अत आह—निर्ग्लेयादित्यादिष्विति। तथापीति। बहूनां संनिधानेऽपि समुदायसंज्ञायाः प्रयोजनाभावेऽवयवे तत्सत्वे संज्ञा भवत्येव, कार्यार्थत्वात् संज्ञाया इत्यर्थः। त्रिषु कार्याभावे हेतुः—अङ्गेति। अङ्गादीनां योऽवयवः संयोगः तदादेस्तदन्तस्य च कार्यं विधीयते। तथा च बहूनामेव संज्ञायां एत्वादिकमत्र न सिद्ध्येदिति[2] प्रयोजनवशात् द्वयोरपि [3]संयोगसंज्ञेत्यर्थः।

केचित्तु पाठक्रमानुरोधेनेदं भाष्यमेवं व्याचक्षते—यदप्युच्यत इत्यादि संयोगादेरित्यन्तं सर्वं भाष्यमुक्तानुवादः। तदसत्। यतोऽविशेषेण संयोगसंज्ञेति समाधानमध्याहर्तव्यम्। न प्राप्नोतीति। इति शब्दो यस्मादर्थे। यतोऽङ्गेन संयोगादिर्विशेष्यते। अङ्गावयवः संयोगो गृह्यते। तथा च बहूनां संनिधौ बहूनामेव संयोगसंज्ञा चेत् समुदायस्याङ्गावयवत्वाभावादेत्वं न प्राप्नोतीति यदित्यनुवादार्थ इति। एवमुत्तरत्रापीति तद्दूषयति—व्याख्यानान्तरमिति। क्लिष्टत्वादिति; दोषाभिधानसमयेऽनुक्तस्याङ्गेन संयोगादिमित्यादेरनुवादाभिधानादनुवादसमाप्त्यर्थत्वेन प्रतीयमानस्येतिशब्दस्य हेत्वर्थताभिधानात्, विशेषणविशेष्यभावप्रकारप्रदर्शनार्थस्योपरितनेतिशब्दस्यावृत्त्यानुवादसमाप्त्यर्थत्वाङ्गीकारात्, समाधानाध्याहाराच्च क्लिष्टत्वं ज्ञेयम्।

**॥ वा ॥ स्वरानन्तर्हितवचनम् ॥**

**भा.— स्वरैरनन्तर्हिता हलः संयोगसंज्ञा भवन्तीति वक्तव्यम् किं प्रयोजनम्? व्यवहितानां मा भूत्; पचति पनसम्। ननु चानन्तरा इत्युच्यते; तेन व्यवहितानां न भविष्यति।**

**॥ वा ॥ दृष्टमानन्तर्यं व्यवहितेऽपि ॥**

**भा.— व्यवहितेऽप्यनन्तरशब्दो दृश्यते। तद्यथा— अनन्तराविमौ ग्रामावित्युच्यते। तयोश्चैवान्तरा नद्यश्च पर्वताश्च भवन्तीति। यदि तर्हि व्यवहितेऽप्यनन्तरशब्दो भवति आनन्तर्यवचनमिदानीं किमर्थं स्यात्?**

---

1 ख—संज्ञायाः। 2 ख—सिद्ध्यतीति। 3 ख—संज्ञेत्यर्थः।

॥ वा ॥ आनन्तर्यवचनं किमर्थमिति चेदेकप्रतिषेधार्थम् ॥

**भा.**—एकस्य हलः संयोगसंज्ञा मा भूदिति। किं च स्यात् यद्येकस्य हलः संयोगसंज्ञा स्यात्? 'इयेष, उवोष' "इजादेश्च गुरुमतोऽनृच्छः" इत्याम् प्रसज्येत।

॥ वा ॥ न वाऽतज्जातीयव्यवायात् ॥

**भा.**—न वा एष दोषः। किं कारणम्? अतज्जातीयस्य व्यवायात्। अतज्जातीयकं हि लोके व्यवधायकं भवति। कथं पुनर्ज्ञायते 'अतज्जातीयकं लोके व्यवधायकं भवति' इति। एवं हि कंचित् कश्चित् पृच्छति 'अनन्तरे एते ब्राह्मणकुले'? इति। स आह 'नानन्तरे, वृषलकुलमनयोरन्तरा' इति।

प्र.—पचति पनसमिति; हल इति वचनादचा सह सकारमकारयोर्मा भूत् संज्ञा, तयोरेव तु प्राप्नोति। ततश्च सलोपप्रसङ्गः। एकप्रतिषेधार्थमिति; अनन्तरा इत्यनेन संज्ञाया विषयो निर्दिश्यते। यत्रानन्त[1] र्यव्यवहारः तत्र संज्ञा। न चैकाकिन्यनन्तरव्यवहार इति भावः। एकप्रतिषेधस्य च प्रयोजनम् 'इयेष' इत्यादौ "इजादेः" इत्यामो निवृत्तिः। गुरुमद्वचनं 'इयाय' इत्यादिनिवृत्त्यर्थं स्यात्। वृषलकुलमिति। यद्यपि ब्राह्मणकुलमपि तयोर्व्यवधायकं तथापि भिन्नजातीयकं व्यवधायकमिति[2] यदुक्तं तदनेन निवर्त्यते[3]।

उ.—ननु हल इति वचनात् सकाराकारमकाराणां कथं संयोगसंज्ञा; अत आह—हल इति। यद्यप्यसाचा सह संयोगसंज्ञायामपि न दोषविशेषस्तथापि 'असौ' इत्यादौ अचा सह संयोगसंज्ञायां सलोपप्रसङ्गो ज्ञेयः। तयोरेव; सकारमकारयोरेव। संज्ञाङ्गीकारेऽनिष्ट-माह[4]—ततश्चेति। नन्वनन्तरा इति बहुव्रीहिणो हल्विशेषणत्वात् कथमेकप्रतिषेधः; अत आह—अनन्तरा इति; आनन्तर्यं सामीप्यम्, तत् धर्मिप्रतियोगिसापेक्षं; श्रुतत्वाद्धलेव धर्मिप्रतियोगित्वेनापेक्ष्यत[5] इति अनेको हल् प्रतीयत इत्यनन्तरव्यवहारो नैकाकिनीत्यर्थः। भाष्ये—इयेषेति; इषु इच्छायां, लिट्, तिप्, णल्, उपधागुणः, द्विर्वचनम्, हलादिः शेषः, अभ्यासह्रस्वः, "अभ्यासस्यासवर्णे" इतीयङ्। अत्र षकारमात्रस्य संयोगत्वे "इजादेः"

---

1 अनन्तरव्यवहारः।
2 अव्यवधायकम्।
3 निवर्त्यते।
4 निष्टकृष्माह।
5 स—अपेक्षते।

इत्याम् स्यात्, तन्निवृत्तये अनन्तरा इत्युक्तमित्यर्थः। आमो निवृत्तिरित्यनेन भाष्ये प्रसज्ये तेत्यनन्तरं स मा भूदिति शेषो दर्शितः। ननु गुरुमत इति विशेषणसामर्थ्यादेकस्य हलो गुरुसंज्ञा न भविष्यति; अत आह—गुरुमदिति। इयायेति; इण् गतौ, लिट्, तिप् णल्। अत्र "आद्यन्तवदेकस्मिन्" इतीजादित्वमस्ति, गुरुमत्त्वाभावान्नाम्, वृद्धिः, आयादेशः, "द्विर्वचनेऽचि" इति स्थानिवत्वादिकारो द्विरुच्यते, पूर्ववदभ्यासस्येयङ्। न चेयङि सति गुरुमदिजादित्वादाम्प्रसङ्गः। लिड्धातुसंनिपातेन संपन्नस्येजादिगुरुमत्त्वस्य तद्विघातकाम्प्रत्ययानिमित्तत्वादिति भावः। भाष्ये उवोषेति प्रसङ्गादुक्तम्, तत्र "उषविद" इति विकल्पेनामो विधानात्। उष दाहे, लिट्, इयेषेतिवत् प्रक्रिया इष्टा। व्यवधायकमिति; किं देवदत्तयज्ञदत्तगृहे अनन्तरे ? इति प्रश्ने, नानन्तरे, विष्णुमित्रगृहमन्तरा वर्तत इति दर्शनादित्यर्थः। तथापीति; भिन्नजातीयस्य तु नियतं व्यवधायकत्वमित्युच्यत इत्यर्थः। निर्वर्त्यते प्रतिपाद्यते। भाष्ये—कुलम्; गृहम्।

**भा. किं पुनः कारणं क्वचिदतज्जातीयकं व्यवधायकं भवति, क्वचिन्न ? सर्वत्रैव ह्यतज्जातीयकं व्यवधायकं भवति। कथमनन्तराविमौ ग्रामाविति ? ग्रामशब्दोऽयं बह्वर्थः। अस्त्येव शालासमुदाये वर्तते, तद्यथा—ग्रामो दग्ध इति। अस्ति वाटपरिक्षेपे वर्तते, तद्यथा—ग्रामं प्रविष्ट इति। अस्ति मनुष्येषु वर्तते, तद्यथा—ग्रामो गतः, ग्राम आगत इति। अस्ति सारण्यके ससीमके सस्थण्डिलके वर्तते, तद्यथा—ग्रामो लब्ध इति। तद्यः सारण्यके ससीमके सस्थण्डिलके वर्तते तमभिसमीक्ष्यैतत् प्रयुज्यते 'अनन्तराविमौ ग्रामौ' इति। सर्वत्रैव ह्यतज्जातीयकं व्यवधायकं भवति॥ हलोऽनन्तराः॥ ७॥**

प्र.—ग्रामशब्दोऽयमिति। केचिदर्थभेदेन शब्दभेदमिच्छन्ति। प्रत्यभिज्ञानं तु सामान्यनिबन्धनम्। अन्ये तु एकशब्दत्वम्; तत्र चानेकशक्तियोगः एकशक्तित्वं वेति दर्शनविकल्पः। तत्र यदा एकशब्दत्वपक्षः तदा तद्यः सारण्यके इति भाष्यं शक्तिभेदादुपचरितभेदाश्रयम्। भेदपक्षे तु ग्रामशब्दोऽय बह्वर्थ इति भाष्यम् अभिन्नसामान्यनिमित्तैकत्वाध्यवसायाश्रयम्। तद्यः सारण्यक इति। ततश्च ग्रामशब्दार्थे नदीनां पर्वतानां चान्तर्भावाद्व्यवधायकत्वाभावादानन्तर्यं ग्रामयोरुच्यते। ग्रामे नाध्येयमित्यत्र तु ग्रामशब्दो वाटपरिक्षेपवृत्तिः। शुचौ देशेऽध्ययनप्रतिपादनतात्पर्यात्। ततश्च सीमन्यधीयत एव।

उ.—भाष्ये—यः शालासमुदाये वर्तते ग्रामशब्दः सोऽस्त्येवेति योज्यम्। वर्तनक्रिया वास्तिक्रियाकर्त्री। शालासमुदाये ग्रामशब्दस्य वृत्तिरस्तीत्यर्थः। एवमग्रेऽपि। केचिदिति; अन्यायश्चानेकार्थत्वमिति मन्यमाना इत्यर्थः। सामान्येति; ग्रामशब्दत्वादिसामान्येत्यर्थः। अन्ये त्विति; अनेकव्यक्तीनां सामान्यस्य च कल्पने गौरवं मन्यमाना इत्यर्थः। तारत्वादिधर्मभेदो व्यञ्जकध्वनिनिष्ठ इति न शब्दैक्यविघातक इति भावः। एकशब्दत्वेऽपि शक्तौ मतद्वयमाह—तत्रेति। एकस्मिन् अर्थे शक्तिग्रहेऽपि सर्वार्थप्रतीतेरभावादर्थभेदे शक्तिभेद इत्यकं मतम्। एकस्या अपि शक्तेः अनेकविषयत्वसंभवाद् यद्विषयत्वेन ज्ञाता तदेव प्रत्याययति नान्यादिति व्यवस्थोपपत्तेरनेकार्थस्याप्येकस्य शब्दस्यैकैव शक्तिरित्येकं[1] मतमित्यर्थः। एवं मतभेदेऽपि तद्य इति भाष्यस्य तेषु ग्रामशब्देषु मध्ये य इत्यर्थकस्य ग्रामशब्दोऽयं बह्वर्थं इत्येकत्वाभिप्रायकभाष्येण विरोधः कथं परिहरणीयः; अत आह—तत्रेति; मतभेदे सतीत्यर्थः। ननु ग्रामशब्दस्य बहुत्वे ग्रामे नाध्येयमित्यत्र कथमर्थविशेषनिश्चयः; अत आह—ग्रामे नाध्येयमिति। वाटपरिक्षेपो नाम शालासमुदायरक्षणाय परितः कण्टकादिकं यत्र क्षिप्यते तदभिधीयते। सीमनि; पर्वतादौ ॥ ७ ॥

**सू.—मुखनासिकावचनोऽनुनासिकः। १।१।८।**

**भा.—किमिदं मुखनासिकावचन इति? मुखं च नासिका च मुखनासिकम्। मुखनासिकं वचनमस्य सोऽयं मुखनासिकावचनः। यद्येवं मुखनासिकवचन इति प्राप्नोति। निपातनाद्दीर्घत्वं भविष्यति। अथवा मुखनासिकमावचनमस्य सोऽयं मुखनासिकावचनः। अथ किमिदमावचनमिति? ईषद्वचनमावचनमिति, किंचिन्मुखवचनं किंचिन्नासिकावचनम्। मुखद्वितीया वा नासिका वचनमस्य सोऽयं मुखनासिकावचनः। मुखोपसंहिता वा नासिका वचनमस्य सोऽयं मुखनासिकावचनः।**

प्र—प्राण्यङ्गत्वात्समाहारद्वन्द्वे ह्रस्वत्वेन भाव्यम्, अवचनमिति नञ्समासाश्रयणेऽर्थो न सङ्गच्छत इति प्रश्नः—किमिदमिति। निपातनादिति। प्रसङ्गेनास्य लौकिकशब्दस्य साधुत्वं क्रियते। निपातनानां च बाधकत्वात् मुखनासिकवचन इति न भाव्यम्। अबाधकत्वपक्षे तु भाव्यमेव। ईषद्वचनमिति; भागस्य मुखेनोच्चारणाद्भागस्य नासिकया। अस्मिन् पक्षे मुखनासिकवचन इत्यपि भवति। यो हि ईषदुच्यते स उच्यत एव। यथा ईषच्छुक्लोऽपि शुक्ल एव। मुखद्वितीयेति; मुखसहायेत्यर्थः। तत्र नासिका मुखसाहचर्यान्मुखशब्देनोच्यते। मुखं च तन्नासिका च मुखनासिका। सा वचनमस्येति। मुखोपसंहितेति। मुखस्य च नासि-

1 क—एवं।

कायाश्च यदन्तरालं स्थानान्तरमेवानुनासिकस्य दर्शयति। तत्र सामीप्यात् मुखं च तत् नासिका चेत्युभाभ्यामन्तरालं व्यपदिश्यते। पदसंस्कारपक्षे तु मुखनासिकापदनिरपेक्षं वचनमित्येतत् पदं लिङ्गसर्वनामनपुंसकाश्रयेण सास्क्रियते। पश्चात् स्त्रीत्वस्य पदान्तरसंबन्धेन प्रतीयमानत्वाद्बहिरङ्गत्वात् ङीप्प्रत्ययो न भवति। यदा तु स्त्रीत्वाश्रयेण वचनीतिपदं व्युत्पाद्यते तदा मुखनासिकावचनीक इत्येव भवति। अत्र चानेकदर्शनम्। अनुनासिकस्य पूर्वः परो वा भागो मुखेनोच्चार्यते भागो नासिकया, तत्र नासिकावचनभागानुरागवशाद् मुखवचनोऽपि भागो नासिकाव इव लक्ष्यते। यथा 'सँय्यन्ता' इत्यत्र अनुनासिकयकारानुरागादकारोऽनुनासिक इव प्रतिभाति। अत्र च प्रासादवासिन्यायो नास्ति; भागस्यैव मुखेन नासिकया चोच्चारणात् न तु समग्रस्य। अन्यषां तु दर्शनं मुखनासिकान्तरालं स्थानान्तरमेवास्येति। अत्रापि नास्ति प्रासादवासिन्यायः। यदा सर्व एव वर्णो मुखेन नासिकया चोच्चार्यते तदा प्रासादवासिन्यायेन भाष्यकारो मुखग्रहणं प्रत्याचष्टे। यथा भ्राष्ट्रेणोखया च पक्वः सूपः उभाभ्यां व्यपदिश्यते।

उ.—नन्वितरेतरयोगद्वन्द्वेन शब्दार्थयोः साधुत्वात् प्रश्नोऽनुपपन्नः; अत आह—प्राण्यङ्गत्वादिति; समाहारस्यैकत्वादेकत्वे सिद्धे प्राण्यङ्गादीनां समाहार एव द्वन्द्वः। दधिपय आदीनामितरेतरयोग एव। वृक्षमृगादीनामुभयथेत्येतदर्थं "द्वन्द्वश्च" इत्यादिप्रकरणम्। तथा च "स नपुंसकम्" "ह्रस्वो नपुंसके प्रातिपदिकस्य" इति ह्रस्वत्वे नासिकेति दीर्घानुपपत्तेरित्यर्थः। अर्थः; अभिमत इत्यादिः। ननु सूत्रस्य संज्ञापरत्वान्निपातने न तात्पर्यम्; अत आह—प्रसङ्गेनेति। लिङ्गव्यत्ययश्छान्दस इत्येव कस्मान्नोक्तम्; अत आह—लौकिकेति। न भाव्यम्; समाहारद्वन्द्वे। अबाधकत्वपक्षः संभवादुक्तः, बाधकत्वमेव सिद्धान्तः। अस्मिन् पक्ष इति; आङ्रहितस्येत्यर्थः। ननु भागयोर्मुखनासिकोच्चार्यत्वे वर्णस्य कथं मुखनासिकवचनत्वम्; अत आह—यो हीति। ननु मुखद्वितीयेत्युक्तावुभयवचनत्वं कथं स्यात्; अत आह—मुखसहायेति; अव्युत्पन्नोऽयं द्वितीयशब्दः सहायवाची, पूरणप्रत्ययान्तस्यैव वा लक्षणया सहायपरत्वमिति भावः। शाकपार्थिवादित्वेनोत्तरपदलोपाङ्गीकारे शब्दानित्यत्वं स्यात्; अत आह—तत्रेति। उपशब्दस्य प्रयोजनं वदन् पूर्वकल्पाङ्गेदमाह—मुखस्येति। ननु मुखनासिकाशब्दयोर्दिङ्नामत्वाभावेन "दिङ्नामान्यन्तराले" इत्यप्रवृत्तेः कथं ताभ्यामन्तरालप्रतिपादनम्; अत आह—तत्रेति। अन्तरालपरत्वे सति लक्षणया तत्प्रतिपादनमित्यर्थः। ननु वचनशब्दस्य करणे ल्युडन्तस्य मुखनासिकाविशेषणत्वात् स्त्रीत्वेन ङीपि "नद्यृतश्च" इति कपि मुखनासिकावचनीकमिति

भाव्यमिति[1] तृतीयचतुर्थपक्षभाष्यानुपपत्तिः; अत आह—पदसंस्कारेति। वाक्यसंस्कारपक्षे पदान्तरसंबन्धस्यान्तरङ्गत्वात् ङीपा भाव्यमिति पदेत्युक्तम्। लिङ्गसर्वनामेति; लिङ्गं सर्वं यस्य नाम्नो विशेष्यनिघ्नस्य तस्य सामान्ये[2] नपुंसकाश्रयेणेति विग्रहः। विशेषणत्वस्य विवक्षाधीनत्वात् सर्वलिङ्गेति वक्तव्ये लिङ्गसर्वेत्युक्तम्। नपुंसकं सर्वलिङ्गसाधारणमिति तु न, भूम्यादिशब्दानां नपुंसकत्वासंभवात् नामपदवैयर्थ्याच्च। वाक्यसंस्कारपक्षे त्वाह—यदा त्विति। मुखग्रहणप्रत्याख्यानानुकूलतया मतभेदमाह—अत्र चेति। भागः मुखोच्चरितव्यतिरिक्तः। भागस्य तथात्वे सर्वस्मिन् वर्णे नासिकावचनत्वप्रतीतिः कथम्; अत आह—नासिकावचनेति। यकारः अनुनासिकोऽपीत्यर्थः।[3] समग्रस्य; वर्णस्य। अत्रापि नास्तीति; स्थानद्वयाभावादित्यर्थः। यथेति; भ्राष्ट्रे भर्जनलक्षणः पाकः, उखायां विक्लित्तिलक्षण इति उभाभ्यां सूपस्य पाकः।

भा.—अथ मुखग्रहणं किमर्थम्? 'नासिकावचनोऽनुनासिकः' इतीयत्युच्यमाने यमानुस्वाराणामेव प्रसज्येत। मुखग्रहणे पुनः क्रियमाणे न दोषो भवति। अथ नासिकाग्रहणं किमर्थम्? 'मुखवचनोऽनुनासिकः' इतीयत्युच्यमाने कचटतपानामेव प्रसज्येत। नासिकाग्रहणे पुनः क्रियमाणे न दोषो भवति। मुखग्रहणं शक्यमकर्तुम्। केनेदानीमुभयवचनानां भविष्यति? प्रासादवासिन्यायेन। तद्यथा—केचित् प्रासादवासिनः, केचित् भूमिवासिनः, केचिदुभयवासिनः। तत्र ये प्रासादवासिनः गृह्यन्ते ते प्रासादवासिग्रहणेन; ये भूमिवासिनः गृह्यन्ते ते भूमिवासिग्रहणेन; ये तूभयवासिनः, गृह्यन्त एव ते प्रासादवासिग्रहणेन भूमिवासिग्रहणेन च। एवमिहापि केचिन्मुखवचनाः, केचिन्नासिकावचनाः, केचिदुभयवचनाः। तत्र ये मुखवचना गृह्यन्ते ते मुखग्रहणेन; ये नासिकावचना गृह्यन्ते ते नासिकाग्रहणेन; ये उभयवचना गृह्यन्त एव ते मुखग्रहणेन नासिकाग्रहणेन च। भवेदुभयवचनानां सिद्धम्। यमानुस्वाराणामपि प्राप्नोति। नैव दोषो न प्रयोजनम्।

प्र.—यमानुस्वाराणामेवेति। प्रासादवासिन्यायानवतारपक्ष इति भावः। तत्र विधिप्रदेशेषु यमानुस्वारा एवादेशाः स्युः; "विड्वनोरनुनासिकस्यात्" इत्यादिषु त्वनुवादप्रदेशेषु यमानुस्वाराणामसंभवादप्रतिपत्तिः स्यात्। कचट-

---

1 क, ख—भाव्यम्। 2 क—सामान्येन। 3 अननुनासिकोऽपि।

तपानामिति । 'पक्कमिति [1] चलोपप्रसङ्गः, 'ओदनपक्' इत्यत्र "अनुनासिकस्य क्विझलोः क्ङिति" इति दीर्घप्रसङ्गः । प्रासादवासिन्यायेनेति । अयं न्यायः क्रियाशब्देष्वेव न रूढिशब्देषु । नैव दोष इति । अनुवादे तावत् यमानुस्वाराणामसंभव एव । विधावप्यान्तरतम्यान्मुखवचनस्योभयवचनो भविष्यति न तु केवलो नासिकावचनः ।

उ.—यमो नाम पञ्चमेषु परतः आदितश्चत्वारो वर्णाः कुक्कित्येवंरूपाः[2] । ननु प्रासादवासिन्यायेनोभयवचनानामपि स्यात्; अत आह—प्रासादेति । अनवतारेति; भागोच्चारणं स्थानान्तरं [3] वेति [4] पक्ष इत्यर्थः । यमानुस्वाराणामेव संज्ञायां किमनिष्टम्; अत आह—तत्रेति; तेषामेव संज्ञायां सत्यामित्यर्थः । विधिप्रदेशेषु; "आङोऽनुनासिकश्छन्दसि" इत्यादिषु । अप्रतिपत्तिरित्यापातत:, अन्वर्थत्वेन नकारादिप्रतीतिः संभवति इति केचित् । तच्चिन्त्यम्; तथा सति संज्ञाविधानवैयर्थ्यात् । कादीनामनुनासिकत्वेऽनिष्टमाह—पक्कमिति । चलोप इति; चत्वस्यासिद्धत्वात् "अनुदात्तोपदेशे" इति चलोपप्रसङ्ग इत्यर्थः । ओदनपगिति; अत्र जश्त्वचर्त्वयोरसिद्धत्वेऽपि दीर्घप्रसङ्गः । अयमिति तत्त्वकथनम् । अवयवार्थेन ह्युभयग्रहणम्; न च तद्रूढिषु संभवति; प्रासादवासीति कस्यचिन्नामकरणे तदभावादिति भावः । ननु विधौ तेषामप्यादेशत्वं स्यात्; अत आह—विधाविति । नासिकावचनः; नासिकामात्रवचनः ।

**वा.—इतरेतराश्रयं तु ।**

**भा.—इतरेतराश्रयं तु भवति । का इतरेतराश्रयता? सतोऽनुनासिकस्य संज्ञया भवितव्यम् । संज्ञया च नामानुनासिको भाव्यते । तदितरेतराश्रयं भवति । इतरेतराश्रयाणि च कार्याणि न प्रकल्पन्ते ।**

**वा.—अनुनासिकसंज्ञायामितरेतराश्रये उक्तम् ।**

**भा.—किमुक्तम्? 'सिद्धं तु नित्यशब्दत्वात्' इति । नित्याः शब्दाः । नित्येषु शब्देषु सतोऽनुनासिकस्य संज्ञा क्रियते । न संज्ञयानुनासिको भाव्यते । यदि तर्हि नित्याः शब्दाः किमर्थं शास्त्रम्?**

**वा.—किमर्थं शास्त्रमिति चेन्निवर्तकत्वात् सिद्धम् ।**

**भा.—निवर्तकं शास्त्रम् । कथम्? आङ्स्मायविशेषेणोपदिष्टोऽननुनासिकः । तस्य सर्वत्राननुनासिकबुद्धिः प्रसक्ता ।**

---

[1] चकारलोप । [2] क—कक्कि । [3] चेति। [4] लक्षणे ।

**तत्रानेन निवृत्तिः क्रियते छन्दस्यचि परत आङोऽननुनासिकस्य प्रसङ्गेऽनुनासिकः साधुर्भवति इति ॥ मुखनासिकावचनोऽनुनासिकः ॥ ८ ॥**

उ.—भाष्ये—उक्तम्; वृद्धिसूत्रे । ८ ।

**सू. तुल्यास्यप्रयत्नं सवर्णम् । १ । १ । ९ ।**

**भा.—[किमिदं तुल्यास्यप्रयत्नमिति] तुलया संमितं तुल्यम् । आस्यं च प्रयत्नश्च आस्यप्रयत्नम् । तुल्यास्यं च तुल्यप्रयत्नं च सवर्णसंज्ञं भवति । किं पुनरास्यम्? लौकिकमास्यम् । ओष्ठात् प्रभृति प्राक् काकलकात् । कथं पुनरास्यम्? अस्यन्ति अनेन वर्णानिति आस्यम् । अन्नमेतदास्यन्दत इति वास्यम् । अथ कः [पुनः] प्रयत्नः? प्रयतनं प्रयत्नः । प्रपूर्वाद्यततेर्भावसाधनो नङ्प्रत्ययः । यदि लौकिकमास्यं किमास्योपादाने प्रयोजनम्; सर्वेषां हि तत्तुल्यम्? वक्ष्यत्येतत् प्रयत्नविशेषणमास्योपादानम् इति ।**

प्र—चत्वारोऽत्र पक्षाः संभवन्ति—द्वन्द्वगर्भो बहुव्रीहिः, त्रिपदो बहुव्रीहिः, तुल्यास्यशब्दयोस्तत्पुरुषस्ततो बहुव्रीहिः, आस्यप्रयत्नशब्दयोस्तत्पुरुषस्ततो बहुव्रीहिः इति । तत्र द्वन्द्वगर्भो बहुव्रीहिरितिपक्षे वार्तिकस्यावतार इति तमेव भाष्यकारः पूर्वं दर्शयति—तुलया संमितमिति । व्युत्पत्त्यर्थमेव तुला उपादीयते । रूढिशब्दस्त्वयं सदृशपर्यायः । यथा प्रवीणः कुशलः प्रतिलोमोऽनुलोम इत्यवयवार्थाभावः एवं तुल्यशब्देऽपि । कि पुनरास्यमिति; किं मुखम्, अथ तत्र भवं ताल्वादिकं स्थानम् इति प्रश्नः । लौकिकमिति; पशुरपत्यं देवतेत्यादिवत् प्रसिद्धमित्यर्थः । यद्यपि ताल्वादिकमपि लौकिकमास्यम्, तथापि तत्र योगवशादास्यशब्दो वर्तत इति झटिति न तत् प्रसिद्धमिति मुखमेव प्रसिद्धत्वाल्लौकिकमुक्तम् । तस्यैव च प्राधम्याद्ग्रहणं युक्तमित्यर्थः । ओष्ठादिति । काकलकं हि नाम ग्रीवायामुन्नतप्रदेशः । कथं पुनरिति; यदि निमित्तवशात् प्रवर्तते ततस्ताल्वादिष्वपि प्रवर्तिष्यत इति प्रश्नः । अस्यन्त्यनेनेति; सत्यपि निमित्ते रूढिवशान्मुख एव तत् प्रवर्तते न ताल्वादिष्वित्यर्थः । "कृत्यल्युट" इति करणे ण्यत् । असनमत्र जातिस्फोटपक्षेऽभिव्यक्तिः, व्यक्तिस्फोटपक्षे तूत्पत्तिः । अन्नमेतादिति । आङ्पूर्वात् स्यन्दतेः "अन्येष्वपि दृश्यते"

इति डः। एतदास्यं कर्मान्नं कर्तृ आस्यन्दते द्रवीकरोति अन्नप्रक्षेपणेन मुखस्य द्रवत्वोत्पादनात्। कः प्रयत्न इति; किं प्रयतनं प्रयत्नः, अथ प्रारम्भो यत्नस्येति प्रश्नः। भावसाधन इति। भावेऽभिधेये नङ्प्रत्ययः क्रियते। तेन नङ्शब्दस्य भावः साधनं भवति। किमास्योपादान इति; आस्य एव सर्ववर्णानां निष्पादादिति भावः। नासिकापि न बाह्या वर्णोत्पत्तिनिमित्तम्। किं तर्हि? आस्यान्तश्चर्म विततमस्ति, तत्संबद्धा रेखा नासिका, तस्यां वाय्वभिघाताद्वर्णोत्पत्तिः। विसर्जनीयस्यैकीयमतेनोरस्यत्वात्सावर्ण्याभावेऽपि न दोषः। वक्ष्यतीति; नास्य परीक्षावसर इति भावः।

उ.—अग्रिमविचारानुकूलतया चतुर्धा समासमाह—चत्वार इति। द्वन्द्वेति; आस्यं च प्रयत्नश्च आस्यप्रयत्नम्, तुल्यमास्यप्रयत्नं यस्य तत्तथा। त्रिपद इति; तुल्य आस्यं प्रयत्नो यस्य। तुल्यास्यशब्दयोरिति; मयूरव्यंसकादेराकृतिगणत्वात् तुल्य आस्ये तुल्यास्य इति पूर्वपदार्थप्रधानस्तत्पुरुषः। स प्रयत्नो यस्येति बहुव्रीहिः। तत्पुरुष इति; आस्ये प्रयत्नः आस्यप्रयत्नः। "साधनं कृता" इति वार्तिकेन, "सप्तमी" इति योगविभागाद्वा समासः। तुल्य आस्यप्रयत्नो यस्येति बहुव्रीहिः। नन्वपरिच्छिन्नसुवर्णादिपरिच्छेदाय [1]तुलादण्डे यदारोप्यते पाषाणाद्युन्मानं तत्तुल्यशब्देनोच्यते। न च तेन स्थानप्रयत्नयोः परिच्छेद्यत्वसंभवः; अत आह—व्युत्पत्त्यर्थमिति; यथा गोशब्दव्युत्पत्तये गमनकर्तेति भावः। यत्तुलया संमितं "नौवयोधर्म" इत्यादिसूत्रविहितयत्प्रत्यय [2]वाच्यं तत्सादृश्यादन्यत्र तुल्यशब्दो गौण इति केचित्; तन्निरस्यति—रूढीति। सिंहो माणवक इत्यत्रापि सिंहसादृश्यबुद्धिवत् देवदत्ततुल्यो यज्ञदत्त इत्यत्र तुलासंमितसुवर्णादिसादृश्यबुद्धेरभावादिति भावः। यथेति। प्रकृष्टो वीणायां, कुशान् लाति, लोमान्यनुगतः, लोमानिप्रतिगतः, इत्यवयवार्थाभावः। किं मुखमिति; अतद्धितान्तास्यशब्दोपादानेनेत्यर्थः। अथेति; तद्धितान्तास्यशब्दोपादानेनेत्यर्थः। रूढ्या प्रतीयमानमिह लौकिकमभिप्रेतमित्याह—पशुरिति; "हरतेर्दृतिनाथयोः पशौ" "तस्यापत्यम्" "सास्य देवता" इत्यादौ रूढार्थानामेव ग्रहणं यथा तद्वदत्रापि इत्यर्थः। एतदेव स्पष्टयति—यद्यपीति। तत् ताल्वादिकम्। प्रसिद्धम् ज्ञातम्। तस्यैव चेति। तद्धितान्तास्यशब्दार्थज्ञानस्य प्रकृत्यर्थज्ञानपूर्वकत्वात् तस्यैव ग्रहणं युक्तमित्यर्थः। यदि निमित्तेति; अवयवार्थवशादित्यर्थः। सत्यपीति; गवादाविव व्युत्पत्तये योग आश्रीयते। रूढिशब्द एवायमित्यर्थः। ननु "तयोरेव" इति नियमात् कथं करणे कृत्यः; अत आह—कृत्यल्युट इति। अन्यत्र स्थितस्य पाषाणादेरन्यत्र क्षेपोऽसनम्, तद्वर्णेषु न संभवति; अत आह—असनमत्रेति। व्यक्तीति। ककारादिव्यक्तिरेकैवेति पक्षे तस्याः नित्यत्वात् असनमभिव्यक्तिः। कत्वादिजात्यङ्गीकारे व्यक्तीनामनित्यत्वादसनमुत्पत्तिरित्यर्थः। 'स्यन्दू प्रस्रवणे' इत्यस्मात् आस्यशब्दं साधयति—भाष्ये—अन्नमिति। तद्व्याचष्टे—आङ्पूर्वादिति। अन्येष्वपीति; दृशिग्रहणाद्धात्वन्तरादपि भवतीत्यर्थः। भाष्ये एतच्छब्द आस्यपर इत्याह—एतदास्यमिति। आस्यस्य कर्तृत्वं वारयति—अन्नं कर्मेति।

---

[1] क. तुलावन्ते। ख. तुलं दण्डे। [2] ख. यत्प्रत्ययान्तम्।

प्रयतनम्; बाह्याभ्यन्तरसाधारणं, यत्नस्य प्रारम्भस्तु आन्तर एवेति भेदः। भावस्य क्रियारूपस्य प्रत्ययोत्पत्तौ कथं साधनत्वम्; अत आह—भावेऽभिधेय इति। अभिधेयस्य प्रतीतिजननाय स्वाभिधायकप्रत्ययोत्पत्तिनिमित्तत्वात् साधनमुच्यते। एवं कर्मसाधनमित्यादावपीतिभावः। नङ्प्रत्यय इति; "यजयाचयत" इत्यत्र भाव इत्यनुवर्तनादित्यर्थः। केवलनासिकास्थानयमानुस्वारनिवृत्तये आस्यग्रहणम्; अत आह—नासिकेति। विसर्जनीयव्यावृत्तये आस्योपादानमित्यत आह—विसर्जनीयस्येति। मतान्तरे कण्ठ्यत्वान्नाऽऽस्यपदेन निवृत्तिः। उरस्यमतेऽप्याह—सावर्ण्याभावेऽपीति; यथा आस्यपदेन सावर्ण्यव्यावर्तनेऽपि न दोषः तथाऽऽस्यपदं त्यक्त्वा सावर्ण्याङ्गीकारेऽपि न दोष इत्यपिशब्दार्थः। ननु द्वन्द्वगर्भे बहुव्रीहौ कथं प्रयत्नविशेषणमास्योपादानम्; अत आह—नास्येति; आस्यग्रहणविचारे उदासीना अन्यद् विचारयाम इत्यर्थः।

॥ वा ॥ सवर्णसंज्ञायां भिन्नदेशेष्वतिप्रसङ्गः प्रयत्नसामान्यात् ॥

भा.—सवर्णसंज्ञायां भिन्नदेशेष्वतिप्रसङ्गो भवति। जबगडदशाम्। किं कारणम्? प्रयत्नसामान्यात्। एतेषां हि समानः प्रयत्नः।

॥ वा ॥ सिद्धं त्वास्ये तुल्यदेशप्रयत्नं सवर्णम् ॥

भा.—सिद्धमेतत्। कथम्? आस्ये येषां तुल्यो देशः प्रयत्नश्च ते सवर्णसंज्ञा भवन्तीति वक्तव्यम्। एवमपि किमास्योपादाने प्रयोजनम्; सर्वेषां हि तत्तुल्यम्? प्रयत्नविशेषणमास्योपादानम्। सन्ति ह्यास्याद्बाह्याः प्रयत्नाः। ते हापिता भवन्ति। तेषु सत्स्वसत्स्वपि सवर्णसंज्ञा सिद्धा भवति। के पुनस्ते? विवारसंवारौ, श्वासनादौ, घोषवदघोषता, अल्पप्राणता, महाप्राणतेति। तत्र वर्गाणां प्रथमद्वितीया विवृतकण्ठाः, श्वासानुप्रदाना अघोषाश्च। एकेऽल्पप्राणाः, अपरे महाप्राणाः। तृतीयचतुर्थाः संवृतकण्ठा नादानुप्रदाना घोषवन्तः। एकेऽल्पप्राणाः, अपरे महाप्राणाः। यथा तृतीयाः तथा पञ्चमा आनुनासिक्यवर्जम्। आनुनासिक्यमेषामधिको गुणः। एवमप्यवर्णस्य सवर्णसंज्ञा न प्राप्नोति। बाह्यं ह्यास्यात्स्थानमवर्णस्य। सर्वमुखस्थानमवर्णस्य एक इच्छन्ति। एवमपि व्यपदेशो न प्रकल्पते—'आस्ये येषां तुल्यो देशः' इति। व्यपदेशिवद्भावेन व्यपदेशो भविष्यति। सिद्ध्यति। सूत्रं तर्हि भिद्यते।

प्र.—[1]अत्र सवर्णसंज्ञायामिति; द्वन्द्वे प्रयत्नस्यास्येनाविशेषणात् मुखप्रयत्नयोस्तुल्यत्वाद्भिन्नस्थानानामपि प्रसङ्गः। भाष्ये शकारः प्रत्याहारपाठवशात् पठितः। अत्र प्रत्याहारे जबगडदान् प्राप्नोतीत्यर्थः। शकारस्य तु विवृतत्वात्स्पर्शानां स्पृष्टत्वादप्रसङ्ग एव। ततश्च 'ऊर्ज्' इत्यादै 'झरो झरि" इति लोपप्रसङ्गः। एवमपीति; आस्ये येषां तुल्यो देश इत्यास्येन देशो विशिष्यते। तत्र व्यभिचाराभावादास्येन देशस्य विशेषणमयुक्तमित्यर्थः। प्रयत्नविशेषणमिति तस्य संभवव्यभिचारसद्भावादित्यर्थः। बाह्यप्रयत्नव्युदासाच्चत्वार आभ्यन्तरा गृह्यन्ते। स्पृष्टतेषत्स्पृष्टताविवृततासंवृतताख्याः। बाह्यं ह्यास्यादिति; काकलकमावस्तालुपजत्रुस्थानमवर्णस्यैके इच्छन्ति। सति च बाह्यदेशसंभवे तद्व्यवच्छेदायास्येन देशो विशेष्यत इति प्रश्नः। सर्वमुखेति अवर्णनिष्पत्तौ सर्वमेव मुखं व्याप्रियत इति नास्य बाह्यस्थानता। एवमपीति। अवर्णस्यास्यमेव देशो न त्वास्ये देशः। व्यपदेशिवद्भावेनेति; सर्वावस्थायुक्तमास्यमास्यशब्देनोच्यते, देशशब्देन तु विशिष्टैवावस्था [2]वर्णोत्पत्तिहेतुः। तत्र बुद्धिकृतभेदाश्रयेण व्यपदेशः।

उ.—भाष्येऽत्रशब्दाध्याहारमभिप्रेत्याह—अत्र सवर्णेति। अध्याहृतात्रशब्दार्थमाह—द्वन्द्व इति; द्वन्द्वगर्भबहुव्रीहिपक्ष इत्यर्थः। मुखेति; लौकिकास्यग्रहणादित्यर्थः। भाष्ये जशां प्राप्नोतीति वक्तव्ये जबगडदशामित्युक्तम्; न तु शकारस्य जादिभिः सावर्ण्याभिप्रायेणेत्याह—भाष्ये इति। व्याख्याबीजमाह—शकारस्येति। जादीनां सावर्ण्येऽनिष्टमाह—ऊर्ज इति। ऊर्कशब्द उपपदे जनेर्डः। गकारजकारयोः सावर्ण्याल्लोपप्रसङ्ग इत्यर्थः। आस्ये येषामिति। तथा चास्यविशेषणेऽपि जबगडदानां न व्यावृत्तिरिति भावः। बाह्यव्यावृत्तौ आन्तराः प्रयत्नाः के इत्यत आह—चत्वार इति। भाष्ये—हापिता इति; सवर्णसंज्ञा बाह्यप्रयत्नान् स्वनिमित्तत्वेन जहाति। विशेषणेन तया ते हापिता इत्यर्थः। भाष्ये—तेषु; बाह्यप्रयत्नेषु भिन्नेष्वपि सत्सु। विवारसंवारौ कण्ठबिलस्य महत्वाल्पत्वे। अनुप्रदीयत इत्यनुप्रदानम्; सवर्णोत्पत्त्यनन्तरं जायमानो धर्मः व्यक्तो ध्वनिः श्वासानुप्रदानम् येषां ते तथा। एके; प्रथमे। अव्यक्तो ध्वनिर्नादः। एके; तृतीयाः। यद्यप्येते वर्णोत्पत्त्यनन्तरभाविनो न प्रयत्नाः तथापि वर्णविशेषप्रतिपत्तिहेतुत्वात् तेऽपि प्रयत्ना इति वृद्धव्यवहार इति भावः। नन्वास्यस्य प्रयत्नविशेषणत्वेन देशविशेषणत्वाभावात् कथमवर्णव्यावृत्तिः; अत आह—सति चेति। व्यावर्त्यसत्वाद्देशस्यापि तद्विशेषणं स्यादिति भावः। सर्वमुखस्थानत्वमुपपादयति—अवर्णेति। भाष्ये—एवमपि; सर्वमुखस्थानत्वेऽपि। ताल्वादीनां व्यपदेशः संभवतीत्यत आह—अवर्णस्येति। भेदगर्भो व्यपदेशिवद्भाव इति भेदं दर्शयति—सर्वेति। विशिष्टावस्थामेव आह—वर्णोत्पत्तीति। भाष्ये—सूत्रं त्विति; आस्ये तुल्यदेशप्रयत्नं सवर्णमित्युक्तावित्यर्थः।

---

[1] अत्र omitted. [2] वर्णोत्पादन।

**भा.—यथान्यासमेवास्तु। ननु चोक्तम् 'सवर्णसंज्ञायां भिन्नदेशेष्वतिप्रसङ्गः प्रयत्नसामान्यात्' इति। नैष दोषः। न हि लौकिकमास्यम्। किं तर्हि? तद्धितान्तमास्यम्। आस्ये भवमास्यम्, "शरीरावयवाद्यत्"। किं पुनरास्ये भवम्? स्थानं करणं च। एवमपि प्रयत्नोऽविशेषितो भवति। प्रयत्नश्च विशेषितः। कथम्? न हि प्रयतनं प्रयत्नः। किं तर्हि? प्रारम्भो यत्नस्य प्रयत्नः। यदि प्रारम्भो यत्नस्य प्रयत्नः, एवमप्यवर्णस्य एङोश्च सवर्णसंज्ञा प्राप्नोति। प्रश्लिष्टावर्णावेतौ। अवर्णस्य तर्ह्यैचोश्च सवर्णसंज्ञा प्राप्नोति। विवृततरावर्णावेतौ। एतयोरेव तर्हि मिथः सवर्णसंज्ञा प्राप्नोति। नैतौ तुल्यस्थानौ। उदात्तादीनां तर्हि सवर्णसंज्ञा न प्राप्नोति। अभेदका उदात्तादयः।**

प्र.—न हीति; प्राथमकल्पिकमित्यर्थः। यौगिकस्य तु व्यवहितस्य ग्रहणम् स्थानमिति; ताल्वादि। करणमिति; स्पृष्टतादि, जिह्वाया अग्रोपाग्रमध्यमूलानि वा। यद्येवं प्रयत्नग्रहणं न कर्तव्यं तस्याप्यास्ये भवत्वात् आस्यग्रहणेन ग्रहणात्। सत्यमेतत्, प्रत्येकं तु व्यापारनिरासार्थमुभयोरुपादानम्। तेन द्वयोस्तुल्यत्वे सवर्णसंज्ञा भवति। अविशेषित इति; आस्येनेत्यर्थः। द्वन्द्वपक्ष एवात्र स्थित इति प्रश्नः। ततश्च बाह्याः प्रयत्नाः न त्यक्ताः स्युः। प्रारम्भो यत्नस्येति। तत्र पूर्वं स्पृष्टतादयः चत्वारः। पश्चान्मूर्ध्नि प्रतिहते निवृत्ते प्राणाख्ये वायौ विवारादयो बाह्या एकादश प्रयत्ना उत्पद्यन्ते। एवमपीति सन्ध्यक्षरेषु प्रथमभागस्याकारेण सादृश्यात् सवर्णसंज्ञाप्राप्तिरिति प्रश्नः। प्रश्लिष्टावर्णाविति; नात्र भागविवेकोऽस्ति पासूदकवदित्यर्थः। अवर्णस्येति; विभागोऽत्र सुलक्ष्य इति प्रश्नः। ततश्च नाव्यम् इत्यत्र "यस्येति" लोपप्रसङ्गः। एतयोरिति; ततश्च "एत ऐ" इत्यौकारोऽपि स्यात् भाव्यमानेनापि क्वचित्सवर्णदर्शनात्। अभेदका इति लिङ्गैनैतत्प्रतिपादितम्—न शास्त्रे एते स्वशब्दोपादानमन्तरेण कार्येषु भिद्यन्त इति. तेन प्रारम्भभेदेऽप्युदात्तादीनां मिथः सवर्णसंज्ञा भविष्यति।

उ.—प्राथमकल्पिकम्; पूर्वोपस्थितम्। प्रकृत्यर्थज्ञानानन्तरभावित्वात् प्रत्ययज्ञानस्य। अत एव यौगिकस्य व्यवहितत्वम्। यद्यपि रूढिर्योगमपहरति तथापि आस्यपदोपादान

सामर्थ्याद् व्यवहितस्यापि यौगिकस्य ग्रहणं युक्तमिति भावः। यद्येवं; तद्धितान्तस्य[1] ग्रहणे सति। तस्यापि [2]आन्तरस्यापि। तेनेति; गोबलीवर्दन्यायेन स्थानमात्रपरमास्यपदम्। द्वन्द्वाभिहितसाहित्यस्य विवक्षितत्वादुभयतौल्ये सावर्ण्यमित्यर्थः। आस्येनाविशेषितत्वमुपपादयति—द्वन्द्वेति। आस्येनाविशेषणेऽतिप्रसङ्गमाह—ततश्चेति। तथा च बाह्यप्रयत्नतौल्यस्यापि विवक्षणे वर्ग्यस्य वर्ग्येण सावर्ण्यं न स्यात्। यत्किंचित्प्रयत्नतौल्यविवक्षायां बाह्यप्रयत्नसाम्येऽपि संज्ञा स्यात् तद्भाष्य एव वक्ष्यते शकारच्छकारयोरित्यादिना। भाष्ये—प्रयत्नश्च विशेषित इति; प्रयत्नविशेषस्य विवक्षितत्वाद्विशेषणफललाभ इत्यर्थः। प्रारम्भ इत्यनेन स्पृष्टतादयश्चत्वारः प्रयत्ना विवक्षिताः। तेषामाभ्यन्तरत्वमितरेषां बाह्यत्वं चाह—तत्रेति। निवृत्ते मूर्ध्ने इत्यादिः। पूर्वम् वर्णोत्पत्तेः। पश्चादुत्पत्त्यनन्तरं। बाह्याः वर्णोत्पत्त्यनन्तरभाविनः। अष्टौ भाष्योक्ताः, उदात्तानुदात्तस्वरितैस्सह एकादश। सादृश्यादिति; तुल्यस्थानत्वेन सादृश्यमित्यर्थः। तथा चावयवद्वारा एङोऽवर्णस्य च तुल्यस्थानप्रयत्नत्वात्सवर्णत्वे 'गव्यम्' इत्यत्र यस्येति लोपप्रसङ्गः। पांसूदकवदिति; ततश्च नावयवद्वारा तुल्यस्थानप्रयत्नत्वमित्यर्थः। सवर्णत्वे दोषमाह—तत इति। एत ऐ इति; लोडुत्तमस्य [3]एत ऐविधाने सावर्ण्यादौकारोऽपि स्यात्। न च भाष्यभाष्य सवर्णाग्राहकत्वम्। "अदसोऽसेर्दादु दो मः" इत्यत्र दर्शनादित्यर्थः। भाष्ये—उदात्तादीनां नहीति; उदात्तादयोऽप्यान्तरा इति मत्वा प्रश्नः। यद्यपि बाह्या इत्युत्तरं युक्तम्: तथापि समाधानान्तरमाह—भाष्ये—अभेदका इति। तदुपपादयति—लिङ्गेनेति; अनङ्गुदात्त इति उदात्तग्रहणेन ज्ञापकेन। स्वशब्देति; प्रयत्नविशेषमन्तरेणेत्यर्थः। प्रारम्भभेदेऽपीत्यपिनाभ्युपगम्यवादोऽयमिति सूचितम्।

**भा.—अथवा किं न एतेन—प्रारम्भो यत्नस्य प्रयत्न इति। प्रयतनमेव प्रयत्नः। तदेव च तद्धितान्तमास्यम्। यत्समानं तदाश्रयिष्यामः। किं सति? भेदे सतीत्याह। सत्येव हि भेदे सवर्णसंज्ञया भवितव्यम्। कुत एतत्? भेदाधिष्ठाना हि सवर्णसंज्ञा, यदि हि यत्र सर्वं समानं तत्र स्यात्सवर्णसंज्ञावचनमनर्थकं स्यात्। यदि तर्हि 'सति भेदे किंचित्समानम्' इति कृत्वा सवर्णसंज्ञा भविष्यति। शकारच्छकारयोः षकारठकारयो सकारथकारयोः सवर्णसंज्ञा प्राप्नोति। एतेषां हि सर्वमन्यत् समानं करणवर्जम्। एवं तर्हि—प्रयतनमेव प्रयत्नः। तदेव हि तद्धितान्तमास्यम्। न त्वयं द्वन्द्वः—आस्यं च प्रयत्नश्च आस्यप्रयत्नमिति। किं तर्हि? त्रिपदोऽयं बहुव्रीहिः—तुल्य आस्ये प्रयत्न एषामिति। अथवा पूर्वस्तत्पुरुषस्ततो बहुव्रीहिः—तुल्य आस्ये तुल्यास्यस्तुल्यास्यः प्रयत्न एषामिति। अथवा परस्तत्पुरुषस्ततो बहुव्रीहिः—आस्ये प्रयत्नः आस्यप्रयत्नः, तुल्य आस्यप्रयत्न एषाम् इति।**

[1] ख—तद्धितान्तास्यग्रहणे। [2] ख—आन्तर्यस्य। [3] एत्वविधाने।

प्र.-- यत्समानमिति । स्पृष्टत्वस्य समानत्वाद्वर्ग्याणां बाह्यप्रयत्नभेदेऽपि सवर्णसंज्ञा भविष्यति। किं सतीति ; स्पृष्टताद्यभेदाद्विवारादिभेदेऽपि यथा भवति तथा स्पृष्टतादिभेदेऽपि विवाराद्यभेदात् प्राप्नोतीति प्रश्नः। सत्येवेति। 'झरो झरि' इत्येवान्यथा ब्रूयात्। यथासंख्यनिरासार्थं हि तत्र सवर्णग्रहणं कृतं, शिण्ढि इत्यत्र डकारस्य ढकारे परतो लोपार्थम्। यदि च यत्र सर्वं समानं तत्रैव सवर्णसंज्ञा स्यात्, डकारढकारयोर्भेदात् सवर्णत्वं नास्तीति सवर्णग्रहणमनर्थकं स्यात्। सर्वमिति। 'वर्गाणां प्रथमद्वितीया' इत्यस्यां शिक्षायां पठितमघोषत्वादि। करणं तु भिन्नं वर्ग्याणां स्पृष्टत्वादूष्मणां च विवृतत्वात्। सति च सवर्णत्वे 'निश्छद्म, निष्ष्ठुरं, निस्स्थानं, मधुलिट् स्थानम्' इत्यत्र "झरो झरि" इति लोपः प्राप्नोतीति। छद्मनो निष्क्रान्तमिति प्रादिसमासः। "अनचि च" इति शकारस्य द्विर्वचनम्। तुल्य आस्य इति। तद्धितान्त आस्यशब्दो न स्वाङ्गवाच्येवेति "अमूर्धमस्तकात्" इत्यलुङ् न भवति। तद्धितान्तास्यशब्दाश्रयणसामर्थ्यादेवास्य इत्येकत्वं विवक्ष्यते। तेनैकस्मिन्नेव स्थाने ययोस्तुल्यः प्रयत्न इत्याश्रीयते। अथत्रेति ; मयूरव्यंसकादित्वात्सप्तम्यन्तोत्तरपदस्तत्पुरुषः।

उ.—किं सतीति प्रष्टुः गूढाशयं विवृणोति—स्पृष्टतादीति। सत्येव भेद इत्यत्र लिङ्गमाह—झरो झरीत्येवेति। अन्यथा ; भेदे सवर्णसंज्ञाया अभावे। यथासंख्येति; झकारस्य झकारे डकारस्य डकारे परत एव लोप इति नियमनिरासार्थमित्यर्थः। शिण्ढीति शिष्लृ विशेषणे, लोट्, सिप्, सेर्हिः, "श्नसोरल्लोपः," "हुझल्भ्यो हेर्धिः," षस्य जश्त्वेन डः ष्टुत्वम्, अनुस्वारपरसवर्णौ। झरो झरीत्येव ब्रूयादित्युक्तमुपपादयति—यदीति। सवर्णत्वं नास्तीति; तथा च सवर्णग्रहणे कृतेऽपि तत्र लोपाप्रसङ्गात्तद्ग्रहणं व्यर्थमित्यर्थः। भाष्ये—सवर्णसंज्ञावचनम्; झरो झरि सवर्णे इत्यत्र सवर्णसंपदोच्चारणम्। [अणुदित्सवर्णस्यादिषु] सवर्णग्रहणार्थं तु सवर्णसंज्ञा विधेयैव। सर्वमन्यदिति भाष्यस्य प्रतीकग्रहणम्—सर्वमिति। वर्गाणामिति; वर्गाणां प्रथमद्वितीयाः शषसविसर्जनीयजिह्वामूलीयोपध्मानीया यमौ च प्रथमद्वितीयौ विवृतकण्ठाः श्वासानुप्रदाना अघोषाः। वर्गे [1] प्रथमाः तद्यमाश्चाल्पप्राणाः। इतरे महाप्राणाः। वर्गाणां तृतीयचतुर्थां अन्तस्था हकारानुस्वारौ यमौ च तृतीयचतुर्थौ संवृतकण्ठा नादानुप्रदाना घोषवन्तः। वर्ग्ययमानां तृतीया अन्तस्था अल्पप्राणाः। इतरे महाप्राणाः। यथा तृतीयास्तथा पञ्चमाः। आनुनासिक्यमेषामपरो गुण इत्यर्थः। करणवर्जमित्यस्यार्थमाह—करणं त्विति। शकारछकारयोस्सावर्ण्येऽनिष्टमाह—निश्छद्मेति। छद्मन इति; "निरादयः क्रान्ताद्यर्थे पञ्चम्या" इत्यनेनेत्यर्थः। हल्परत्वाभावात् कथं लोपः; अत आह—

---

[1] क—वर्ग्ययमानां प्रथमेऽल्पप्राणाः।

अनचि चेति। "अमूर्धमस्तकात्" इति सप्तम्या अलुक् कस्मान् न भवति; अत आह—तद्धितान्त इति। अमूर्धमस्तकादिति पर्युदासादेव स्वाङ्गे लब्धे पुनः स्वाङ्गग्रहणं नियमार्थम्। तद्धितान्तास्यशब्दः स्पृष्टतादेरनङ्गस्यापि वाचक इति न स्वाङ्गवाच्येवेत्यर्थः। ननु स्पृष्टतादीनां सर्वेषामप्यास्ये प्रयत्नत्वात् निश्छद्म इत्याद्यतिप्रसङ्गतादवस्थ्यम्; अत आह—तद्धितान्तेति। आस्यग्रहणसामर्थ्यात्तद्धितान्तमास्यं स्पृष्टतादिः, प्रारम्भो यत्नस्येत्येवमपि लाभात्। तथा चैकत्वाविवक्षायां तद्धितान्तग्रहणं व्यर्थं स्यादित्यर्थः। सप्तम्यन्तोत्तरपदस्तत्पुरुषः कथम्; अत आह—मयूरेति। त्रिपदबहुव्रीहौ सप्तम्यन्तस्य पूर्वनिपाताभावेऽत्रैव निपातनं, गम्यादिपाठो वाश्रयणीयः। पूर्वपदार्थप्रधानस्तत्पुरुषोऽप्रगल्भेति परस्तत्पुरुष इति कल्प एव सम्यगित्याहुः।

॥ वा ॥ तस्य ॥

भा.—तस्येति तु वक्तव्यम्। किं प्रयोजनम्? यो यस्य तुल्यास्यप्रयत्नः स तस्य सवर्णसंज्ञो यथा स्यात्। अन्यस्य तुल्यास्यप्रयत्नोऽन्यस्य सवर्णसंज्ञो मा भूत्।

॥ वा ॥ तस्यावचनं वचनप्रामण्यात् ॥

भा.—तस्येति न वक्तव्यम्। अन्यस्य तुल्यास्यप्रयत्नोऽन्यस्य सवर्णसंज्ञः कस्मान्न भवति? वचनप्रामण्यात्। सवर्णसंज्ञावचनसामर्थ्यात्। यदि हि अन्यस्य तुल्यास्यप्रयत्नोऽन्यस्य सवर्णसंज्ञः स्यात् सवर्णसंज्ञावचनमनर्थकं स्यात्।

॥ वा ॥ संबन्धिशब्दैर्वा तुल्यम् ॥

भा.—संबन्धिशब्दैर्वा पुनस्तुल्यमेतत्। तद्यथा—संबन्धिशब्दाः 'मातरि वर्तितव्यम्' 'पितरि शुश्रूषितव्यम्' इति। न चोच्यते—'स्वस्यां मातरि' स्वस्मिन् पितरि' इति। संबन्धाच्चैतत् गम्यते—या यस्य माता, यश्च यस्य पिता इति। एवमिहापि 'तुल्यास्यप्रयत्नं सवर्णम्' इत्यत्र संबन्धिशब्दावेतौ, तत्र संबन्धादेतद्गन्तव्यम्—यत् प्रति यत्तुल्यास्यप्रयत्नं तत्प्रति तत्सवर्णसंज्ञं भवति इति।

प्र.—तस्येति। यत्तदोर्नित्याभिसंबन्धादाह—यो यस्येति; अन्यथा, वर्णान्तरापेक्षया तुल्यास्यप्रयत्नत्वेन सवर्णत्वे लब्धे तदाश्रयमन्यस्यापि कार्यं प्राप्नोति। सूत्रारम्भस्तु रेफोष्मणां निवृत्त्यर्थः स्यात्। तस्यावचनमिति; तस्येत्ययमनुकरणशब्दस्तस्येत्यस्यावचनमित्यर्थः। सवर्णसंज्ञावचनमिति। न च रेफोष्मणां निवृत्त्यर्थं वचनं, रेफस्यापि रेफः सवर्णो भवत्येव। एवमूष्मसु द्रष्टव्यम्। एवं वचनसामर्थ्याद्दोषं परिहृत्य शाब्दन्यायेन

परिहर्तुमाह --- संबन्धिशब्दारिति। संबन्धिशब्दाविति; तुल्यास्यप्रयत्न-शब्दस्य संबन्धिशब्दत्वात्तत्समानार्थोऽपि प्रदेशवाक्येषूपात्तः सवर्णशब्दः संबन्धिशब्दः। यथा तुल्याय कन्या दातव्या इत्युक्ते न शूद्रेण तुल्याय ब्राह्मणः कन्यां ददात्यपि त्वात्मना। तथेहापीत्यर्थः।

उ.—तस्येति वक्तव्यमित्यस्य व्याख्याने यो यस्येत्यधिकप्रतिक्षेपशङ्कां वारयति—यत्तदोरिति। अन्यथा; तस्येत्यनुक्तौ। अन्यस्यापीति; छकारस्य चकारादिना सवर्णस्य शकारेणापि सावर्ण्यात् निश्छद्मादावुक्तदोषः स्यादित्यर्थः। एतत्सूत्रस्य वैयर्थ्यं निराह—सूत्रेति; रेफोष्मणां न सवर्णाः इति [1] वचनादित्यर्थः। तस्येत्यस्यार्थपरत्वे प्रकृतानुपयोगमाशङ्क्याह—अनुकरणशब्द इति; तथा च समासेऽपि षष्ठ्यन्तरस्य लुक् न तु पूर्वषष्ठ्याः। तस्या अनुकरणशब्दस्वरूपान्तर्गतत्वादिति भावः। न चेति; रेफोष्मणामित्येतद्विजातीयसवर्णाभावानुवादमात्रमिति भावः। एवमिति; यस्य तस्येत्यनाश्रयणे सवर्णसंज्ञाविधानम्; झरो झरि इत्यादौ सवर्णग्रहणं चानर्थकं स्यादिति सामर्थ्याद्यस्य तस्येति लभ्यत इति वक्तव्यत्वदोषं परिहृत्येत्यर्थः। शब्देति; संबन्धिशब्दन्यायेनेत्यर्थः। ननु सवर्णशब्दस्य संबन्धिशब्दत्वेन लोकेऽप्रसिद्धत्वात् कथं तन्न्यायः; अत आह—तुल्यास्येति। तुल्यशब्दस्य संबन्धिशब्दत्वं दृष्टान्तेनाह—यथेति। स्वाभिधेयातिरिक्तप्रतियोगिकसंबन्धनिमित्तकः शब्दः संबन्धिशब्दः। यथा मातृशब्दः पुत्रप्रतियोगिक [2] जननीत्वनिमित्तः, तथा तुल्यशब्दोऽपि देवदत्तप्रतियोगिकसादृश्यलक्षणसंबन्धनिमित्तको यज्ञदत्ते प्रवर्तत इति संबन्धिशब्द इत्यर्थः।

॥ वा ॥ ऋकारऌकारयोः सवर्णविधिः ॥

**भा.—ऋकारऌकारयोः सवर्णसंज्ञा विधेया। होतृ ऌकारः होतॄकार इति। किं प्रयोजनम्? "अकः सवर्णे दीर्घः" इति दीर्घत्वं यथा स्यात्। नैतदस्ति प्रयोजनम्। वक्ष्यत्येतत्—'सवर्णदीर्घत्वे ऋति ॠ वा वचनम्' 'ऌति ॡ वा वचनम्' इति। तत्सवर्णे यथा स्यात्। इह मा भूत्—दध्यॢकारः, मधॢकारः इति। यदेतत् सवर्णदीर्घत्वे ऋतीति, एतद्दृत इति वक्ष्यामि। ततः 'ऌति'। ऌकारे परतः ऌकारो वा भवतीति। ऋत इत्येव। तन्न वक्तव्यं भवति। अवश्यं तद्वक्तव्यम्। ऊकालोऽज्ह्रस्वदीर्घप्लुतसंज्ञो भवतीत्युच्यते। न च ऋकार ऌकारो वाजस्ति। ऋकारस्य ऌकारस्य चाच्त्वं वक्ष्यामि। तच्चावश्यं वक्तव्यम्। प्लुतो यथा स्यात्। होतृ ऋकारः होतॄकारः, होतृ ३ कार इति। होतृ ऌकारः होतॢकारः होतॢ ३ कार इति।**

---

[1] हयवरट्सूत्रेभाष्ये।

[2] ख—जनकत्व।

प्र.—ऋकारलृकारयोरिति; स्थानभेदान्न प्राप्नोतीत्यारम्भः। अत्र चानयोरेव श्रुतत्वान्मिथः सवर्णसंज्ञा विज्ञायते, न त्वेतयोरन्येन सहेति बोध्यम्। वक्ष्यत्येतदिति। तत्र लृवाऽवचनमित्यत्र दीर्घ इत्यनुवर्तते। तत्र लृति लृशब्दे विकल्पितेऽप्राप्त एव पक्षे दीर्घो भविष्यति। स च भवन् लृवर्णस्य दीर्घाभावात् ऋवर्णस्यान्तरतम्याद्दीर्घ[1] ऋकारो भविष्यति। तत्सवर्ण इति। यद्यविधाय सवर्णसंज्ञां तदुच्यते ऽग्मात्रस्य लृति तत्कार्यं स्यात् दध्यृलकारेति। तस्माद्विधेया सवर्णसंज्ञा। ऋत इति वक्ष्यामीति; ऋकारस्य ऋकार एव सवर्ण इति ऋत्येव भविष्यति। ततः 'लृति'। ऋत इत्येव। इदं चासवर्णार्थम्। तेन लृति रूपद्वयं सिद्धम्। तत्रा-संहितायामृकारे होतृ ऋकार इति रूपम्। संहितायामपि "ऋत्यकः" इति शाकल प्रकृतिभाव एतदेव रूपम्। शाकलाभावे होतॄकारः, होतृकारः इति रूपद्वयम्। लृकारेऽसंहितायां, संहितायां च शाकले होतृ लृकार इति। शाकलाभावे होतॄकारः, होत्लृकार इति रूपद्वयम्। तन्न वक्तव्यमिति; द्वावप्येतौ दीर्घौ ॠ ॡ इति तत्र ऋकारे कदाचिद् ॠ इति दीर्घः, कदाचिद् ॡ इति। लृकारेऽपि ॠ ॡ इत्येतौ भविष्यतः सत्यां सवर्णसंज्ञायामिति भावः। न चेति; अर्धतृतीयमात्रत्वादिति केचिदाहुः। अन्ये तु ईषत्स्पृष्टकरणत्वादनयोॠकारलृकारयोश्च विवृतत्वात्ताभ्यां तयोरग्रहणादनच्त्वमाहुः। अच्त्वं वक्ष्यामीति; सत्यच्त्वे दीर्घसंज्ञानयोर्भविष्यति। येषां तु मतमर्धतृतीयमात्रावेताविति तेषां मते सत्यप्यच्त्वे द्विमात्रत्वाभावादेतयोर्दीर्घसंज्ञा न प्राप्नोति। तस्माद्द्विमात्रावेतावभ्युपगन्तव्यौ। तच्चावश्यमिति; त्वयापि ऋवावचनम् लृवावचनमिति ब्रुवताच्त्वमनयोर्वक्तव्यम्। अन्यथा विधानमात्रमनयोः स्यात्, नाचूकार्यं प्लुतः। सति त्वच्त्वे ताभ्यां त्रिमात्रयोरपि सावर्ण्यात् ग्रहणे सति प्लुतसंज्ञा भविष्यतीति प्लुतसिद्धिः।

उ.—विधिशब्दस्वारस्यमाह—स्थानभेदादिति। अतिप्रसङ्गं निराह—अत्र चेति। ननु होतृ ऋकार इत्यत्र द्विरेफकादेशेन मुक्ते एकरेफको दीर्घः सिद्ध्यति होतॄकार इति, होतृ लृकार इत्यत्र द्विलकारकादेशेन मुक्तेऽसत्यां सवर्णसंज्ञायां होतॄकार इति ऋकारादेशः कथं सिद्ध्येत्; अत आह—तत्रेति। अप्राप्त इति; ऋकारलृकारयोरसवर्णत्वात् "अकः सवर्णे" इत्यनेन अप्राप्त इत्यर्थः। अप्राप्तविधौ लृकार एव दीर्घः किं न स्यात्; अत आह—लृवर्णस्येति; लृवर्णस्य दीर्घो नास्तीति वचनात्। ऋवर्णस्येति; उभयान्तरतमाभावादन्यतरान्तरतमो भवतीत्यर्थः। सवर्णसंज्ञावादिनस्तात्पर्यमाह—यदिति; ऋलृवर्णयोरित्यादिः। तत्; लृति

[1] अन्तरतमः

ऌ वेत्येतत्। अणुमात्रस्येति; अक इत्यनुवर्तनेऽङ्मात्रस्य प्रयत्नो ज्ञेयः। तस्मादिति ऌकारस्य ऋकार एव सवर्ण इति दध्य्ऌकारादौ नातिप्रसङ्गः। ननु ऋत इत्युक्तेऽ[1]नृत्यपि द्विरेफ आदेशः स्यादत आह—ऋकारस्येति; ऋतो ऋ वेत्यत्र [2]सवर्ण इत्यनुवर्तनीयमिति भावः। रूपद्वयम्; ईषत्स्पृष्टऌकारः, दीर्घ ऋकारश्चेत्यर्थः। शाकलेन सहोभयत्र सवर्णसंज्ञायां रूपत्रयमित्याह—तत्रेति। असंहितायामिति; नित्यसमास एव संहिताया नित्यत्वमिति भावः। सवर्णसंज्ञापक्षे 'ऋति ऋ वा' 'ऌति ऌ वा' इति न वक्तव्यमित्युक्तम्। तत्र रूपत्रयसिद्धिमाह—द्वावपीति। ऋकारस्य मध्ये द्वौ रेफौ। तयोरेका मात्रा। परितोऽज्भक्तेरपरा। एवम् ऌकारस्यापि मध्ये द्वौ लकारौ [तयोः] एका मात्रा। परितोऽज्भक्तेरपरेति तयोरपि दीर्घत्वमित्यर्थः। भाष्ये—न चेति; तथा चोकालाच्त्वाभावादनयोर्न दीर्घत्वमित्यर्थः। अ[न]च्त्वमुपपादयति—अर्धेति; एतादृशस्याच्त्वमप्रसिद्धमित्यर्थः। परितोऽज्भक्तिसत्त्वादच्त्वं भविष्यति; अत आह—अन्य इति। ताभ्यामिति; प्रयत्नभेदेन सावर्ण्याभावादित्यर्थः। त्वयचत्रे 'ऋति' इत्यादि न वक्तव्यमित्याह—सतीति। एतद्भाष्यानुरोधादर्धलघुमात्रत्वमतमयुक्तमित्याशयेनाह—येषां त्विति। आवश्यकत्वमुपपादयति—त्वयापीति। अचकार्यं प्लुतः; प्लुतसंज्ञा, "ऊकालोऽच्" इत्युक्तेरित्यर्थः। सत्यच्त्व इति; ईषत्स्पृष्टयोरित्यर्थः। यद्यपि विवृताभ्यामृकारऌकाराभ्यामसावर्ण्यान्न ग्रहणम् एतयोः, ईषत्स्पृष्टयोश्च वर्णसमाम्नायेऽनाम्नातत्वेनानण्त्वात् न लिमालग्राहकत्वम्; तथापि अच्त्ववचनसामर्थ्यात्तयोरपि सवर्णग्राहकत्वमभ्युपेयम्। अन्यथाच्त्ववचनमनर्थकं स्यादित्याशयेनाह—ताभ्यामिति; ईषत्स्पृष्टाभ्यामित्यर्थः। लिमालयोः; ईषत्स्पृष्टयोः। प्लुतसिद्धिः; अनेन प्लुतो यथा स्यादिति भाष्यमीषत्स्पृष्टप्लुतो यथा स्यादिति व्याख्यातम्। शक्यते त्वचः स्थाने विहितः प्लुतो यथा स्यादिति व्याख्यातुमिति केचित्। तत्रेषत्स्पृष्टः प्लुतः कथं स्यादिति चिन्त्यम्।

**भा.—किं पुनरत्र ज्यायः। सवर्णसंज्ञावचनमेव ज्यायः। दीर्घत्वं चैव हि सिद्धं भवति। अपि च ऋकारग्रहणेन ऌकारग्रहणं संनिहितं भवति। "ऋत्यकः" खट्व ऋष्यः, माल ऋष्यः। इदमपि सिद्धं भवति—खट्व ऌकारः, माल ऌकार इति। "वा सुप्यापिशलेः" उपर्कारीयति, उपार्कारीयति। इदमपि सिद्धं भवति उपल्कारीयति, उपाल्कारीयति। यदि तर्हि ऋकारग्रहणेन ऌकारग्रहणं संनिहितं भवति "उरण् रपरः" ऌकारस्यापि रपरत्वं प्राप्नोति। ऌकारस्य लपरत्वं वक्ष्यामि। तच्चावश्यं वक्तव्यम्। असत्यां सवर्णसंज्ञायां विध्यर्थम्, तदेव सत्यां रेफबाधनार्थं भविष्यति। इह तर्हि "रषाभ्यां नो णः समानपदे" इत्यृकारग्रहणं चोदितं मातॄणां पितॄणामित्येतदर्थम्। तदिहापि प्राप्नोति क्लृप्यमानं पश्येति। अथासत्यामपि सवर्णसंज्ञायाम् इह कस्मान्न**

---

[1] क — अपिशब्दो नास्ति। [2] ख — सवर्णग्रहणम्।

**भवति प्रक्लृप्यमानं पश्येति। 'चुट्तुलशर्व्यवाये न' इति वक्ष्यामि। अपर आह 'त्रिभिश्च मध्यमैर्वर्गैर्लशसैश्च व्यवाये न' इति वक्ष्यामीति। वर्णैकदेशाश्च वर्णग्रहणेन गृह्यन्त इति योऽसौ ऌकारे लकारः तदाश्रयः प्रतिषेधो भविष्यति। यद्येवं, नार्थो रषाभ्यां णत्वे ऋकारग्रहणेन। वर्णैकदेशाश्च वर्णग्रहणेन गृह्यन्त इति योऽसौ ऋकारे रेफः तदाश्रयं णत्वं भविष्यति। तुल्यास्यप्रयत्नं सवर्णम्॥ ९॥**

प्र.—किं पुनरिति; एकैकस्मिन् संहितायां शाकलाभावपक्षे रूपद्वयं साध्यम्। तच्चोभयथापि सिद्ध्यति। तत्र सवर्णसंज्ञायामसत्यां यथा सिद्ध्यति तथा पूर्वमेवोक्तम्। [1]सत्यां तु यथा सिद्ध्यति तथोच्यते— [2][ "अकः सवर्णे दीर्घः" इत्यत्रान्तरतमत्वदीर्घत्वयोरुपादेयविशेषणयोर्विवक्षितत्वादुभयविशिष्टैकासंभवाद्विकल्पः। यश्चान्तरतमो नासौ दीर्घो यश्च दीर्घो नासावन्तरतम इति] द्वयोॠकारयो रेफद्वययुक्तत्वाद्विवृतत्वाच्च कदाचिद्रेफद्वययुक्त ऋ भवति; कदाचिद्विवृत ऋकारः। ऌकारेऽपि कदाचिदृकारान्तरतम ऋकारः कदाचिद् ऌकारान्तरतम ऌकार इति साम्यमुभयोः पक्षयोः; लपरत्वमिति; व्याख्यास्यामीत्यर्थः। रपर इत्यत्र र इति लणिति लकाराकारेण प्रत्याहार आश्रीयते; तत्रान्तरतम्यादृकारस्याण् रपरः, ऌकारणस्याण् लपरः; असत्यामिति; असत्यां सवर्णसंज्ञायाम् "उरण् रपर" इत्यत्र ऌकारग्रहणं कर्तव्यं भवति। प्रक्लृप्यमानामिति; "कृत्यचः" इति णत्वप्रसङ्गः। त्रिभिश्चेति। पूर्वस्मादयं विशेषः—पूर्वत्र शरन्तर्भूतोऽपि षकारः साक्षाण्णत्वनिमित्तत्वाद् व्यवधायकत्वेन नाश्रीयते। इह तु तस्यानुपादानमेव। वर्णैकदेशा इति; अवयवस्य स्वव्यापारानिवर्तनात्। अग्रहणपक्षे तु क्षुभ्नादेराकृतिगणत्वाण्णत्वाभावः; ऋदिताम् ऌदितां च भेदेनानुबन्धनिर्देशाद् भेदेन चोपादानादनुबन्धकार्येषु परस्परग्रहणाभावाद्व्यतिकराभाव[3]:।

उ.—उभयोः प्राशस्त्यमुपपादयति—एकैकस्मिन्निति; ऋकारे ऌकारे चेत्यर्थः। पूर्वमेवेति; 'वक्ष्यत्येतत्' 'ऋत इति वक्ष्यामि' इति भाष्यद्वयव्याख्यानावसरे। इह होतृ ऋकार इत्यत्र ऋकारद्वयस्थाने रेफद्वययुक्तत्वेन विवृतेन चोभयान्तरतम्यात् पर्यायेण द्वयं भवति। होतृ ऌकार इत्यत्र तूभयान्तरतमाभावादन्यतरान्तरतम ऋकार ऌकारश्च पर्यायेण भवतीत्यर्थः। उभयोः पक्षयोः; "ऋति ऋ वा" "ऌति ऌ वा" इति वचनपक्षस्य

---

[1] इह तु। [2] कोणान्तर्गतो भागः क्वचिन्न दृश्यते। [3] क—संकराभावः।

सवर्णसंज्ञावचनपक्षस्य चेत्यर्थः । भाष्ये—अभिहितं भवति ; सवर्णग्रहणेनेत्यर्थः । भाष्ये—वक्ष्यामीति ; नापूर्ववचनाभिप्रायं, किन्तु व्याख्यानाभिप्रायमित्याह—व्याख्यास्यामीति । व्याख्यानमेवाह—पर इति । लकारेणेति ; रेफस्येत्यादिः । आन्तरतम्यादिति ; रेश्रुते रेफपर लश्रुते लपर इत्यर्थः । तचेति भाष्यमपूर्ववचनाभिप्रायम् । तत्र सवर्णसंज्ञायां सत्यां व्याख्यानमेव । असत्यां त्वपूर्ववचनमित्यभिप्रायमाह—असत्यामिति । कर्तव्यम्; अपूर्वमित्यादिः । भिन्न । पदस्थत्वान्निमित्तस्य "रषाभ्याम्" इति णत्वाप्राप्तिमाशङ्क्याह—कृत्यच इति । भाष्ये—चुटुचिति; "अट् कुप्वाङ्नुम्व्यवायेऽपि" इत्युक्तयेत्यर्थः । पूर्वमते लव्यवधाने णत्वं न स्यादिति शङ्कां निराकुर्वन् ऋदुपादानलृदुपादानाभ्यामेव मतद्वयस्य भेद इत्याह—पूर्वस्मादिति साक्षादिति ; रषाभ्यामिति वचनादित्यर्थः । [1] लकारव्यवधाने णत्वं [2] नेत्युक्तौ लकारव्यवधाने कथं निषेधसिद्धिः ; अत आह—भाष्ये - वर्णैकदेशा इति । समुदायस्यैव कार्यव्यापारो नावयवस्य । यथा स्वरव्यञ्जनवर्णग्रहणेन पूर्वभागस्याग्रहणं तथा लकारावयवस्य लग्रहणेनाग्रहणात् कथं प्रक्लृप्यमानमित्यत्र णत्वाभावः; अत आह—अवयवस्येति । अग्रहणेति ; वर्णग्रहणेनेत्यादिः । अस्मिन् पक्षे रषाभ्यामित्यत्र ऋवर्णग्रहणं 'मातॄणाम्' इत्याद्यर्थं कर्तव्यम् । तत्र ऋलृवर्णयोः सावर्ण्यपक्षे क्लृप्यमानमित्यत्र, असावर्ण्येऽपि प्रक्लृप्यमानमित्यत्र च णत्वं क्षुभ्नादित्वान्न भवतीत्याह क्षुभ्नादिरिति । ऋलृवर्णयोः सावर्ण्ये "नाग्लोपिशास्वृदिताम्" इत्युक्तं गमेरपि स्यात् । "पुषादि द्युताद्लृदितः" इत्युक्तं चकास्तेरपि स्यात्; अत आह—ऋदितामिति; चकासृ गम्लृ इति भेदेनानुबन्धनिर्देशः तस्मात्, ऋदिताम् लृदित इति भेदेनोपादानं तस्माच्चेत्यर्थः । परत्वेनेति—परत्वेन परस्य स्याग्रहणात्, ऋकारेण लकारस्य लृकारेण ऋकारस्य चाग्रहणादित्यर्थः । अहणे तु लृकारं ऋकारं [3] वा इतं कृत्वा ऋदित लृदित इति वा ब्रूयात् न तु प्रत्येकं निर्दिशेदिति भावः ।

## सू. नाज्झलौ १ । १ । १० ।

॥ वा ॥ **अज्झलोः प्रतिषेधे शकारप्रतिषेधोऽज्झल्त्वात् (तत्र सवर्णलोपे दोषः)** ॥

**भा.—अज्झलोः प्रतिषेधे शकारस्य शकारेण सवर्णसंज्ञायाः प्रतिषेधः प्राप्नोति । किं कारणम् ? अज्झल्त्वात् । अच्चैव हि शकारः, हल् च । कथं तावदच्त्वम् ? इकारः सवर्णग्रहणेन शकारमपि गृह्णातीत्येवमच्त्वम् । हल्षु चोपदेशाद्धल्त्वम् । तत्र को दोषः ?**

॥ वा ॥ **तत्र सवर्णलोपे दोषः** ॥

**भा.—तत्र सवर्णलोपे दोषो भवति - परश्शतानि कार्याणि— "झरो झरि सवर्णे" इति लोपो न प्राप्नोति ।**

---

[1] क—लकारस्य व्यवाये । [2] क—उक्तत्वात् । [3] क—चैकम् ।

॥ वा ॥ सिद्धमनच्त्वात् ॥

भा.—सिद्धमेतत्। कथम्? अनच्त्वात्। कथमनच्त्वम्? "स्पृष्टं करणं स्पर्शानाम्"। "ईषत्स्पृष्टमन्तस्थानाम्"। "विवृतमूष्मणाम्"। ईषदित्येवानुवर्तते। "स्वराणां च" विवृतम्। ईषदिति निवृत्तम्।

॥ वा ॥ वाक्यापरिसमाप्तेर्वा ॥

भाः—वाक्यापरिसमाप्तेर्वा पुनः सिद्धमेतत्। किमिदं वाक्यापरिसमाप्तेरिति? वर्णानामुपदेशस्तावत्। उपदेशोत्तरकालेत्संज्ञा। इत्संज्ञोत्तरकाल "आदिरन्त्येन सहेता" इति प्रत्याहारः। प्रत्याहारोत्तरकाला सवर्णसंज्ञा। सवर्णसंज्ञोत्तरकालम् "अणुदित्सवर्णस्य चाप्रत्ययः" इति सवर्णग्रहणम्। एतेन सर्वेण समुदितेन वाक्येनान्यत्र सवर्णानां ग्रहणं भवति। न चात्रेकारः शकारं गृह्णाति। यथैव तर्हीकारः शकारं न गृह्णाति एवमीकारमपि न गृह्णीयात्। तत्र को दोषः? कुमारी ईहते कुमारीहते "अकः सवर्णे" इति दीर्घत्वं न प्राप्नोति। नैष दोषः। यदेतद् "अकः सवर्णे" इत्यत्र प्रत्याहारग्रहणं, तत्रेकार ईकारं गृह्णाति; शकारं न गृह्णाति।

प्र.—अकारहकारयोरिकारशकारयोश्च तुल्यस्थानप्रयत्नत्वात सवर्णसंज्ञा प्राप्ता प्रतिषिध्यते। अत एव च निर्देशादचामज्भिः हलां हल्भिः सवर्णत्वानिषेधः। अज्झलोरिति; प्रकृतत्वात् सवर्णसंज्ञाया इति बोद्धव्यम्। शकारप्रतिषेध इति; द्विवचनान्तस्य समासो भेदाधिष्ठानत्वात् सवर्णसंज्ञायाः। इकार इति; अत्र हि सूत्र अजितीकारो गृह्यमाणः सवर्णं गृह्णातीति शकारस्यापि ग्रहणमस्ति। स्वात्मनि क्रियाविरोधाद् अत्रैव सूत्रे इदं न व्याप्रियत इति सवर्णत्वनिषेध इकारशकारयोर्नास्ति। "यस्येति च" इत्यादौ शकारः इकारेण न गृह्यतेऽनेन सवर्णत्वानिषेधात्। इह तु स्वात्मनि व्यापारो नास्ति, अस्ति च पूर्वेण सवर्णत्वमिकारशकारयोरिति भावः। 'प्रकल्प्य चापवादविषयम्' इति न्यायोऽत्र नास्ति अपवादस्यैवासंपत्त्या। परश्शतानीति शतात् पराणि शतादधिकानीत्यर्थः। "कर्तृकरणे कृता बहुलम्" इति

बहुलवचनात् समासः। पारस्करादित्वात् सुडागमः, सकारस्य श्चुत्वम्। "अनाचि च" इति द्विवचनम्। "झरो झरि" इति लोपाप्रसङ्गात् त्रिशकारकश्रवणप्रसङ्गः। "शरोऽचि" "अनाचि च" इत्यत्र त्विकारेण शकारो न गृह्यते, अनेन सवर्णत्वनिषेधादित्यस्ति शकारस्य द्विवचनम्। सिद्धमनच्त्वादिति; सूत्रप्रत्याख्यानसाधारणमुक्तम्। प्रयत्नभेदादज्झलोः सवर्णसंज्ञायाः प्राप्तिरेव नास्तीत्यर्थः। वाक्यापरिसमाप्तेरिति। भवतु वा तुल्यास्यप्रयत्नत्वं; तथापीहेकारेण शकारो न गृह्यते सवर्णसंज्ञाया अस्मिन् सूत्रेऽनिष्पादात्। अस्मिन् हि सूत्रे निष्पन्ने सत्यपवादविषयपरिहारेणेष्टे विषये सवर्णसंज्ञा प्रवर्तते; न त्वेतत्सूत्रानिष्पत्त्यवस्थायाम्। ततश्चाङ्गेषूपदेशेत्संज्ञाप्रत्याहारसवर्णत्वेषु निष्पन्नेषु "अणुदित्सवर्णस्य" इत्येतद् "अस्य च्वौ" इत्यादिषु प्रवर्तते; न त्वङ्गेषूपदेशादिषु, नापि स्वात्मनि। ततश्चात्र सूत्रेऽङ्गानिष्पत्त्या "अणुदित् सवर्णस्य" अप्रवर्तनादिकारेण शकारस्याग्रहणात् सवर्णत्वं शकारयोः सिद्धम्। एवमीकारोऽप्यत्रेकारेण न गृह्यत इतीकारशकारयोः सवर्णत्वमस्तीति कुमारी शेते इत्यत्र सवर्णदीर्घत्वं प्राप्तम् अचीत्यनुवृत्त्या निवार्यते। तत्र क्व ग्रहणकशास्त्रं प्रवर्तते क्व नेति विषयविभागप्रदर्शनाय चोद्यं करोति— यथैव तर्हीति। इकारस्य ह्यत्राग्राहकत्वं दृष्टमिति "अकः सवर्णे दीर्घः" इत्यत्रापि प्राप्तमिति प्रश्नः।

उ.—सूत्रप्रयोजनमाह—अकारेति। तुल्येति; हकारस्य कण्ठ्यत्वात् शकारस्य तालव्यत्वादूष्मणां विवृतत्वादित्यर्थः। सूत्रस्यार्थान्तरं निराह—अत एवेति; सवर्णदीर्घ इकारस्य पूर्वसवर्णं च कृत्वा निर्देशादित्यर्थः। अच्च झल् चेति न विग्रहः; फलतो विशेषाभावात्। एककार्ये साहित्यस्येतरेतरयोगत्वात्, द्वन्द्वनिर्देशादप्यज्झलोरेव संज्ञानिषेधलक्षणैककार्ययोग इत्याहुः। अचामज्भिः हलां हल्भिश्च सावर्ण्यनिषेधेऽचीति वर्तमाने "अकः सवर्णे दीर्घः," "झरो झरि सवर्णे" इति च सवर्णग्रहणं न कुर्यादित्यपि ज्ञेयम्। 'न धातुलोपे' 'न पदान्त' 'न लुमता' इत्यादिनिषेधग्रहणशङ्कां वारयति—प्रकृतत्वादिति; प्रतिषेधपदस्य सवर्णसंज्ञाप्रतिषेधरूपविशेषपरत्वमित्यर्थः। शकारस्य शकारेणेत्यनेन शकारयोः प्रतिषेध इति विग्रहो दर्शितः। तल्लोपसर्जनस्य द्वित्वसंख्यावगतौ मानमाह—भेदेति; भिन्नविषयत्वादित्यर्थः। तुल्यत्वघटिता संज्ञा; तुल्यता च भिन्नयोरेवेति भावः। अचां मध्ये शकारस्यापाठात् कथं निषेधप्रसक्तिः; अत आह—अत्र हीति। "नाज्झलौ" इति निषेधात् कथमिकारशकारयोः सावर्ण्यम्—अत आह—स्वात्मनीति; निष्पन्नं शास्त्रं स्वविषये प्रवर्तते। विषयविषयित्वस्य भेदगर्भत्वात् स्वस्य स्वविषयत्वं न संभवति। अध्ययनविधिस्तु स्वाध्यायत्वेन रूपेण स्वस्मिन्नपि

प्रवर्तेते । न चाऽऽज्झल्त्वव्यतिरिक्तरूपभेदोऽस्तीति भावः । तर्हि कुत्र 'तस्य प्रवृत्तिः'; अत आह—यस्येति चेति । तेन "दिशादिभ्यो यत् दिश्यम्, "। अत्र "यस्येति" इति शकारस्य लोपो न भवति । प्रसक्तिमाह—अस्ति चेति । ननु प्रकल्प्यापवादन्यायेन पूर्वेणात्र सवर्णत्वं न भविष्यति; अत आह—प्रकल्प्येति । असंपत्त्या; स्वात्मन्यप्राप्त्या । समासे रूपनिर्ग्रहः च कथयन् शकारस्य लोपाभावेऽनिष्टं दर्शयति—शतादिति ननु कथमत्र शकारस्य द्वित्वम्, इकारेण शकारस्यापि ग्रहणेन प्रथमस्य यत्वेऽपि द्वितीयस्याच्त्वमप्राप्ति "अनचि च" इति निषेधात्; अत आह—शरोऽचीति; प्रसङ्गादेतदुक्तम् । अनचिचेत्यस्यात्रोपयोगः । अनचि चेति पर्युदासपक्षे हलीत्यर्थः । तथा च द्वितीयशकारस्य हल्त्वप्यस्तीति द्वित्वप्राप्तौ "शरोऽचि" इति निषेधः स्यात् । तन्निरासाय "शरोऽचि" इत्युक्तमिति केचित् । त वाक् त्वक् इत्यादाववसानेऽपि द्वित्वसिद्धये प्रतिषेधपक्ष एव भाष्ये स्थित इति चिन्त्यम् । ननूष्मणामीषद्विवृतत्वे सूत्रमिदं व्यर्थम्; अत आह—सूत्रेति । प्रयत्नभेदेन सावर्ण्याप्रसक्तौ समाधानान्तरानुपयोगमाशङ्क्याह—भवतु चेति । अस्मिन्सूत्रे; एतत्सूत्रे निष्पद्यमाने एतन्निष्पत्तिकाल इति यावत् । तथा च सवर्णसंज्ञासापेक्षग्रहणकशास्त्रमेतस्मिन्न प्रवर्तत इत्यर्थः; एतदेव स्पष्टयति—अस्मिन् हीति । इष्टविषये; केवलेष्वक्षु हल्षु च । न त्विति । अपवादपरिहारस्यैतत्सूत्रानन्तरभावित्वात् । भाष्योक्तानामुपदेशादीनामुपयोगमाह—ततश्चेति । अङ्गेषु; अणुदित्सूत्रस्येत्यादिः । "अणुदित्" इत्यस्य सवर्णत्वं साक्षादङ्गम्, तस्य "नाज्झलौ" इत्येतत्, तस्य प्रत्याहारः, तस्येत्संज्ञा, तस्या उपदेशः, इति क्रमेणाङ्गत्वम् । "अणुदित्" इति सूत्रेऽणित्युपदिष्टानामेव ग्रहणं न दीर्घादीनामित्याह—नापि स्वात्मनीति । प्रकृतोपयोगमाह—ततश्चेति । अत्र; "नाज्झलौ" इत्यत्र । सूत्रेऽप्रवर्तनादित्यन्वयः । अङ्गानिष्पत्त्या; एतदप्रवृत्तौ हेतुः । शकारयोरिति; ततश्च परश्शतानीत्यत्र शकारलोपः सिद्ध इत्यर्थः । नापि स्वात्मनीत्यस्य प्रयोजनमाह—एवमिति । भाष्ये—अन्यत्र; "अस्य च्वौ" इत्यादौ । प्रदर्शनाय; ज्ञापनाय । विवृत इकारो न सवर्णग्राहकः इकारत्वात् "नाज्झलौ" इत्यत्रेकारवदित्यनुमानं शङ्काबीजमित्याह—इकारस्य हीति । अत्र; "नाज्झलौ" इत्यत्र । उक्तानुमानेऽङ्गस्यात्मगतत्वमुपाधिः । अन्यथाऽणुदित्सूत्रं व्यर्थ स्यादित्युत्तराभिप्रायः ।

**भा.—अपर आह—'अज्झलोः प्रतिषेधे शकारप्रतिषेधोऽज्झल्त्वात्' । अज्झलोः प्रतिषेधे शकारस्य शकारेण सवर्णसंज्ञायाः प्रतिषेधः प्राप्नोति । किं कारणम्? अज्झल्त्वात् अच्चैव हि शकारः हल् च । कथं तावदच्त्वम् ? इकारः सवर्णग्रहणेन शकारमपि गृह्णातीत्येवमच्त्वम्, हल्षूपदेशाद्धल्त्वम् । तत्र को दोषः ? 'तत्र सवर्णलोपे दोषः' । तत्र सवर्णलोपे दोषो भवति । परश्शतानि कार्याणि । "झरो झरि सवर्णे" इति लोपो न प्राप्नोति । 'सिद्धमनच्त्वात्' । सिद्धमेतत् । कथम् ? अनच्त्वात् ! कथमनच्त्वम् ? वाक्यापरिसमाप्तेर्वा' । उक्ता वाक्या-**

---

१ वर्णे । २ क—अणुदिति ।

**परिसमाप्तिः। अस्मिन् पक्षे वत्यतदसमर्थितं भवति। एतच्च समर्थितम्। कथम्? अस्तु वा शकारस्य शकारेण सवर्णसञ्ज्ञा, मा वा भूत्। ननु चोक्तम् 'परश्शतानि कार्याणि' "झरो झरि सवर्णे" 'इति लोपो न प्राप्नोति' इति। मा भूल्लोपः। ननु च भेदो भवति --सति लोपे द्विशकारकम्, असति लोपे त्रिशकारकम्। नास्ति भेदः—असत्यपि लोपे द्विशकारकमेव। कथम्? विभाषा द्विर्वचनम्। एवमपि भेदः—असति लोपे कदाचिद्द्विशकारकम्, कदाचित् त्रिशकारकम्। सति लोपे, द्विशकारकमेव। स एष कथं भेदो न। स्याद्यदि नित्यो लोपः स्यात्। विभाषा तु स लोपः। यथाऽभेदस्तथास्तु॥ नाज्झलौ ॥१०॥**

**इति श्रीभगवत्पतञ्जलिविरचिते महाभाष्ये**
**प्रथमाध्यायप्रथमपादे चतुर्थमाह्निकम्।**

---

प्र.— अनच्त्वमेव वाक्यापरिसमाप्त्या साध्यते न तु प्रयत्नभेदेनेत्याह— अपर आहेति। अस्मिन् पक्ष इति; एकत्र हि साध्ये हेतुविकल्पो भवति, इह तु साध्यभेदः। सिद्धेरनच्त्वं हेतुः, अनच्त्वस्य वाक्यापरिसमाप्तिः। एतच्चेति; 'अस्तु वा ग्रहणमिकारेण शकारस्य' इति वाक्यशेषाध्याहारात् प्रतिज्ञाविकल्पार्थो वाशब्द इत्यर्थः। ननु चेति; श्रुतिकृतं भेदमभ्युपगम्योच्यते। स एष कथं भेदो नेति; अत्रैव [1]'च्छेदः'। भेद एवेत्यर्थः। इतर आह—स्याद्भेदो यदि नित्यो लोपः स्यात्, विभाषा तु स लोप इति। ततो नास्ति भेद इत्यर्थः। द्विर्वचनमपि विभाषा "नरोऽनुनासिकेऽनुनासिको वा" इत्यतो वेत्यनुवर्तनात्। लोपोऽपि विभाषा "झयो होऽन्यतरस्याम्" इत्यतोऽन्यतरस्यामित्यनुवर्तनादित्यर्थः। १० ॥

इति श्रीजैयटपुत्रकैयटकृते महाभाष्यप्रदीपे
प्रथमस्याध्यायस्य प्रथमे पादे
चतुर्थमाह्निकम् ॥ ४ ॥

---

1 क. भेदः।

उ—न त्विति; अध्याहारप्रसङ्गादित्यर्थः। एकत्वेति; 'एकार्थास्तु[1] विकल्पेरन्'' इति न्यायादिति भावः। सिद्धेः; सवर्णनिषेधाभावप्रतीतेः। मा भूदित्यनेन सूचितां प्रतिज्ञामाह—अस्तु चेति। ननु सजातीयव्यञ्जनपरस्यैकशाकिकस्य च न ग्रहणे विशेषः; अत आह—श्रुतीति; शकारस्य शकारेण सावर्ण्यानङ्गीकारे लोपाभावं शङ्कते—भाष्ये—ननु चोक्तमिति। लोपाभावमङ्गीकरोति भाष्ये—मा भूदिति। तर्हि द्विशकारं न स्यादिति शङ्कते—ननु च भेद इति भाष्ये। द्विर्वचनाभावपक्षे द्विशकारं संभवतीत्याह भाष्ये—नास्ति भेद इति। भाष्ये—द्विशकारकमेव; द्विशकारकस्यैव। द्विर्वचनपक्षे लोपाभावे त्रिशकारकमेव स्यात्, न द्विशकारकमिति शङ्कते—भाष्ये—एवमिति। लोपवादिनापि त्रिशकारकं कदाचिदङ्गीकार्यमित्याह—भाष्ये—स्याद्भेद इति। लोपवादिनो लोपस्य विकल्पितत्वात् द्विशकारकं त्रिशकारकं चेति रूपद्वयम्। लोपानङ्गीकारेऽपि द्विर्वचने त्रिशकारं तदभावे द्विशकारमिति रूपद्वये न कश्चिद्भेद इति समुदायतात्पर्यम्। भाष्ये एवमपीत्यनेन भेद एवेत्युक्त्वा तदुपपादनाय यदि लोपो न स्यादिति वक्तव्ये यदि लोप इत्युक्तिः अयुक्तेत्याशङ्क्य [2]छित्वा व्याचष्टे—एष इति। अत्रैवेति[3] स्याद्भेद इत्यादेर्न पूर्वैकवाक्यत्वमित्यर्थः। इतरः; अलोपवादी। स्यादित्येतदनुपङ्गेण पूरयति—भेद इति; भाष्ये स्याद्भेद इति भेदशब्दः प्रदीपस्थः कैश्चित् प्रक्षिप्तः। भाष्ये स्याद्भेदो यदि नित्य इति पाठे पूर्वैकवाक्यत्वशङ्कानवकाशः। भित्वा व्याख्यानमनुपयुक्तं स्यादित्याहुः। उभयोर्विकल्पमुपपादयति द्विर्वचनमित्यादिना। यथा न भेदः तथास्तु इति भाष्यं द्विशकारं त्रिशकारमिति-रूपद्वयं लोपपक्षेऽलोपपक्षे च समानम्। तथा चालोपपक्षोऽपि सम्यगेवेत्याशयः।

इति श्रीमहामहोपाध्यायाद्वैतविद्याचार्यराघवसोमयाजिकुलावतंसश्रीतिरुमलाचार्यवर्यसूनोः अन्नम्भट्टस्य कृतौ महाभाष्यप्रदीपोद्द्योतने प्रथमस्याध्यायस्य प्रथमे पादे चतुर्थमाह्निकम्।

---

[1] मी—सू—XII—3 10. [2] ख—भित्वा। [3] क—ख—तत्रैवेति।